नाट्यशास्त्रम्
NOT INCLUDED: Adhyayas 17, 31, 32, 34

श्रीरस्तु
भरतमुनिप्रणीतं नाट्यशास्त्रम्

अथ प्रथमो ऽध्यायः
प्रणम्य शिरसा देवौ पितामहमहेश्वरौ /
नाट्यशास्त्रं प्रवक्ष्यामि ब्रह्मणा यदुदाहृतम् // ना. शा_१.१ //
समाप्तजप्यं व्रतिनं स्वसुतैः परिवारितम् /
अनध्याये कदाचित्तु भरतं नाट्यकोविदम् // ना. शा_१.२ //
मुनयः पर्युपास्यैनमात्रेयप्रमुखाः पुरा /
पप्रच्छुस्ते महात्मानो नियतेन्द्रियबुद्धयः // ना. शा_१.३ //
यो ऽयं भगवता सम्यग्ग्रथितो वेदसम्मितः /
नाट्यवेदं कथं ब्रह्मन्नुत्पन्नः कस्य वा कृते // ना. शा_१.४ //
कत्यङ्गः किंप्रमाणश्च प्रयोगश्चास्य कीदृशः /
सर्वमेतद्यथातत्त्वं भगवन्वक्तुमर्हसि // ना. शा_१.५ //
तेषां तु वचनं श्रुत्वा मुनीनां भरतो मुनिः /
प्रत्युवाच ततो वाक्यं नाट्यवेदकथां प्रति // ना. शा_१.६ //
भवद्भिः शुचिभिर्भूत्वा तथाऽवहितमानसैः /
श्रूयतां नाट्यवेदस्य सम्भवो ब्रह्मनिर्मितः // ना. शा_१.७ //
पूर्वं कृतयुगे विप्रा वृत्ते स्वायंभुवे ऽन्तरे /
त्रेतायुगे ऽथ सम्प्राप्ते मनोर्वैवस्वतस्य तु // ना. शा_१.८ //
ग्राम्यधर्मप्रवृत्ते तु कामलोभवशं गते /
ईर्ष्याक्रोधादिसंमूढे लोके सुखितदुःखिते // ना. शा_१.९ //
देवदानवगन्धर्वयक्षरक्षोमहोरगैः /
जम्बुद्वीपे समाक्रान्ते लोकपालप्रतिष्ठिते // ना. शा_१.१० //
महेन्द्रप्रमुखैर्देवैरुक्तः किल पितामहः /
क्रीडनीयकमिच्चामो दृष्यं श्रव्यं च यद्भवेत् // ना. शा_१.११ //
न वेदव्यवहारो ऽयं संश्राव्यः शूद्रजातिषु /
तस्मात्सृजापरं वेदं पञ्चमं सार्ववर्णिकम् // ना. शा_१.१२ //
एवमस्त्विति तानुक्त्वा देवराजं विसृज्य च /
सस्मार चतुरो वेदान्योगमास्थाय तत्त्ववित् // ना. शा_१.१३ //
नेमे वेदा यतः श्राव्याः स्त्रीशूद्राद्यासु जातिषु /
वेदमन्यत्ततः स्रक्ष्ये सर्वश्राव्यं तु पञ्चमम् // ना. शा_१.१३* //
धर्म्यमर्थ्यं यशस्यं च सोपदेश्यं ससङ्ग्रहम् /
भविष्यतश्च लोकस्य सर्वकर्मानुदर्शकम् // ना. शा_१.१४ //
सर्वशात्रार्थसम्पन्नं सर्वशिल्पप्रवर्तकम् /
नाट्याख्यं पञ्चमं वेदं सेतिहासं करोम्यहम् // ना. शा_१.१५ //

एवं सङ्कल्प्य भगवान् सर्ववेदाननुस्मरन् /
नाट्यवेदं ततश्चक्रे चतुर्वेदाङ्गसम्भवम् // ना. शा_१.१६ //
जग्राह पाठ्यमृग्वेदात्सामभ्यो गीतमेव च /
यजुर्वेदादभिनयान् रसानाथर्वणादपि // ना. शा_१.१७ //
वेदोपवेदैः सम्बद्धो नाट्यवेदो महात्मना /
एवं भगवता सृष्टो ब्रह्मणा सर्ववेदिना // ना. शा_१.१८ //
उत्पाद्य नाट्यवेदं तु ब्रह्मोवाच सुरेश्वरम् /
इतिहासो मया सृष्टः स सुरेषु नियुज्यताम् // ना. शा_१.१९ //
कुशला ये विदग्धाश्च प्रगल्भाश्च जितश्रमाः /
तेष्वयं नाट्यसंज्ञो हि वेदः संक्राम्यतां त्वया // ना. शा_१.२० //
तच्छृत्वा वचनं शक्रो ब्रह्मणा यदुदाहृतम् /
प्राञ्जलिः प्रणतो भूत्वा प्रत्युवाच पितामहम् // ना. शा_१.२१ //
ग्रहणे धारणे ज्ञाने प्रयोगे चास्य सत्तम /
अशक्ता भगवन् देवा अयोग्या नाट्यकर्मणि // ना. शा_१.२२ //
य इमे वेदगुह्यज्ञा ऋषयः संशितव्रताः /
एते ऽस्य ग्रहणे शक्ताः प्रयोगे धारणे तथा // ना. शा_१.२३ //
श्रुत्वा तु शक्रवचनं मामाहाम्बुजसम्भवः /
त्वं पुत्रशतसंयुक्तः प्रयोक्ताऽस्य भवानघ // ना. शा_१.२४ //
आज्ञापितो विदित्वाऽहं नाट्यवेदं पितामहात् /
पुत्रानध्यापयामास प्रयोगं चापि तत्त्वतः // ना. शा_१.२५ //
शाण्डिल्यं चैव वात्स्यं च कोहलं दत्तिलं तथा /
जटिलम्बष्टकौ चैव तण्डुमग्निशिखं तथा // ना. शा_१.२६ //
सैन्धवं सपुलोमानं शाड्वलिं विपुलं तथा /
कपिञ्जलिं वादिरं च यमधूम्रायणौ तथा // ना. शा_१.२७ //
जम्बुध्वजं काकजङ्घं स्वर्णकं तापसं तथा /
कैदारिं शालिकर्णं च दीर्घगात्रं च शालिकम् // ना. शा_१.२८ //
कौत्सं ताण्डायनिं चैव पिङ्गलं चित्रकं तथा /
बन्धुलं भल्लकं चैव मुष्टिकं सैन्धवायनम् // ना. शा_१.२९ //
तैतिलं भार्गवं चैव शुचिं बहुलमेव च /
अबुधं बुधसेनं च पाण्डुकर्णं सुकेरलम् // ना. शा_१.३० //
ऋजुकं मण्डकं चैव शम्बरं वञ्जुलं तथा /
मागधं सरलं चैव कर्तारं चोग्रमेव च // ना. शा_१.३१ //
तुषारं पार्षदं चैव गौतमं बादरायणम् /
विशालं शबलं चैव सुनामं मेषमेव च // ना. शा_१.३२ //
कालियं भ्रमरं चैव तथा पीठमुखं मुनिम् /
नखकुट्टाश्मकुट्टौ च षट्पदं सोत्तमं तथा // ना. शा_१.३३ //
पादुकोपानहौ चैव श्रुतिं चाषस्वरं तथा /
अग्निकुण्डाज्यकुण्डौ च वितण्ड्य ताण्ड्यमेव च // ना. शा_१.३४ //
कर्तराक्षं हिरण्याक्षं कुशलं दुस्सहं तथा /

लाजं भयानकं चैव बीभत्सं सविचक्षणम् // ना. शा_१.३५ //
पुण्ड्राक्षं पुण्ड्रनासं चाप्यसितं सितमेव च /
विद्युज्जिह्वं महाजिह्वं शालङ्कायनमेव च // ना. शा_१.३६ //
श्यामायनं माठरं च लोहिताङ्गं तथैव च /
संवर्तकं पञ्चशिखं त्रिशिखं शिखमेव च // ना. शा_१.३७ //
शङ्खवर्णमुखं शण्डं शङ्कुकर्णमथापि च /
शक्रनेमिं गभस्तिं चाप्यंशुमालिं शठं तथा // ना. शा_१.३८ //
विद्युतं शातजङ्घं च रौद्रं वीरमथापि च /
पितामहाज्ञयाऽस्माभिर्लोकस्य च गुणेप्सया // ना. शा_१.३९ //
प्रयोजितं पुत्रशतं यथाभूमिविभागशः /
यो यस्मिन्कर्मणि यथा योग्यस्तस्मिन् स योजितः // ना. शा_१.४० //
भारतीं सात्वतीं चैव वृईत्तिमारभटीं तथा /
समाश्रितः प्रयोगस्तु प्रयुक्तो वै मया द्विजाः // ना. शा_१.४१ //
परिगृह्य प्रणम्याथ ब्रह्मा विज्ञापितो मया /
अथाह मां सुरगुरुः कैशिकिमपि योजय // ना. शा_१.४२ //
यच्च तस्याः क्षमं द्रव्यं तद् ब्रूहि द्विजसत्तम /
एवं तेनास्म्यभिहितः प्रत्युक्तश्च मया प्रभुः // ना. शा_१.४३ //
दीयतां भगवन्द्रव्यं कैशिक्याः सम्प्रयोजकम् /
नृत्ताङ्गहारसम्पन्ना रसभावक्रियात्मिका // ना. शा_१.४४ //
दृष्टा मया भगवतो नीलकण्ठस्य नृत्यतः /
कैशिकी ष्लक्ष्णनैपथ्या शृङ्गाररससम्भवा // ना. शा_१.४५ //
अशक्या पुरुषैः सा तु प्रयोक्तुं स्त्रीजनादृते /
ततो ऽसृजन्महातेजा मनसाऽप्सरसो विभुः // ना. शा_१.४६ //
नाट्यालङ्कारचतुराः प्रादान्मह्यं प्रयोगतः /
मञ्जुकेशीं सुकेशीं च मिश्रकेशीं सुलोचनाम् // ना. शा_१.४७ //
सौदामिनीं देवदत्तां देवसेनां मनोरमाम् /
सुदतीं सुन्दरीं चैव विदग्धां विपुलां तथा // ना. शा_१.४८ //
सुमालां सन्ततिं चैव सुनन्दां सुमुखीं तथा /
मागधीमर्जुनीं चैव सरलां केरलां धृतिम् // ना. शा_१.४९ //
नन्दां सपुष्कलां चैव कलमां चैव मे ददौ /
स्वातिर्भाण्डनियुक्तस्तु सह शिष्यैः स्वयम्भुवा // ना. शा_१.५० //
नारदाद्याश्च गन्धर्वा गानयोगे नियोजिताः /
एवं नाट्यमिदं सम्यग्बुद्ध्वा सर्वैः सुतैः सह // ना. शा_१.५१ //
स्वातिनारदसंयुक्तो वेदवेदाङ्गकारणम् /
उपस्थितो ऽहं ब्रह्माणं प्रयोगार्थं कृताञ्जलिः // ना. शा_१.५२ //
नाट्यस्य ग्रहणं प्राप्तं ब्रूहि किं करवाण्यहम् /
एतत्तु वचनं श्रुत्वा प्रत्युवाच पितामहः // ना. शा_१.५३ //
महानयं प्रयोगस्य समयः प्रत्युपस्थितः /
अयं ध्वजमहः श्रीमान् महेन्द्रस्य प्रवर्तते // ना. शा_१.५४ //

अत्रेदानीमयं वेदो नाट्यसंज्ञः प्रयुज्यताम् /
ततस्तस्मिन्ध्वजमहे निहतासुरदानवे // ना. शा_१.५५ //
प्रहृष्टामरसंकीर्णे महेन्द्रविजयोत्सवे /
पूर्वं कृता मया नान्दी ह्याशीर्वचसंयुता // ना. शा_१.५६ //
अष्टाङ्गपदसंयुक्ता विचित्रा वेदनिर्मिता /
तदन्ते ऽनुकृतिर्बद्धा यथा दैत्याः सुरैर्जिताः // ना. शा_१.५७ //
सम्फेटविद्रवकृता च्चेद्यभेद्याहवात्मिका /
ततो ब्रह्मादयो देवाः प्रयोगपरितोषिताः // ना. शा_१.५८ //
प्रददुर्मत्सुतेभ्यस्तु सर्वोपकरणानि वै /
प्रीतस्तु प्रथमं शक्रो दत्तवान्स्वं ध्वजं शुभम् // ना. शा_१.५९ //
ब्रह्मा कुटिलकं चैव भृङ्गारं वरुणः शुभम् /
सूर्यश्चत्रं शिवस्सिद्धिं वायुर्व्यजनमेव च // ना. शा_१.६० //
विष्णुः सिंहासनं चैव कुबेरो मुकुटं तथा /
श्राव्यत्वं प्रेक्षणीयस्य ददौ देवी सरस्वती // ना. शा_१.६१ //
शेषा ये देवगन्धर्वा यक्षराक्षसपन्नगाः /
तस्मिन्सदस्यभिप्रेतान्नानाजातिगुणाश्रयान् // ना. शा_१.६२ //
अंशांशैर्भाषितं भावान् रसान् रूपं बलं तथा /
दत्तवन्तः प्रहृष्टास्ते मत्सुतेभ्यो दिवौकसः // ना. शा_१.६३ //
एवं प्रयोगे प्रारब्धे दैत्यदानवनाशने /
अभवन्क्षुभिताः सर्वे दैत्या ये तत्र सङ्गताः // ना. शा_१.६४ //
विरूपाक्ष पुरोगांश्च विघ्नान्प्रोत्साह्य ते ऽब्रुवन् /
न क्षमिष्यामहे नाट्यमेतदागम्यतामिति // ना. शा_१.६५ //
ततस्तैरसुरैः सार्धं विघ्ना मायामुपाश्रिताः /
वाचश्चेष्टां स्मृतिं चैव स्तम्भयन्ति स्म नृत्यताम् // ना. शा_१.६६ //
तथा विध्वंसनं दृष्ट्वा सूत्रधारस्य देवराट् /
कस्मात्प्रयोगवैषम्यमित्युक्त्वा ध्यानमाविशत् // ना. शा_१.६७ //
अथापश्यत्सदो विघ्नैः समन्तादपरिवारितम् /
सहेतरैः सूत्रधारं नष्टसंज्ञं जडीकृतम् // ना. शा_१.६८ //
उत्थाय त्वरितं शक्रं गृहीत्वा ध्वजमुत्तमम् /
सर्वरत्नोज्ज्वलतनुः किञ्चिदुद्वृत लोचनः // ना. शा_१.६९ //
रङ्गपीठगतान्विघ्नानसुरांश्चैव देवराट् /
जर्जरीकृतदेहांस्तानकरोज्जर्जरेण सः // ना. शा_१.७० //
निहतेषु च सर्वेषुअ विघ्नेषु सह दानवैः /
संप्रहृष्य ततो वाक्यमाहुः सर्वे दिवौकसः // ना. शा_१.७१ //
अहो प्रहरणं दिव्यमिदमासादितं त्वया /
जर्जरीकृतसर्वाङ्गा येनैते दानवाः कृताः // ना. शा_१.७२ //
यस्मादनेन ते विघ्नाः सासुरा जर्जरीकृताः /
तस्माज्जर्जर एवेति नामतो ऽयं भविष्यति // ना. शा_१.७३ //
शेषा ये चैव हिंसार्थमुपयास्यन्ति हिंसकाः /

दृष्ट्वैव जर्जरं ते ऽपि गमिष्यन्त्येवमेव तु // ना. शा_१.७४ //
एवमेवास्त्विवति ततः शक्रः प्रोवाच तान्सुरान् /
रक्षाभूतश्च सर्वेषां भविष्यत्येष जर्जरः // ना. शा_१.७५ //
प्रयोगे प्रस्तुते ह्येवं स्फीते शक्रमहे पुनः /
त्रासं सञ्जनयन्ति स्म विघ्नाः शेषास्तु नृत्यताम् // ना. शा_१.७६ //
दृष्ट्वा तेषां व्यवसितं दैत्यानां विप्रकारजम् /
उपस्थितो ऽहं ब्रह्माणं सुतैः सर्वैः समन्वितः // ना. शा_१.७७ //
निश्चिता भगवन्विघ्ना नाट्यस्यास्य विनाशने /
अस्य रक्षाविधिं सम्यगाज्ञापय सुरेश्वर // ना. शा_१.७८ //
ततश्च विश्वकर्माणं ब्रह्मोवाच प्रयत्नतः /
कुरु लक्षणसंपन्नं नाट्यवेश्म महामते // ना. शा_१.७९ //
ततो ऽचिरेण कालेन विश्वकर्मा महच्चुभम् /
सर्वलक्षणसम्पन्नं कृत्वा नाट्यगृहं तु सः // ना. शा_१.८० //
प्रोक्तवान्द्रुहिणं गत्वा सभायान्तु कृताञ्जलीः /
सज्जं नाट्यगृहं देव तदेवेक्षितुमर्हसि // ना. शा_१.८१ //
ततः सह महेन्द्रेण सुरैः सर्वैश्च सेतरैः /
आगतस्त्वरितो दृष्टुं द्रुहिणो नाट्यमण्डपम् // ना. शा_१.८२ //
दृष्ट्वा नाट्यगृहं ब्रह्मा प्राह सर्वान्सुरांस्ततः /
अंशभागैर्भवद्भिस्तु रक्ष्यो ऽयं नाट्यमण्डपः // ना. शा_१.८३ //
रक्षणे मण्डपस्याथ विनियुक्तस्तु चन्द्रमाः /
लोकपालास्तथा दिक्षु विदिक्ष्वपि च मारुताः // ना. शा_१.८४ //
नेपथ्यभूमौ मित्रस्तु निक्षिप्तो वरुणो ऽम्बरे /
वेदिकारक्षणे वह्निर्भाण्डे सर्वदिवौकसः // ना. शा_१.८५ //
वर्णाश्चत्वार एवाथ स्तम्भेषु विनियोजिताः /
आदित्याश्चैव रुद्राश्च स्थिताः स्तम्भान्तरेश्वथ // ना. शा_१.८६ //
धारणीश्वथ भूतानि शालास्वप्सरस्तथा /
सर्ववेश्मसु यक्षिण्यो महीपृष्ठे महोदधिः // ना. शा_१.८७ //
द्वारशालानियुक्तौ तु कृतान्तः काल एव च /
स्थापितौ द्वारपत्रेषु नागमुख्यौ महाबलौ // ना. शा_१.८८ //
देहल्यां यमदण्डस्तु शूलं तस्योपरि स्थितम् /
द्वारपालौ स्थितौ चौभौ नियतिर्मृत्युरेव च // ना. शा_१.८९ //
पार्श्वे च रङ्गपीठस्य महेन्द्रः स्थितवान्स्वयम् /
स्थापिता मत्तवारण्यां विद्युद्दैत्यनिषूदनी // ना. शा_१.९० //
स्तम्भेषु मत्तवारण्याः स्थापिता परिपालने /
भूतयक्षपिशाश्च गुह्यकाश्च महाबलाः // ना. शा_१.९१ //
जर्जरे तु विनिक्षिप्तं वज्रं दैत्यनिबर्हणम् /
तत्पर्वसु विनिक्षिप्ताः सुरेन्द्रा ह्यमितौजसः // ना. शा_१.९२ //
शिरःपर्वस्थितो ब्रह्मा द्वितीये शङ्करस्तथा /
तृतीये च स्थितो विष्णुश्चतुर्थे स्कन्द एव च // ना. शा_१.९३ //

पञ्चमे च महानागाः शेषवासुकितक्षकाः /
एवं विघ्नविनाशाय स्थापिता जर्जरे सुराः // ना. शा_१.९४ //
रङ्गपीठस्य मध्ये तु स्वयं ब्रह्मा प्रतिष्ठितः /
इष्ट्यर्थं रङ्गमध्ये तु क्रियते पुष्पमोक्षणम् // ना. शा_१.९५ //
पातालवासिनो ये च यक्षगुह्यकपन्नगाः /
अधस्ताद्रङ्गपीठस्य रक्षणे ते नियोजिताः // ना. शा_१.९६ //
नायकं रक्षतीन्द्रस्तु नायिकां च सरस्वती /
विदूषकमथौङ्कारः शेशास्तु प्रकृतिर्हरः // ना. शा_१.९७ //
यान्येतानि नियुक्तानि दैवतानीह रक्षणे /
एतान्येवाधिदैवानि भविष्यन्तीत्युवाच सः // ना. शा_१.९८ //
एतस्मिन्नन्तरे देवैः सर्वैरुक्तः पितामहः /
साम्ना तावदिमे विघ्नाः स्थाप्यन्तां वचसा त्वया // ना. शा_१.९९ //
पूर्वं सामं प्रयोक्तव्यं द्वितीयं दानमेव च /
तयोरुपरि भेदस्तु ततो दण्डः प्रयुज्यते // ना. शा_१.१०० //
देवानां वचनं श्रुत्वा ब्रह्मा विघ्नानुवाच ह /
कस्माद्भवन्तो नाट्यस्य विनाशाय समुत्थिताः // ना. शा_१.१०१ //
ब्रह्मणो वचनं श्रुत्वा विरूपाक्षो ऽब्रवीद्वचः /
दैत्यैर्विघ्नगणैः सार्धं सामपूर्वमिदं ततः // ना. शा_१.१०२ //
यो ऽयं भगवता सृष्टो नाट्यवेदः सुरेच्चया /
प्रत्यादेशो ऽयमस्माकं सुरार्थं भवता कृतः // ना. शा_१.१०३ //
तन्नैतदेवं कर्तव्यं त्वया लोकपितामह /
यथा देवस्तथा दैत्यास्त्वत्तः सर्वे विनिर्गताः // ना. शा_१.१०४ //
विघ्नानां वचनं श्रुत्वा ब्रह्मा वचनमब्रवीत् /
अलं वो मन्युना दैत्या विषादं त्यजतानघाः // ना. शा_१.१०५ //
भवतां देवतानां च शुभाशुभविकल्पकः /
कर्मभावान्वयापेक्षी नाट्यवेदो मया कृतः // ना. शा_१.१०६ //
नैकान्ततो ऽत्र भवतां देवानां चानुभावनम् /
त्रैलोक्यास्यास्य सर्वस्य नाट्यं भावानुकीर्तनम् // ना. शा_१.१०७ //
क्वचिद्धर्मः क्वचित्क्रीडा क्वचिदर्थः क्वचिच्चमः /
क्वचिद्धास्यं क्वचिद्युद्धं क्वचित्कामः क्वचिद्वधः // ना. शा_१.१०८ //
धर्मो धर्मप्रवृत्तानां कामः कामोपसेविनाम् /
निग्रहो दुर्विनीतानां विनीतानां दमक्रिया // ना. शा_१.१०९ //
क्लीबानां धार्ष्ट्यजननमुत्साहः शूरमानिनाम् /
अबुधानां विबोधश्च वैदुष्यं विदुषामपि // ना. शा_१.११० //
ईश्वराणां विलासश्च स्थैर्यं दुःखार्दितस्य च /
अर्थोपजीविनामर्थो धृतिरुद्वेगचेतसाम् // ना. शा_१.१११ //
नानाभावोपसम्पन्नं नानावस्थान्तरात्मकम् /
लोकवृत्तानुकरणं नाट्यमेतन्मया कृतम् // ना. शा_१.११२ //
उत्तमाधममध्यानां नराणां कर्मसंश्रयम् /

हितोपदेशजननं धृतिक्रीडासुखादिकृत् // ना. शा_१.११३ //
एतद्रसेषु भावेषु सर्वकर्मक्रियास्वथ /
सर्वोपदेशजननं नाट्यं लोके भविष्यति // ना. शा_१.११३* //
दुःखार्तानां श्रमार्तानां शोकार्तानां तपस्विनाम् /
विश्रान्तिजननं काले नाट्यमेतद्भविष्यति // ना. शा_१.११४ //
धर्म्यं यशस्यमायुष्यं हितं बुद्धिविवर्धनम् /
लोकोपदेशजननं नाट्यमेतद्भविष्यति // ना. शा_१.११५ //
न तज्ज्ञानं न तच्चिल्पं न सा विद्या न सा कला /
नासौ योगो न तत्कर्म नाट्ये ऽस्मिन् यन्न दृश्यते // ना. शा_१.११६ //
तन्नात्र मन्युः कर्तव्यो भवद्भिरमरान्प्रति /
सप्तद्वीपानुकरणं नाट्यमेतद्भविष्यति // ना. शा_१.११७ //
येनानुकरणं नाट्यमेतत्तद्यन्मया कृतम् // ना. शा_१.११७* //
देवानामसुराणां च राज्ञामथ कुटुम्बिनाम् /
ब्रह्मर्षीणां च विज्ञेयं नाट्यं वृत्तान्तदर्शकम् // ना. शा_१.११८ //
यो ऽयं स्वभावो लोकस्य सुखदुःखसमन्वितः /
सो ऽङ्गाद्यभिनयोपेतो नाट्यमित्यभिधीयते // ना. शा_१.११९ //
वेदविद्येतिहासानामाख्यानपरिकल्पनम् /
विनोदकरणं लोके नाट्यमेतद्भविष्यति // ना. शा_१.११९* //
श्रुतिस्मृतिसदाचारपरिशेषार्थकल्पनम् /
विनोदजननं लोके नाट्यमेतद्भविष्यति // ना. शा_१.११९** //
एतस्मिन्नन्तरे देवान् सर्वानाह पितामहः /
क्रियतामद्य विधिवद्यजनं नाट्यमण्डपे // ना. शा_१.१२० //
बलिप्रदानैर्होमैश्च मन्त्रौषधिसमन्वितैः /
भोज्यैर्भक्ष्यैश्च पानैश्च बलिः समुपकल्पताम् // ना. शा_१.१२१ //
मर्त्यलोकगताः सर्वे शुभां पूजामवाप्स्यथ /
अपूजयित्वा रङ्गं तु नैव प्रेक्षां प्रवर्तयेत् // ना. शा_१.१२२ //
अपूजयित्वा रङ्गं तु यः प्रेक्षां कल्पयिष्यति /
निष्फलं तस्य तत् ज्ञानं तिर्यग्योनिं च यास्यति // ना. शा_१.१२३ //
यज्ञेन संमितं ह्येदद्रङ्गदैवतपूजनम् /
तस्मात्सर्वप्रयत्नेन कर्तव्यं नाट्ययोक्तृभिः // ना. शा_१.१२४ //
नर्तको ऽर्थपतिर्वापि यः पूजां न करिष्यति /
न कारयिष्यन्त्यन्यैर्वा प्राप्नोत्यपचयं तु सः // ना. शा_१.१२५ //
यथाविधिं यथादृष्टं यस्तु पूजां करिष्यति /
स लप्स्यते शुभानर्थान् स्वर्गलोकं च यास्यति // ना. शा_१.१२६ //
एवमुक्त्वा तु भगवान्द्रुहिणः सहदेवतैः /
रङ्गपूजां कुरुश्वेति मामेवं समचोदयत् // ना. शा_१.१२७ //

इति भारतीये नाट्यशास्त्रे नाट्योत्पत्तिर्नाम प्रथमो ऽध्यायः

---

अथ भारतीये नाट्यशास्त्रे द्वितीयो ऽध्यायः

भरतस्य वचः श्रुत्वा पप्रच्चुर्मुनयस्ततः /
भगवन् श्रोतुमिच्चामो यजनं रङ्गसंश्रयम् // ना. शा_२.१ //
अथ वा या क्रियास्तत्र लक्षणं यच्च पूजनम् /
भविष्यद्भिर्नरैः कार्यं कथं तन्नाट्यवेश्मनि // ना. शा_२.२ //
इहादिर्नाट्ययोगस्य नाट्यमण्डप एव हि /
तस्मात्तस्यैव तावत्त्वं लक्षणं वक्तुमर्हसि // ना. शा_२.३ //
तेषां तु वचनं श्रुत्वा मुनीनां भरतो ऽब्रवीत् /
लक्षणं पूजनं चैव श्रूयतां नाट्यवेश्मनः // ना. शा_२.४ //
दिव्यानां मानसी सृष्टिर्गृहेषूपवनेषु च /
(यथा भावाभिनिर्वर्त्याः सर्वे भावास्तु मानुषाः) /
नराणां यत्नतः कार्या लक्षणाभिहिता क्रिया // ना. शा_२.५ //
श्रूयतां तद्यथा यत्र कर्तव्यो नाट्यमण्डपः /
तस्य वास्तु च पूजा च यथा योज्या प्रयत्नतः // ना. शा_२.६ //
इह प्रेक्ष्यागृहं दृष्ट्वा धीमता विश्वकर्मणा /
त्रिविधः सन्निवेशश्च शास्त्रतः परिकल्पितः // ना. शा_२.७ //
विकृष्टश्चतुरश्रश्च त्र्यश्रश्चैव तु मण्डपः /
तेषां त्रीणि प्रमाणानि ज्येष्ठं मध्यं तथाऽवरम् // ना. शा_२.८ //
प्रमाणमेषां निर्दिष्टं हस्तदण्डसमाश्रयम् /
शतं चाष्टौ चतुःषष्टिर्हस्ता द्वात्रिंशदेव च // ना. शा_२.९ //
अष्टाधिकं शतं ज्येष्ठं चतुःषष्टिस्तु मध्यमम् /
कनीयस्तु तथा वेश्म हस्ता द्वात्रिंशदिष्यते // ना. शा_२.१० //
देवानां तु भवेज्ज्येष्ठं नृपाणां मध्यमं भवेत् /
शेषाणां प्रकृतीनां तु कनीयः संविधीयते // ना. शा_२.११ //
प्रेक्षागृहाणां सर्वेषां प्रशस्तं मध्यमं स्मृतम् /
तत्र पाठ्यं च गेयं च सुखश्राव्यतरं भवेत् // ना. शा_२.११* //
प्रेक्षागृहाणां सर्वेषां त्रिप्रकारो विधिः स्मृतः /
विकृष्टश्चतुरस्रश्च त्र्यस्रश्चैव प्रयोक्तृभिः // ना. शा_२.११** //
कनीयस्तु स्मृतं त्र्यस्रं चतुरस्रं तु मध्यमम् /
ज्येष्ठं विकृष्टं विज्ञेयं नाट्यवेदप्रयोक्तृभिः // ना. शा_२.११*** //
प्रमाणं यच्च निर्दिष्टं लक्षणं विश्वकर्मणा /
प्रेक्षागृहाणां सर्वेषां तच्चैव हि निबोधत // ना. शा_२.१२ //
अणू रजश्च वालश्च लिक्षा यूका यवस्तथा /
अङ्गुलं च तथा हस्तो दण्डश्चैव प्रकीर्तितः // ना. शा_२.१३ //
अणवो ऽष्टौ रजः प्रोक्तं तान्यष्टौ वाल उच्यते /
वालास्त्वष्टौ भवेल्लिक्षा यूका लिक्षाष्टकं भवेत् // ना. शा_२.१४ //
यूकास्त्वष्टौ यवो ज्ञेयो यवास्त्वष्टौ तथाङ्गुलम् /

अङ्गुलानि तथा हस्तश्चतुर्विंशतिरुच्यते // ना. शा_२.१५ //
चतुर्हस्तो भवेद्दण्डो निर्दिष्टस्तु प्रमाणतः /
अनेनैव प्रमाणेन वक्ष्याम्येषां विनिर्णयम् // ना. शा_२.१६ //
चतुःषष्टिकरान्कुर्याद्दीर्घत्वेन तु मण्डपम् /
द्वात्रिंशतं च विस्तारन्मर्त्यानां यो भवेदिह // ना. शा_२.१७ //
अत ऊर्ध्वं न कर्तव्यः कर्तृभिर्नाट्यमण्डपः /
यस्मादव्यक्तभावं हि तत्र नाट्यं व्रजेदिति // ना. शा_२.१८ //
मण्डपे विप्रकृष्टे तु पाठ्यमुच्चारितस्वरम् /
अनिस्सरणधर्मत्वाद्विस्वरत्वं भृशं व्रजेत् // ना. शा_२.१९ //
यश्चाप्यास्यगतो भावो नानादृष्टिसमन्वितः
स वेश्मनः प्रकृष्टत्वाद् व्रजेदव्यक्ततां पराम् // ना. शा_२.२० //
प्रेक्षागृहाणां सर्वेषां तस्मान्मध्यममिष्यते /
यावत्पाठ्यं च गेयं च तत्र श्रव्यतरं भवेत् // ना. शा_२.२१ //
प्रेक्षागृहाणां सर्वेषां त्रिप्रकारो विधिः स्मृतः /
विकृष्टश्चतुरस्रश्च त्र्यस्रश्चैव प्रयोक्तृभिः // ना. शा_२.२१* //
कनीयस्तु स्मृतं त्र्यस्रं चतुरस्रं तु मध्यमम् /
ज्येष्ठं विकृष्टं विज्ञेयं नाट्यवेदप्रयोक्तृभिः // ना. शा_२.२१** //
देवानां मानसी सृष्टिर्गृहेषूपवनेषु च /
यत्नभावाभिनिष्पन्नाः सर्वे भावा हि मानुषा // ना. शा_२.२२ //
तस्माद्देवकृतैर्भावैर्न विस्पर्धेत मानुषः /
मानुषस्य तु गेहस्य सम्प्रवक्ष्यामि लक्षणम् // ना. शा_२.२३ //
भूमेर्विभागं पूर्वं तु परीक्षेत प्रयोजक /
ततो वास्तु प्रमाणेन प्रारभेत शुभेच्चया // ना. शा_२.२४ //
समा स्थिरा तु कठिना कृष्णा गौरी च या भवेत् /
भूमिस्तत्रैव कर्तव्यः कर्तृभिर्नाट्यमण्डपः // ना. शा_२.२५ //
प्रथमं शोधनं कृत्वा लाङ्गलेन समुत्कृषेत् /
अस्थिकीलकपालानि तृणगुल्मांश्च शोधयेत् // ना. शा_२.२६ //
शोधयित्वा वसुमतीं प्रमाणं निर्दिशेत्ततः /
(त्रीण्युत्तराणि सौम्यं च विशाखापि च रेवती /
हस्तितिष्यानुराधाश्च प्रशस्ता नाट्यकर्मणि) /
पुष्यनक्षत्रयोगेन शुक्लं सूत्रं प्रसारयेत् // ना. शा_२.२७ //
कार्पासं बाल्बजं वापि मौञ्जं वाल्कलमेव च /
सूत्रं बुधैस्तु कर्तव्यं यस्य च्चेदो न विद्यते // ना. शा_२.२८ //
अर्धच्चिन्ने भवेत्सूत्रे स्वामिनो मरणं ध्रुवम् /
त्रिभागच्चिन्नया रज्वा राष्ट्रकोपो विधीयते // ना. शा_२.२९ //
चिन्नायां तु चतुर्भागे प्रयोक्तुर्नाश उच्यते /
हस्तात्प्रभ्रष्टया वापि कश्चित्वपचयो भवेत् // ना. शा_२.३० //
तस्मान्नित्यं प्रयत्नेन रज्जुग्रहणमिष्यते /
कार्यं चैव प्रयत्नेन मानं नाट्यगृहस्य तु // ना. शा_२.३१ //

मुहूर्तेनानुकूलेन तिथ्या सुकरणेन च /
ब्राह्मणांस्तर्पयित्वा तु पुण्याहं वाचयेत्ततः // ना. शा_२.३२ //
शान्तितोयं ततो दत्त्वा ततः सूत्रं प्रसारयेत् /
चतुष्षष्टिकरान्कृत्वा द्विधा कुर्यात्पुनश्च तान् // ना. शा_२.३३ //
पृष्ठतो यो भवेद्भागो द्विधाभूतस्य तस्य तु /
सममर्धविभागेन रङ्गशीर्षं प्रकल्पयेत् // ना. शा_२.३४ //
पश्चिमे च विभागे ऽथ नेपथ्यगृहमादिशेत् /
विभज्य भागान्विधिवद्ययथावदनुपूर्वशः // ना. शा_२.३५ //
शुभे नक्षत्रयोगे च मण्डपस्य निवेशनम् /
शङ्खदुन्दुभिनिर्घोषैर्मृदङ्गपणवादिभिः // ना. शा_२.३६ //
सर्वातोद्यैः प्रणुदितैः स्थापनं कार्यमेव तु /
उत्सार्याणि त्वनिष्टानि पाषण्ड्याश्रमिणस्तथा // ना. शा_२.३७ //
काषायवसनाश्चैव विकलाश्चैअव ये नराः /
निशायां च बलिः कार्या नानाभोजनसंयुतः // ना. शा_२.३८ //
गन्धपुष्पफलोपेता दिशो दश समाश्रितः /
पूर्वेण शुक्लान्नयुतो नीलान्नो दक्षिणेन च // ना. शा_२.३९ //
पश्चिमेन बलिः पीतो रक्तश्चैवोत्तरेण तु /
यादृशं दिशि यस्यां तु दैवतं परिकल्पितम् // ना. शा_२.४० //
तादृशस्तत्र दातव्यो बलिर्मन्त्रपुरस्कृतः /
स्थापने ब्राह्मणेभ्यश्च दातव्यं घृतपायसम् // ना. शा_२.४१ //
मधुपर्कस्तथा राज्ञे कर्तृभ्यश्च गुडौदनम् /
नक्षत्रेण तु कर्तव्यं मूलेन स्थापनं बुधैः // ना. शा_२.४२ //
मुहूर्तेनानुकूलेन तिथ्या सुकरणेन च /
एवं तु स्थापनं कृत्वा भित्तिकर्म प्रयोजयेत् // ना. शा_२.४३ //
भित्तिकर्मणि निर्वृत्ते स्तम्भानां स्थापनं ततः /
तिथिनक्षत्रयोगेन शुभेन करणेन च // ना. शा_२.४४ //
स्तम्भानां स्थापनं कार्यं रोहिण्या श्रवणेन वा /
आचार्येण सुयुक्तेन त्रिरात्रोपोषितेन च // ना. शा_२.४५ //
स्तम्भानां स्थापनं कार्यं प्राप्ते सूर्योदये शुभे /
प्रथमे ब्राह्मणस्तम्भे सर्पिस्सर्षपसंस्कृतः // ना. शा_२.४६ //
सर्वशुक्लो विधिः कार्यो दद्यात्पायसमेव च /
ततश्च क्षत्रियस्तम्भे वस्त्रमाल्यानुलेपनम् // ना. शा_२.४७ //
सर्वं रक्तं प्रदातव्यं द्विजेभ्यश्च गुडौदनम् /
वैश्यस्तम्भे विधिः कार्यो दिग्भागे पश्चिमोत्तरे // ना. शा_२.४८ //
सर्वं प्रीतं प्रदातव्यं द्विजेभ्यश्च घृतौदनम् /
शूद्रस्तम्भे विधिः कार्यः सम्यक्पूर्वोत्तराश्रये // ना. शा_२.४९ //
नीलप्रायं प्रयत्नेन कृसरं च द्विजाशनम् /
पूर्वोक्तब्राह्मणस्तम्भे शुक्लमाल्यानुलेपने // ना. शा_२.५० //
निक्षिपेत्कनकं मूले कर्णाभरणसंश्रयम् /

ताम्रं चाधः प्रदातव्यं स्तम्भे क्षत्रियसंज्ञके // ना. शा_२.५१ //
वैश्यस्तम्भस्य मूले तु रजतं सम्प्रदापयेत् /
शूद्रस्तम्भस्य मूले तु दद्यादायसमेव च // ना. शा_२.५२ //
सर्वेष्वेव तु निक्षेप्यं स्तम्भमूलेषु काञ्चनम् /
स्वस्तिपुण्याहघोषेण जयशब्देन चैव हि // ना. शा_२.५३ //
स्तम्भानां स्थापनं कार्यं पुष्पमालापुरस्कृतम् /
रत्नदानैः सगोदानैर्वस्त्रदानैरनल्पकैः // ना. शा_२.५४ //
ब्राह्मणांस्तर्पयित्वा तु स्तम्भानुत्थापयेत्ततः /
अचलं चाप्यकम्पञ्च तथैवावलितं पुनः // ना. शा_२.५५ //
स्तम्भस्योत्थापने सम्यग्दोषा ह्येते प्रकीर्तिताः /
अवृष्टिरुक्ता चलने वलने मृत्युतो भयम् // ना. शा_२.५६ //
कम्पने परचक्रात्तु भयं भवति दारुणम् /
दोषैरेतैर्विहीनं तु स्तम्भमुत्थापयेच्चिवम् // ना. शा_२.५७ //
पवित्रे ब्राह्मणस्तम्भे दातव्या दक्षिणा च गौः /
शेषाणां भोजनं कार्यं स्थापने कर्तृसंश्रयम् // ना. शा_२.५८ //
मन्त्रपूतं च तद्देयं नाट्याचार्येण धीमता /
पुरोहितं नृपं चैव भोजयेन्मधुपायसैः // ना. शा_२.५९ //
कर्त्?नापि तथा सर्वान्कृसरां लवणोत्तराम् /
सर्वमेवं विधिं कृत्वा सर्वातोद्यैः प्रवादितैः // ना. शा_२.६० //
अभिमन्त्र्य यथान्यायं स्तम्भानुत्थापयेच्चुचिः /
ऽयथाऽचलो गिरिर्मेरुर्हिमवांश्च महाबलः // ना. शा_२.६१ //
जयावहो नरेन्द्रस्य तथा त्वमचलो भवऽ /
स्तम्भद्वारं च भित्तिं च नेपथ्यगृहमेव च // ना. शा_२.६२ //
एवमुत्थापयेतज्ज्ञो विधिदृष्टेन कर्मणा /
रङ्गपीठस्य पार्श्वे तु कर्तव्या मत्तवारणी // ना. शा_२.६३ //
चतुस्तम्भसमायुक्ता रङ्गपीठप्रमाणतः /
अध्यर्धहस्तोत्सेधेन कर्तव्या मत्तवारणी // ना. शा_२.६४ //
उत्सेधेन तयोस्तुल्यं कर्तव्यं रङ्गमण्डपम् /
तस्यां माल्यं च धूपं च गन्धं वस्त्रं तथैव च // ना. शा_२.६५ //
नानावर्णानि देयानि तथा भूतप्रियो बलिः /
आयसं तत्र दातव्यं स्तम्भानां कुशैलैरधः // ना. शा_२.६६ //
भोजने कृसराश्चैव दातव्यं ब्राह्मणाशनम् /
एवं विधिपुरस्कारैः कर्तव्या मत्तवारणी // ना. शा_२.६७ //
रङ्गपीठं ततः कार्यं विधिदृष्टेण कर्मणा /
रङ्गशीर्षस्तु कर्तव्यं षड्दारुकसमन्वितम् // ना. शा_२.६८ //
कार्यं द्वारद्वयं चात्र नेपथ्यगृहकस्य तु /
पूरणे मृत्तिका चात्र कृष्णा देया प्रयत्नतः // ना. शा_२.६९ //
लाङ्गलेन समुत्कृष्य निर्लोष्टतृणशर्करम् /
लाङ्गले शुद्धवर्णौ तु धुर्यौ योज्यौ प्रयत्नतः // ना. शा_२.७० //

कर्तारः पुरुषश्चात्र ये ऽङ्गदोषविवर्जिताः /
अहीनाङ्गैश्च वोढव्या मृत्तिका पिटकैर्नवैः // ना. शा_२.७१ //
एवंविधैः प्रकर्तव्यं रङ्गशीर्षं प्रयत्नतः /
कूर्मपृष्ठं न कर्तव्यं मत्स्यपृष्ठं तथैव च // ना. शा_२.७२ //
शुद्धादर्शतलाकारं रङ्गशीर्षं प्रशस्यते /
रत्नानि चात्र देयानि पूर्वे वज्रं विचक्षणैः // ना. शा_२.७३ //
वैडूर्यं दक्षिणे पार्श्वे स्फटिकं पश्चिमे तथा /
प्रवालमुत्तरे चैव मध्ये तु कनकं भवेत् // ना. शा_२.७४ //
एवं रङ्गशिरः कृत्वा दारुकर्म प्रयोजयेत् /
ऊहप्रत्यूहसंयुक्तः नानाशिल्पप्रयोजितम् // ना. शा_२.७५ //
नानासञ्जवनोपेतं बहुव्यालोपशोभितम् /
ससालभञ्जिकाभिश्च समन्तात्समलङ्कृतम् // ना. शा_२.७६ //
निर्व्यूहकुहरोपेतं नानाग्रथितवेदिकम् /
नानाविन्याससंयुक्तं चित्रजालगवाक्षकम् // ना. शा_२.७७ //
सुपीठधारिणीयुक्तं कपोतालीसमाकुलम् /
नानाकुट्टिमविन्यस्तैः स्तम्भैश्चाप्युपशोभितम् // ना. शा_२.७८ //
एवं काष्ठविधिं कृत्वा भित्तिकर्म प्रयोजयेत् /
स्तम्भं वा नागदन्तं वा वातायनमथापि वा // ना. शा_२.७९ //
कोणं वा सप्रतिद्वारं द्वारविद्धं न कारयेत् /
कार्यः शैलगुहाकारो द्विभूमिर्नाट्यमण्डपः // ना. शा_२.८० //
मन्दवातायनोपेतो निर्वातो धीरशब्दवान् /
तस्मान्निवातः कर्तव्यः कर्तृभिर्नाट्यमण्डपः // ना. शा_२.८१ //
गम्भीरस्वरता येन कुतपस्य भविष्यति /
भित्तिकर्मविधिं कृत्वा भित्तिलेपं प्रदापयेत् // ना. शा_२.८२ //
सुधाकर्म बहिस्तस्य विधातव्यं प्रयत्नतः /
भित्तिष्वथ विलिप्तासु परिमृष्टासु सर्वतः // ना. शा_२.८३ //
समासु जातशोभासु चित्रकर्म प्रयोजयेत् /
चित्रकर्मणि चालेख्याः पुरुषाः स्त्रीजनास्तथा // ना. शा_२.८४ //
लताबन्धाश्च कर्तव्याश्चरितं चात्म्भोगजम् /
एवं विकृष्टं कर्तव्यं नाट्यवेश्म प्रयोक्तृभिः // ना. शा_२.८५ //
पुनरेव हि वक्ष्यामि चतुरश्रस्य लक्षणम् /
समन्ततश्च कर्तव्या हस्ता द्वात्रिंशदेव तु // ना. शा_२.८६ //
शुभभूमिविभागस्थो नाट्यज्ञैर्नाट्यमण्डपः /
यो विधिः पूर्वमुक्तस्तु लक्षणं मङ्गलानि च // ना. शा_२.८७ //
विकृष्टे तान्यशेषाणि चतुरश्रे ऽपि कारयेत् /
चतुरश्रं समं कृत्वा सूत्रेण प्रविभज्य च // ना. शा_२.८८ //
बाह्यतः सर्वतः कार्या भित्तिः श्लिष्टेष्टका दृढा /
तत्राभ्यन्तरतः कार्या रङ्गपीठोपरि स्थिताः // ना. शा_२.८९ //
दश प्रयोक्तृभिः स्तम्भाः शक्ता मण्डपधारणे /

स्तम्भानां बाह्यतश्चापि सोपानाकृति पीठकम् // ना. शा_२.९० //
इष्टकादारुभिः कार्यं प्रेक्षकाणां निवेशनम् /
हस्तप्रमाणैरुत्सेधैर्भूमिभागसमुत्थितैः // ना. शा_२.९१ //
रङ्गपीठावलोक्यं तु कुर्यादासनजं विधिम् /
षडन्यानन्तरे चैव पुनः स्तम्भान्यथादिशम् // ना. शा_२.९२ //
विधिना स्थापयेतज्ज्ञो दृढान्मण्डपधारणे /
अष्टौ स्तम्भान्पुनश्चैव तेषामुपरि कल्पयेत् // ना. शा_२.९३ //
स्थाप्यं चैव ततः पीठमष्टहस्तप्रमाणतः /
विद्धास्यमष्टहस्तं च पीठं तेषु ततो न्यसेत् // ना. शा_२.९४ //
तत्र स्तम्भाः प्रदातव्यास्तज्ज्ञैर्मण्डपधारणे /
धारणीधारणास्ते च शालस्त्रीभिरलङ्कृताः // ना. शा_२.९५ //
नेपथ्यगृहकं चैव ततः कार्यं प्रयत्नतः /
द्वारं चैकं भवेत्तत्र रङ्गपीठप्रवेशनम् // ना. शा_२.९६ //
जनप्रवेशनं चान्यदाभिमुख्येन कारयेत् /
रङ्गस्याभिमुखं कार्यं द्वितीयं द्वारमेव तु // ना. शा_२.९७ //
अष्टहस्तं तु कर्तव्यं रङ्गपीठं प्रमाणतः /
चतुरश्रं समतलं वेदिकासमलङ्कृतम् // ना. शा_२.९८ //
पूर्वप्रमाणनिर्दिष्टा कर्तव्या मत्तवारणी /
चतुःस्तम्भसमायुक्ता वेदिकायास्तु पार्श्वतः // ना. शा_२.९९ //
समुन्नतं समं चैव रङ्गशीर्षं तु कारयेत् /
विकृष्टे तून्नतं कार्यं चतुरश्रे समं तथा // ना. शा_२.१०० //
एवमेतेन विधिना चतुरश्रं गृहं भवेत् /
अतः परं प्रवक्ष्यामि त्र्यश्रगेहस्य लक्षणम् // ना. शा_२.१०१ //
त्र्यश्रं त्रिकोणं कर्तव्यं नाट्यवेश्मप्रयोक्तृभिः /
मध्ये त्रिकोणमेवास्य रङ्गपीठं तु कारयेत् // ना. शा_२.१०२ //
द्वारं तैनैव कोणेन कर्तव्यं तस्य वेश्मनः /
द्वितीयं चैव कर्तव्यं रङ्गपीठस्य पृष्ठतः // ना. शा_२.१०३ //
विधिर्यश्चतुरश्रस्य भित्तिस्तम्भसमाश्रयः /
स तु सर्वः प्रयोक्तव्यस्त्र्यश्रस्यापि प्रयोक्तृभिः // ना. शा_२.१०४ //
एवमेतेन विधिना कार्या नाट्यगृहा बुधैः /
पुनरेषां प्रवक्ष्यामि पूजामेवं यथाविधिः // ना. शा_२.१०५ //

इति भारतीये नाट्यशास्त्रे मण्डपविधानो नाम द्वितीयो ऽध्यायः

---

अथ तृतीयोध्यायः

सर्वलक्षणसंपन्ने कृते नाट्यगृहे शुभे /

गावो वसेयुः सप्ताहं सह जप्यपरैर्द्विजैः // ना. शा_३.१ //
ततोऽधिवासयेद्वेश्म रङ्गपीठं तथैव च /
मन्त्रपूतेन तोयेन प्रोक्षिताङ्गो निशागमे // ना. शा_३.२ //
यथास्थानान्तरगतो दीक्षितः प्रयतः शुचिः /
त्रिरात्रोपोषितो भूत्वा नाट्याचार्यो ऽहताम्बरः // ना. शा_३.३ //
नमस्कृत्य महादेवं सर्वलोकोद्भवं भवम् /
जगत्पितामहं चैव विष्णुमिन्द्रं गुहं तथा // ना. शा_३.४ //
सरस्वतीं च लक्ष्मीं च सिद्धिं मेधां धृतिं स्मृतिम् /
सोमं सूर्यं च मरुतो लोकपालांस्तथाश्विनौ // ना. शा_३.५ //
मित्रमग्निं सुरान्वर्णान् रुद्रान्कालं कलिं तथा /
मृत्युं च नियतिं चैव कालदण्डं तथैव च // ना. शा_३.६ //
विष्णुप्रहरणं चैव नागराजं च वासुकिम् /
वज्रं विद्युत्समुद्रांश्च गन्धर्वाप्सरसो मुनीन् // ना. शा_३.७ //
भूतान् पिशाचान् यक्षांश्च गुह्यकांश्च महेश्वरान् /
असुरान्नाट्यविघ्नांश्च तथाऽन्यान्दैत्यराक्षसान् // ना. शा_३.८ //
तथा नाट्यकुमारीश्च महाग्रामण्यमेव च /
यक्षांश्च गुह्यकांश्चैव भूतसङ्घास्तथैव च // ना. शा_३.९ //
एतांश्चान्यांश्च देवर्षीन्प्रणम्य रचिताञ्जलिः /
यथास्थानान्तरगतान्समावाह्य ततो वदेत् // ना. शा_३.१० //
भवद्भिर्नो निशायां तु कर्तव्यः सम्परिग्रहः /
साहाय्यं चैव दातव्यमस्मिन्नाट्ये सहानुगैः // ना. शा_३.११ //
सम्पूज्य सर्वानेकत्र कुतपं सम्प्रयुज्य च /
जर्जराय प्रयुञ्जीत पूजां नाट्यप्रसिद्धये // ना. शा_३.१२ //
त्वं महेन्द्रप्रहरणं सर्वदानवसूदनम् /
निर्मितस्सर्वदेवैश्च सर्वविघ्ननिबर्हण // ना. शा_३.१३ //
नृपस्य विजयं शंस रिपूणां च पराजयम् /
गोब्राह्मणशिवं चैव नाट्यस्य च विवर्धनम् // ना. शा_३.१४ //
एवं कृत्वा यथान्यायमुपास्यं नाट्यमण्डपे /
निशायां तु प्रभातायां पूजनं प्रक्रमेदिह // ना. शा_३.१५ //
आर्द्रायां वा मघायां वा याम्ये पूर्वेषु वा त्रिषु /
आश्लेषामूलयोर्वापि कर्तव्यं रङ्गपूजनम् // ना. शा_३.१६ //
आचार्येण तु युक्तेन शुचिना दीक्षितेन च /
रङ्गस्योद्योतनं कार्यं देवतानां च पूजनम् // ना. शा_३.१७ //
दिनान्ते दारुणे घोरे मुहूर्ते यमदैवते /
आचम्य तु यथान्यायं देवता वै निवेशयत् // ना. शा_३.१८ //
रक्ताः प्रतिसराः सूत्रं रक्तगन्धाश्च पूजिताः /
रक्ताः सुमनसश्चैव यच्च रक्तं फलं भवेत् // ना. शा_३.१९ //
यवैस्सिद्धार्थकैर्लाजैरक्षतैः शालितण्डुलैः /
नागपुष्पस्य चूर्णेन वितुषाभिः प्रियङ्गुभिः // ना. शा_३.२० //

एतैर्द्रव्यैर्युतं कुर्याद्देवतानां निवेशनम् /
आलिखेन्मण्डलं पूर्वं यथास्थानं यथाविधिः // ना. शा_३.२१ //
समन्तस्तश्च कर्तव्यं हस्ता षोडश मण्डलम् /
द्वाराणि चात्र कुर्वीत विधानेन चतुर्दिशम् // ना. शा_३.२२ //
मध्ये चैवात्र कर्तव्ये द्वे रेखे तिर्यगूर्ध्वगे /
तयोः कक्ष्याविभागेन दैवतानि निवेशयत् // ना. शा_३.२३ //
पद्मोपविष्टं ब्रह्माणं तस्य मध्ये निवेशयेत् /
आदौ निवेश्यो भगवान्सार्धं भूतगणैः शिवः // ना. शा_३.२४ //
नारायणो महेन्द्रश्च स्कन्दः सूर्यो ऽश्विनौ शशी /
सरस्वती च लक्ष्मीश्च श्रद्धा मेधा च पूर्वतः // ना. शा_३.२५ //
पूर्वदक्षिणतो वह्निर्निवेश्यः स्वाहया सह /
विश्वेदेवाः सगन्धर्वा रुद्राः सर्पगणास्तथा // ना. शा_३.२६ //
दक्षिणेन निवेश्यस्तु यमो मित्रश्च सानुगः /
पित्?न्पिशाचानुरगान् गुह्यकांश्च निवेशयत् // ना. शा_३.२७ //
नै?त्यां राक्षसांश्चैव भूतानि च निवेशयत् /
पश्चिमायां समुद्रांश्च वरुणं यादसां पतिम् // ना. शा_३.२८ //
वायव्यायां दिशि तथा सप्त वायून्निवेशयेत् /
तत्रैव विनिवेश्यस्तु गरुडः पक्षिभिः सह // ना. शा_३.२९ //
उत्तरस्यां दिशि तथा धनदं संनिविएशयेत् /
नाट्यस्य मात्?श्च तथा यक्षानथ सगुह्यकान् // ना. शा_३.३० //
तथैवोत्तरपूर्वायां नन्द्याद्यांश्च गणेश्वरान् /
ब्रह्मर्षिभूतसंघांश्च यथाभागं निवेशयत् // ना. शा_३.३१ //
स्तम्भे सनत्कुमारं तु दक्षिणे दक्षमेव च /
ग्रामण्यमुत्तरे स्तम्भे पूजार्थं संनिविशयेत् // ना. शा_३.३२ //
अनेनैअव विधानेन यथास्थानं यथाविधि /
सुप्रसादानि सर्वाणि दैवतानि निवेशयत् // ना. शा_३.३३ //
स्थाने स्थाने यथान्यायं विनिवेश्य तु देवताः /
तासां प्रकुर्वीत ततः पूजनं तु यथार्हतः // ना. शा_३.३४ //
देवताभ्यस्तु दातव्यं सितमाल्यानुलेपनम् /
गन्धर्ववह्निसूर्येभ्यो रक्तमाल्यानुलेपनम् // ना. शा_३.३५ //
गन्धं माल्यं च धूपं च यथावदनुपूर्वशः /
दत्वा ततः प्रकुर्वीत बलिं पूजां यथाविधिः // ना. शा_३.३६ //
ब्रह्माणं मदुकर्पेण पायसेन सरस्वतीम् /
शिवविष्णुमहेन्द्राद्याः सम्पूज्या मोदकैरथ // ना. शा_३.३७ //
घृतौदनेन हुतभुक्सोमर्कौ तु गुडौदनैः /
विश्वेदेवाः सगन्धर्वा मुनयो मधुपायसैः // ना. शा_३.३८ //
यममित्रौ च सम्पूज्यावपूपैर्मोदकैस्तथा /
पित्?न्पिशाचानुरगान् सर्पिःक्षीरेण तर्पयेत् // ना. शा_३.३९ //
पक्वानेन तु मांसेन सुरासीथुफलासवैः /

अर्चयेद्भूतसंघांश्च चणकैः पललाप्लुतैः // ना. शा_३.४० //
अनेनैव विधानेन सम्पूज्या मत्तवारणी /
पक्वामेन तु मांसेन सम्पूज्या रक्षसां गणाः // ना. शा_३.४१ //
सुरामांसप्रदानेअन दानवान्प्रतिपूजयेत् /
शेषान्देवगणांस्तज्ज्ञः सापूपोत्कारिकौदनैः // ना. शा_३.४२ //
मत्स्यैश्च पिष्टभक्ष्यैश्च सागरान्सरितस्तथा /
सम्पूज्य वरुणं चापि दातव्यं घृतपायसम् // ना. शा_३.४३ //
नानाफूलफलश्चापि मुनीन्सम्प्रतिपूजयेत् /
वायूंश्च पक्षिणश्चैव विचित्रैर्भक्ष्यभोजनैः // ना. शा_३.४४ //
मात्?र्नाट्यस्य सर्वास्ता धनदं च सहानुगैः /
अपूपैर्लाजिकामिश्रैर्भक्ष्यभोज्यैश्च पूजयेत् // ना. शा_३.४५ //
एवमेषां बलिः कार्यो नानाभोजनसंश्रयः /
पुनर्मन्त्रविधानेन बलिकर्म च वक्ष्यते // ना. शा_३.४६ //
देवदेव महाभाग सर्वलोकपितामह /
मन्त्रपूतमिमं सर्वं प्रतिगृह्णीष्व मे बलिम् // ना. शा_३.४७ //
देवदेव महाभाग गणेश त्रिपुरान्तक /
प्रगृह्यतां बलिर्देव मन्त्रपूतो मयोद्यतः // ना. शा_३.४८ //
नारायणामितगते पद्मनाभ सुरोत्तम /
प्रगृह्यतां बलिर्देव मन्त्रपूतो मयार्पितः // ना. शा_३.४९ //
पुरन्दरामरपते वज्रपाणे शतक्रतो /
प्रगृह्यतां बलिर्देव विधिमन्त्रपुरस्कृतः // ना. शा_३.५० //
देवसेनापते स्कन्द भगवन् शङ्करप्रिय /
बलिः प्रीतेन मनसा षण्मुख प्रतिगृह्यताम् // ना. शा_३.५१ //
महादेव महायोगिन्देवदेव सुरोत्तम /
संप्रगृह्य बलिं देव रक्ष विघ्नात्सदोत्थितात् // ना. शा_३.५१* //
देवि देवमहाभागे सरस्वति हरिप्रिये /
प्रगृह्यतां बलिर्मातर्मया भक्त्या समर्पितः // ना. शा_३.५२ //
नानानिमित्तसम्भूताः पौलस्त्याः सर्व एव तु
राक्षसेन्द्रा महासत्वाः प्रतिगृह्णीत मे बलिम् // ना. शा_३.५३ //
लक्ष्मीः सिद्धिर्मतिर्मेधा सर्वलोकनमस्कृताः /
मन्त्रपूतमिमं देव्यः प्रतिगृह्णन्तु मे बलिम् // ना. शा_३.५४ //
सर्वभूतानुभावज्ञ लोकजीवन मारुत /
प्रगृह्यतां बलिर्देव मन्त्रपूतो मयोद्यतः // ना. शा_३.५५ //
देववक्त्र सुरश्रेष्ठ धूमकेतो हुताशन /
भक्त्या समुद्यतो देव बलिः सम्प्रति गृह्यताम् // ना. शा_३.५६ //
सर्वग्रहाणां प्रवर तेजोराशे दिवाकर /
भक्त्या मयोद्यतो देव बलिः सम्प्रति गृह्यताम् // ना. शा_३.५७ //
सर्वग्रहपते सोम द्विजराज जगत्प्रिय /
प्रगृह्यतामेष बलिर्मन्त्रपूतो मयोद्यतः // ना. शा_३.५८ //

महागणेश्वराः सर्वे नन्दीश्वरपुरोगमाः /
प्रगृतां बलिर्भक्त्या मया सम्प्रति चोदितः // ना. शा_३.५९ //
नमः पितृभ्यः सर्वेभ्यः प्रतिगृह्णन्त्विमं बलिम् /
(भूतेभ्यश्च नमो नित्यं येषामेष बलिः प्रियः) /
कामपाल नमो नित्यं यस्यायं ते विधिः कृतः // ना. शा_३.६० //
नारदस्तुम्बरुश्चैव विश्वावसुपुरोगमाः /
परिगृह्णन्तु मे सर्वे गन्धर्वा बलिमुद्यतम् // ना. शा_३.६१ //
यमो मित्रश्च भगवानीश्वरौ लोकपूजितौ /
इमं मे प्रतिगृह्णीतां बलिः मन्त्रपुरस्कृतम् // ना. शा_३.६२ //
रसातलगतेभ्यश्च पन्नगेभ्यो नमो नमः /
दिशन्तु सिद्धिं नाट्यस्य पूजिताः पापनाशनाः // ना. शा_३.६३ //
सर्वाम्भसां पतिर्देवो वरुणो हंसवाहनः /
पूजितः प्रीतमानस्तु ससमुद्रनदीनदः // ना. शा_३.६४ //
वैनतेय महासत्व सर्वपक्षिपते विभो /
प्रगृह्यतां बलिर्देव मन्त्रपूतो मयोद्यतः // ना. शा_३.६५ //
धनाध्यक्षो यक्षपतिर्लोकपालो धनेश्वरः /
सगुह्यकस्सयक्षश्च प्रतिगृह्णातु मे बलिम् // ना. शा_३.६६ //
नमो ऽस्तु नाट्यमातृभ्यो ब्राहम्याद्याभ्यो नमोनमः /
सुमुखीभिः प्रसन्नाभिर्बलिरद्य प्रगृह्यताम् // ना. शा_३.६७ //
रुद्रप्रहरणं सर्वं प्रतिगृह्णातु मे बलिम् /
विष्णुप्रहरणं चैव विष्णुभक्त्या मयोद्यतम् // ना. शा_३.६८ //
तथा कृतान्तः कालश्च सर्वप्राणिवधेश्वरौ /
मृत्युश्च नियतिश्चैव प्रतिगृह्णातु मे बलिम् // ना. शा_३.६९ //
याश्चास्यां मत्तवारण्यां संश्रिता वस्तुदेवताः /
मन्त्रपूतमिमं सम्यक्प्रतिगृह्णन्तु मे बलिम् // ना. शा_३.७० //
अन्ये ये देवगन्धर्वा दिशो दश समाश्रिताः /
दिव्यान्तरिक्षाभौमाश्च तेभ्यश्चायं बलिः कृतः // ना. शा_३.७१ //
कुम्भं सलिलसम्पूर्णं पुष्पमालापुरस्कृतम् /
स्थापयेद्रङ्गमध्ये तु सुवर्णं चात्र दापयेत् // ना. शा_३.७२ //
आतोद्यानि तु सर्वाणि कृत्वा वस्त्रोत्तराणि तु /
गन्धैर्माल्यैश्च धूपैश्च भक्ष्यैर्भोज्यैश्च पूजयेत् // ना. शा_३.७२* //
पूजयित्वा तु सर्वाणि दैवतानि यथाक्रमम् /
जर्जरस्त्वभिसम्पूज्यः स्यात्ततो विघ्नजर्जरः // ना. शा_३.७३ //
श्वेतं शिरसि वस्त्रं स्यान्नीलं रौद्रे च पर्वणि /
विष्णुपर्वणि वै पीतं रक्तं स्कन्दस्य पर्वणि // ना. शा_३.७४ //
मृडपर्वणि चित्रं तु देयं वस्त्रं हितार्थिना /
सदृशं च प्रदातव्यं धूपमाल्यानुलेपनम् // ना. शा_३.७५ //
आतोद्यानि तु सर्वाणि वासोभिरवगुण्ठयेत् /
गन्धैर्माल्यैश्च धूपैश्च भक्ष्यभोजैश्च पूजयेत् // ना. शा_३.७६ //

सर्वमेवं विधिं कृत्वा गन्धमाल्यानुलेपनैः /
विघ्नजर्जरणार्थं तु जर्जरं त्वभिमन्त्रयेत् // ना. शा_३.७७ //
अत्र विघ्नविनाशार्थं पितामहमुखैस्सुरैः /
निर्मितस्त्वं महावीर्यो वज्रसारो महातनुः // ना. शा_३.७८ //
शिरस्ते रक्षतु ब्रम्हा सर्वैर्देवगुणैअः तह /
द्वितीयं च हरः पर्व तृतीयं च जनार्दनः // ना. शा_३.७९ //
चतुर्थं च कुमारस्ते पञ्चमं पन्नगोत्तमः /
नित्यं सर्वे ऽपि पान्तु त्वां सुरार्थे च शिवो भव // ना. शा_३.८० //
नक्षत्रे ऽभिजिति त्वं हि प्रसूतो ऽहितसूदन /
जयं चाभ्युदयं चैव पार्थिवस्य समावह // ना. शा_३.८१ //
जर्जरं पूजयित्वैअवं बलिं सर्वं निविद्य च /
अग्नौ होमं ततः कुर्यान्मन्त्राहुइतिपुरस्कृतम् // ना. शा_३.८२ //
हुताश एव दीप्ताभिरुल्काभिः परिमार्जनम् /
नृपतेर्नर्तकीनां च कुर्याद्दीप्त्यभिवर्धनम् // ना. शा_३.८३ //
अभिद्योत्य सहातोद्यैर्नृपतिं नर्तकीस्तथा /
मन्त्रपूतेन तोयेन पुनरभ्युक्ष्य तान्वदेत् // ना. शा_३.८४ //
महाकुले प्रसूताः स्थ गुणौघैश्चाप्यलङ्कृताः /
यद्वो जन्मगुणोपेतं तद्वो भवतु नित्यशः // ना. शा_३.८५ //
एवमुक्त्वा ततो वाक्यं नृपतैर्भूतये बुधः /
नाट्ययोगप्रसिद्ध्यर्थमाशिषस्सम्प्रयोजयेत् // ना. शा_३.८६ //
सरस्वती धृतिर्मेधा ह्रीः श्रीर्लक्ष्मीस्स्मृतिर्मतिः /
पान्तु वो मातरः सौम्यास्सिद्धिदाश्च भवन्तु वः // ना. शा_३.८७ //
होमं कृत्वा यथान्यायं हविर्मन्त्रपुरस्कृतम् /
भिन्द्यात्कुम्भं ततश्चैव नाट्याचार्यः प्रयत्नतः // ना. शा_३.८८ //
अभिन्ने तु भवेत्कुम्भे स्वामिनः शत्रुतो भयम् /
भिन्ने चैव तु विज्ञेयः स्वामिनः शत्रुसंक्षयः // ना. शा_३.८९ //
भिन्ने कुम्भे ततश्चैव नाट्यचार्यः प्रयत्नतः /
प्रगृह्य दीपिकां दीप्तां सर्वं रङ्गं प्रदीपयेत् // ना. शा_३.९० //
क्ष्वेडितैः स्फोटितैश्चैव वल्गितैश्च प्रधावितैः /
रङ्गमध्ये तु तां दीप्तां सशब्दां सम्प्रयोजयेत् // ना. शा_३.९१ //
शङ्खदुन्दुभिनिर्घोषैर्मृदङ्गपणवैस्तथा /
सर्वातोद्यैः प्रणदितै रङ्गे युद्धानि कारयेत् // ना. शा_३.९२ //
तत्र च्चिन्नं व भिन्नं च दारितं च सशोणितम् /
क्षतं प्रदीप्तमायस्तं निमित्तं सिद्धिलक्षणम् // ना. शा_३.९३ //
सम्यगिष्टस्तु रङ्गो वै स्वामिनः शुभमावहेत् /
पुरस्याबालवृद्धस्य तथा जानपदस्य च // ना. शा_३.९४ //
दुरिष्टस्तु तथा रङ्गो दैवतैर्दुरधिष्ठितः /
नाट्यविध्वसनं कुर्यान्नृपस्य च तथाऽशुभम् // ना. शा_३.९५ //
य एवं विधिमुत्सृज्य यथेष्टं सम्प्रयोजयेत् /

प्राप्नोत्यपचयं शीघ्रं तिर्यग्योनिं च गच्चति // ना. शा_३.९६ //
यज्ञेन सम्मितं ह्येतद्रङ्गदैवतपूजनम् /
अपूजयित्वा रङ्गं तु नैव प्रेक्षां प्रयोजयेत् // ना. शा_३.९७ //
पूजिताः पूजयन्त्येते मानिता मानयन्ति च /
तस्मात्सर्वप्रयत्नेन कर्तव्यं रङ्गपूजनम् // ना. शा_३.९८ //
न तथा प्रदहत्यग्निः प्रभञ्जनसमीरितः /
यथा ह्यपप्रयोगस्तु प्रयुक्तो दहति क्षणात् // ना. शा_३.९९ //
शास्त्रज्ञेन विनीतेन शुचिना दीक्षितेन च /
नाट्याचार्येण शान्तेन कर्तव्यं रङ्गपूजनम् // ना. शा_३.१०० //
स्थानभ्रष्टं तु यो दद्याद्बलिमुद्विग्नमानसः /
मन्त्रहीनो यथा होता प्रायश्चित्ती भवेत्तु सः // ना. शा_३.१०१ //
इत्ययं यो विधिर्दृष्टो रङ्गदैवतपूजने /
नवे नाट्यगृहे कार्यः प्रेक्षायां च प्रयोक्तृभिः // ना. शा_३.१०२ //

इति भारतीये नाट्यशास्त्रे रङ्गदैवतपूजनं नाम तृतीयो ऽध्यायः समाप्तः

---

अथ चतुर्थो ऽध्यायः

एवं तु पूजनं कृत्वा मया प्रोक्तः पितामहः /
आज्ञापय प्रभो क्षिप्रं कः प्रयोगः प्रयुज्यताम् // ना. शा_४.१ //
ततो ऽस्म्युक्तो भगवता योजयामृतमन्थनम् /
एतदुत्साहजननं सुरप्रीतिकरं तथा // ना. शा_४.२ //
यो ऽयं समवकारस्तु धर्मकामार्थसाधकः /
मया प्राग्ग्रथितो विद्वन्स प्रयोगः प्रयुज्यताम् // ना. शा_४.३ //
तस्मिन्समवकारे तु प्रयुक्ते देवदानवाः /
हृष्टाः समभवन्सर्वे कर्मभावानुदर्शनात् // ना. शा_४.४ //
कस्यचित्वथ कालस्य मामाहाम्बुजसम्भवः
नाट्यं सन्दर्शयामो ऽद्य त्रिनेत्राय महात्मने // ना. शा_४.५ //
ततः सार्धं सुरैर्गत्वा वृषभाङ्कनिवेशनम् /
समभ्यर्च्य शिवं पश्चादुवाचेदं पितामहः // ना. शा_४.६ //
मया समवाकरस्तु यो ऽयं सृष्टः सुरोत्तम /
श्रवणे दर्शने चास्य प्रसादं कर्तुमर्हसि // ना. शा_४.७ //
पश्याम इति देवेशो द्रुहिणं वाक्यमब्रवीत् /
ततो मामाह भगवान् सज्जो भव महामते // ना. शा_४.८ //
ततो हिमवतः पृष्ठे नानानागसमाकुले /
बहुभूतगणाकीर्णे रम्यकन्दरनिर्झरे // ना. शा_४.९ //
पूर्वरङ्गः कृतः पूर्वं तत्रायं द्विजसत्तमाः /

तथा त्रिपुरदाहश्च डिमसंज्ञः प्रयोजितः // ना. शा_४.१० //
ततो भूतगणा हृष्टाः कर्नभावानुकीर्तनात् /
महादेवश्च सुप्रीतः पितामहमथाब्रवीत् // ना. शा_४.११ //
अहो नाट्यमिदं सम्यक् त्वया सृष्टं महामते /
यशस्यं च शुभार्थं च पुण्यं बुद्धिविवर्धनम् // ना. शा_४.१२ //
मयापीदं स्मृतं नृत्यं सन्ध्याकालेषु नृत्यता /
नानाकरणसंयुक्तैरङ्गहारैर्विभूषितम् // ना. शा_४.१३ //
पूर्वरङ्गविधावस्मिंस्त्वया सम्यक्प्रयोज्यताम् /
वर्धमानकयोगेषु गीतेष्वासारितेषु च // ना. शा_४.१४ //
महागीतेषु चैवार्थान्सम्यगेवाभिनेष्यसि /
यश्चायं पूर्वरङ्गस्तु त्वया शुद्धः प्रयोजितः // ना. शा_४.१५ //
एभिर्विमिश्रितश्चायं चित्रो नाम भविष्यति /
श्रुत्वा महेश्वरवचः प्रत्युक्तस्तु स्वयंभुवा // ना. शा_४.१६ //
प्रयोगमङ्गहाराणामाचक्ष्व सुरसत्तम /
ततस्तण्डुं समाहूय प्रोक्तवान् भुवनेश्वरः // ना. शा_४.१७ //
प्रयोगमङ्गहाराणामाचक्ष्व भरताय वै /
ततो ये तण्डुना प्रोक्तास्त्वङ्गहारा महात्मना // ना. शा_४.१८ //
तान्वः करणसंयुक्तान्व्याख्यास्यामि सरेचकान् /
स्थिरहस्तो ऽङ्गहारस्तु तथा पर्यस्तकः स्मृतः // ना. शा_४.१९ //
सूचिविद्धस्तथा चैव ह्यपविद्धस्तथैव च /
आक्षिप्तको ऽथ विज्ञेयस्तथा चोद्घट्टितः स्मृतः // ना. शा_४.२० //
विष्कम्भश्चैव सम्प्रोक्तस्तथा चैवापराजितः /
विष्कम्भापसृतश्चैअव मत्ताक्रीडस्तथैव च // ना. शा_४.२१ //
स्वस्तिको रेचितश्चैव पार्श्वस्वस्तिक एव च /
वृश्चिकापसृतः प्रोक्तो भ्रमरश्च तथापरः // ना. शा_४.२२ //
मत्तस्खलितकश्चैव मदाद्विलसितस्तथा /
गतिमण्डलको ज्ञेयः परिच्छिन्नस्तथैव च // ना. शा_४.२३ //
परिवृत्तचितो ऽथ स्यात्तथा वैशाखरेचितः /
परावृत्तो ऽथ विज्ञेयस्तथा चैवाप्यलातकः // ना. शा_४.२४ //
पार्श्वच्चेदो ऽथ सम्प्रोक्तो विद्युद्भ्रान्तस्तथैव च /
ऊरूद्वृत्तस्तथा चैव स्यादालीढस्तथैव च // ना. शा_४.२५ //
रेचितश्चापि विज्ञेयस्तथैवाच्चुरितः स्मृतः /
आक्षिप्तरेचितश्चैव सम्भ्रान्तश्च तथापरः // ना. शा_४.२६ //
अपसर्पस्तु विज्ञेयस्तथा चार्धनिकुट्टकः /
द्वात्रिंशदेते सम्प्रोक्ता अङ्गहारास्तु नामतः // ना. शा_४.२७ //
एतेषां तु प्रवक्ष्यामि प्रयोगं करणाश्रयम् /
हस्तपादप्रचारश्च यथा योज्यः प्रयोक्तृभिः // ना. शा_४.२८ //
अङ्गहारेषु वक्ष्यामि करणेषु च वै द्विजाः /
सर्वेषामङ्गहाराणां निष्पत्तिः करणैर्यतः // ना. शा_४.२९ //

तान्यतः सम्प्रवक्ष्यामि नामतः कर्मतस्तथा /
हस्तपादसमायोगो नृत्यस्य करणं भवेत् // ना. शा_४.३० //
द्वे नृत्तकरणे चैव भवतो नृत्तमातृका /
द्वाभ्यां त्रिभिश्चतुर्भिर्वाप्यङ्गहारस्तु मातृभिः // ना. शा_४.३१ //
त्रिभिः कलापकं चैव चतुर्भिः षण्डकं भवेत् /
पञ्चैव करणानि स्युः सङ्घातक इति स्मृतः // ना. शा_४.३२ //
षड्भिर्वा सप्तभिर्वापि अष्टभिर्नवभिस्तथा /
करणैरिह संयुक्ता अङ्गहाराः प्रकीर्ताः // ना. शा_४.३३ //
एतेषामेव वक्ष्यामि हस्तपादविकल्पनम् /
तलपुष्पपुटं पूर्वं वर्तितं वलितोरु च // ना. शा_४.३४ //
अपविद्धं समनखं लीनं स्वस्तिकरेचितम् /
मण्डलस्वस्तिकं चैव निकुट्टकमथापि च // ना. शा_४.३५ //
तथैवार्धनिकुट्टं च कटिच्चिन्नं तथैव च /
अर्धरेचितकं चैव वक्षःस्वस्तिकमेव च // ना. शा_४.३६ //
उन्मतं स्वस्तिकं चैव पृष्ठस्वस्तिकमेव च /
दिक्स्वस्तिकमलातं च तथैव च कटीसमम् // ना. शा_४.३७ //
आक्षिप्तरेचितं चैव विक्षिप्ताक्षिप्तकं तथा /
अर्धस्वस्तिकमुद्दिष्टमञ्चितं च तथापरम् // ना. शा_४.३८ //
भुजङ्गत्रासितं प्रोक्तमूर्ध्वजानु तथैव च /
निकुञ्चितं च मत्तल्लि त्वर्धमत्तल्लि चैव हि // ना. शा_४.३९ //
स्याद्रेचकनिक्कुट्टं च तथा पादापविद्धकम् /
वलितं घूर्णितं चैव ललितं च तथापरम् // ना. शा_४.४० //
दण्डपक्षं तथा चैव भुजङ्गत्रस्तरेचितम् /
नूपुरं चैव सम्प्रोक्तं तथा वैशाखरेचितम् // ना. शा_४.४१ //
भ्रमरं चतुरं चैव भुजङ्गाञ्चितमेव च /
दण्डरेचितकं चैव तथा वृश्चिककुट्टितम् // ना. शा_४.४२ //
कटिभ्रान्तं तथा चैव लतावृश्चिकमेव च /
चिन्नं च करणं प्रोक्तं तथा वृश्चिकरेचितम् // ना. शा_४.४३ //
वृश्चिकं व्यंसितं चैव तथा पार्श्वनिकुट्टकम् /
ललाटतिलकं क्रान्तं कुञ्चितं चक्रमण्डलम् // ना. शा_४.४४ //
उरोमण्डलमाक्षिप्तं तथा तलविलासितम् /
अर्गलं चाथ विक्षिप्तमावृत्तं दोलपादकम् // ना. शा_४.४५ //
विवृत्तं विनिवृत्तं च पार्श्वक्रान्तं निशुम्भितम् /
विद्युत्भ्रान्तमतिक्रान्तं विवर्तितकमेव च // ना. शा_४.४६ //
गजक्रीडितकं चैव तलसंस्फोटितं तथा /
गरुडप्लुतकं चैव गण्डसूचि तथापरम् // ना. शा_४.४७ //
परिवृत्तं समुद्दिष्टं पार्श्वजानु तथैव च /
गृध्रावलीनकं चैव सन्नतं सूच्यथापि च // ना. शा_४.४८ //
अर्धसूचीति करणं सूचिविद्धं तथैव च /

अपक्रान्तं च सम्प्रोक्तं मयूरललितं तथा // ना. शा_४.४९ //
सर्पितं दण्डपादं च हरिणप्लुतमेव च /
प्रेङ्खोलितं नितम्बं च स्खलितं करिहस्तकम् // ना. शा_४.५० //
प्रसर्पितकमुद्दिष्टं सिंहविक्रीडतं तथा /
सिंहाकर्षितमुद्वृत्तं तथोपसृतमेव च // ना. शा_४.५१ //
तलसंघट्टितं चैव जनितं चावहित्थकम् /
निवेशमेलकाक्रीडमूरूद्वृत्तं तथैव च // ना. शा_४.५२ //
मदस्खलितकं चैव विष्णुक्रान्तमथापि च /
सम्भ्रान्तमथ विष्कम्भमुद्घट्टितमथापि च // ना. शा_४.५३ //
वृषभक्रीडितं चैव लोलितं च तथापरम् /
नागापसर्पितं चैव शकटास्यं तथैव च // ना. शा_४.५४ //
गङ्गावतरणं चैवेत्युक्तमष्टाधिकं शतम् /
अष्टोत्तरशतं ह्येतत्करणानां मयोदितम् // ना. शा_४.५५ //
नृत्ये युद्धे नियुद्धे च तथ गतिपरिक्रमे /
गतिप्रचारे वक्ष्यामि युद्धचारीविकल्पनम् // ना. शा_४.५६ //
यत्र तत्रापि संयोज्यमाचार्यैर्नाट्यशक्तिनः /
प्रायेण करणे कार्यो वामो वक्षःस्थितः करः // ना. शा_४.५७ //
चरणस्यानुगश्चापि दक्षिणस्तु भवेत्करः /
हस्तपादप्रचारन्तु कटिपार्श्वोरुसंयुतम् // ना. शा_४.५८ //
उरःपृष्ठोदरोपेतं वक्ष्यमाणं निबोधत /
यानि स्थानानि याश्चार्यो नृत्यहस्तास्तथैव च // ना. शा_४.५९ //
सा मातृकेति विज्ञेया तद्योगात्करणं भवेत् /
कटी कर्णसमा यत्र कोर्परांसशिरस्तथा // ना. शा_४.६० //
समुन्नतमुरश्चैव सौष्ठवं नाम तद्भवेत् /
वामे पुष्पपुटः पार्श्वे पादो ऽग्रतलसञ्चरः // ना. शा_४.६१ //
तथा च सन्नतं पार्श्वं तलपुष्पपुटं भवेत् /
कुञ्चितौ मणिबन्धे तु व्यावृत्तपरिवर्तितौ // ना. शा_४.६२ //
हस्तौ निपतितौ चोर्वोर्वर्तितं करणं तु तत् /
शुकतुण्डौ यदा हस्तौ व्यावृत्तपरिवर्तितौ // ना. शा_४.६३ //
उरू च वलितौ यस्मिन्वलितोरुकमुच्यते /
आवर्त्य शुकतुण्डाख्यमूरुपृष्ठे निपातयेत् // ना. शा_४.६४ //
वामहतश्च वक्षःस्थो ऽप्यपविद्धं तु तद्भवेत् /
श्लिष्टौ समनखौ पदौ करौ चापि प्रलिम्बितौ // ना. शा_४.६५ //
देहः स्वाभाविको यत्र भवेत्समनखं तु तत् /
पताकाञ्जलि वक्षःस्थं प्रसारितशिरोधरम् // ना. शा_४.६६ //
निहञ्चितांसकूटं च तल्लिनं करणं स्मृतम् /
स्वस्तिकौ रेचिताविद्धौ विश्लिष्टौ कटिसंश्रितौ // ना. शा_४.६७ //
यत्र तत्करणं ज्ञेयं बुधैः स्वस्तिकरेचितम् /
स्वस्तिकौ तु करौ कृत्वा प्राङ्गमुखोर्ध्वतलौ समौ // ना. शा_४.६८ //

तथा च मण्डलं स्थानं मण्डलस्वस्तिकं तु तत् /
निकुट्टितौ यदा हस्तौ स्वबाहुशिरसो ऽन्तरे // ना. शा_४.६९ //
पादौ निकुट्टितौ चैव ज्ञेयं तत्तु निकुट्टकम् /
अञ्चितौ बाहुशिरसि हस्तस्त्वभिमुखाङ्गुलिः // ना. शा_४.७० //
निकुञ्चितार्धयोगेन भवेदर्थनिकुट्टकम् /
पर्यायशः कटिश्छिन्ना बाह्वोः शिरसि पल्लवौ // ना. शा_४.७१ //
पुनःपुनश्च करणं कटिच्छिनं तु तद्भवेत् /
अपविद्धकरः सूच्या पादश्चैव निकुट्टितः // ना. शा_४.७२ //
संन्नतं यत्र पार्श्वं च तद्भवेअर्धरेचितम् /
स्वस्तिकौ चरणौ यत्र करौ वक्षसि रेचितौ // ना. शा_४.७३ //
निकुञ्चितं तथा वक्षो वक्षस्स्वस्तिकमेव तत् /
आञ्चितेन तु पादेन रेचितौ तु करौ यदा // ना. शा_४.७४ //
उन्मतं करणं तत्तु विज्ञेयं नृत्यकोविदैः /
हस्ताभ्यामथ पादाभ्यां भवतः स्वस्तिकौ यदा // ना. शा_४.७५ //
तत्स्वस्तिकमिति प्रोक्तं करणं करणार्थिभिः /
विक्षिप्ताक्षिप्तबाहुभ्यां स्वस्तिकौ चरणौ यदा // ना. शा_४.७६ //
अपक्रान्तार्धसूचिभ्यां तत्पृष्ठस्वस्तिकं भवेत् /
पार्श्वयोरग्रतश्चैव यत्र श्लिष्टः करो भवेत् // ना. शा_४.७७ //
स्वस्तिकौ हस्तपादाभ्यां तद्दिक्स्वस्तिकमुच्यते /
अलातं चरणं कृत्वा व्यंसयेद्दक्षिणं करम् // ना. शा_४.७८ //
ऊर्ध्वजानुक्रमं कुर्यादलातकमिति स्मृतम् /
स्वस्तिकापसृतः पादः करौ नाभिकटिस्थितौ // ना. शा_४.७९ //
पार्श्वमुद्वाहितं चैव करणं तत्कटीसमम् /
हस्तौ हृदि भवेद्वामः सव्यश्चाक्षिप्तरेचितः // ना. शा_४.८० //
रेचितश्चापविद्धश्च तत्स्यादाक्षिप्तरेचितम् /
विक्षिप्तं हस्तपादं च तसैवाक्षेपणं पुनः // ना. शा_४.८१ //
यत्र तत्करणं ज्ञेयं विक्षिप्ताक्षिप्तकं द्विजाः /
स्वस्तिकौ चरणौ कृत्वा करिहस्तं च दक्षिणम् // ना. शा_४.८२ //
वक्षस्थाने तथा वाममर्धस्वस्तिकमादिशेत् /
व्यावृत्तपरिवृत्तस्तु स एव तु करो यदा // ना. शा_४.८३ //
अञ्चितो नासिकाग्रे तु तदञ्चितमुदाहृतम् /
कुञ्चितं पादमुत्क्षिप्य त्र्यश्रमूरुं विवर्तयेत् // ना. शा_४.८४ //
कटिजानुविवर्ताच्च भुजङ्गत्रासितं भवेत् /
कुञ्चितं पादमुत्क्षिप्य जनुस्तनसमं न्यसेत् // ना. शा_४.८५ //
प्रयोगवशगौ हस्तावूर्ध्वजानु प्रकीर्तितम् /
वृश्चिकं चरणं कृत्वा करं पार्श्वे निकुञ्चयेत् // ना. शा_४.८६ //
नासाग्रे दक्षिणं चैव ज्ञेयं तत्तु निकुञ्चितम् /
वामदक्षिणपादाभ्यां घूर्णमानोपसर्पणैः // ना. शा_४.८७ //
उद्वेष्टितापविद्धैश्च हस्तैर्मत्तल्ल्युदाहृतम् /

स्स्खलितापसृतौ पादौ वामहस्तश्च रेचितः // ना. शा_४.८८ //
सव्यहस्तः कटिस्थः स्यादर्धमत्तल्लि तत्स्मृतम् /
रेचितो दक्षिणो हस्तः पादः सव्यो निकुट्टितः // ना. शा_४.८९ //
दोला चैव भवेद्वामस्तद्रेचितनिकुट्टितम् /
कार्यौ नाभितटे हस्तौ प्राङ्मुखौ खटकामुखौ // ना. शा_४.९० //
सूचीविद्धावपक्रान्तौ पादौ पादापविद्धके /
अपविद्धो भवेद्धस्तः सूचीपादस्तथैअव च // ना. शा_४.९१ //
तथा त्रिकं विवृत्तं च वलितं नाम तद्भवेत् /
वर्तिताघूर्णितः सव्यो हस्तो वामश्च दोलितः // ना. शा_४.९२ //
स्वस्तिकापसृतः पादः करणं घूर्णितं तु तत् /
करिहस्तो भवेद्वामो दक्षिणश्च विवर्तितः // ना. शा_४.९३ //
बहुशः कुट्टितः पदो ज्ञेयं तल्ललितं बुधैः /
ऊर्ध्वजानुं विधायाथ तस्योपरि लतां न्यसेत् // ना. शा_४.९४ //
दण्ड्पक्षं तत्प्रोक्तं कर्णं नृत्यवेदिभिः /
भुजन्गत्रासितं कृत्वा यत्रोभावपि रेचितौ // ना. शा_४.९५ //
वामपार्श्वस्थ्तौ हस्तौ भुजङ्गत्रस्तरेचितम् /
त्रिकं सुवलितं कृत्वा लतारेचितकौ करौ // ना. शा_४.९६ //
नूपुर्श्च तथा पादः करणॆ नूपुरे न्यसेत् /
रेचितौ हस्तपादौ च कटी ग्रीवा च रेचिता // ना. शा_४.९७ //
वैशाखस्थानकेनैतद्भवेवैशाखरेचितम् /
आक्षिप्तः स्वस्तिकः पादः करौ चोद्वेष्टितौ तथा // ना. शा_४.९८ //
त्रिकस्य वलनाच्चैव ज्ञेयं भ्रमरकं तु तत् /
अन्चितः स्यात्करो वामः सव्यश्चतुर एव तु // ना. शा_४.९९ //
दक्षिणः कुट्टितः पादश्चतुरं तत्प्रकीर्तितम् /
भुजङ्गत्रासितः पादो दक्षिणो रेचितः करः // ना. शा_४.१०० //
लताख्यश्च करो वामो भुजङ्गान्चितकं भवेत् /
विक्षिप्तं हस्तपादं तु समन्ताद्यत्र दण्डवत् // ना. शा_४.१०१ //
रेच्यते तद्धि करणं ज्ञेयं दण्डकरेचितम् /
वृश्चिकं चरणं कृत्वा द्वावप्यथ निकुट्टितौ // ना. शा_४.१०२ //
विधातव्यौ करौ तत्तु ज्ञेयं वृश्चिककुट्टितम् /
सूचिं कृत्वापविद्धं च दक्षिणं चरणं न्यसेत् // ना. शा_४.१०३ //
रेचिता च कटिर्यत्र कटिभ्रान्तं तदुच्यते /
अन्चितः पृष्ठतः पादः कुन्चितोर्ध्वतलाङ्गुलिः // ना. शा_४.१०४ //
लताख्यश्च करो वामस्तल्लतावृश्चिकं भवेत् /
अलपद्मः कटीदेशे चिन्ना पर्यायशः कटी // ना. शा_४.१०५ //
वैशाखस्थानकेनेह तच्चिन्नं करणं भवेत् /
वृश्चिकं चरणं कृत्वा स्वस्तिकौ च करवुभौ // ना. शा_४.१०६ //
रेचितौ विप्रकीर्णौ च करौ वृश्चिकरेचितम् /
बाहुशीर्षान्चितौ हस्तौ पादः पृष्ठान्चितस्तथा // ना. शा_४.१०७ //

दूरसन्नतपृष्ठं च वृश्चिकं तत्प्रकीर्तितम् /
आलीढं स्थानकं यत्र करौ वक्षसि रेचितौ // ना. शा_४.१०८ //
ऊर्ध्वाधो विप्रकीर्णौ च व्यंसितं करणं तु तत् /
हस्तौ तु स्वस्तिकौ पार्श्वे तथा पादो निकुट्टितः // ना. शा_४.१०९ //
यत्र तत्करणं ज्ञेयं बुधैः पार्श्वनिकुट्टितम् /
वृश्चिकं चरणं कृत्वा पादस्याङ्गुष्ठकेन तु // ना. शा_४.११० //
ललाटे तिलकं कुर्याल्ललाटतिलकं तु तत् /
पृष्ठतः कुञ्चितं कृत्वा व्यतिक्रान्तक्रमं ततः // ना. शा_४.१११ //
आक्षिप्तौ च करौ कार्यौ क्रान्तके करणे द्विजाः /
आद्यः पादो नतः कार्यः सव्यहस्तश्च कुञ्चितः // ना. शा_४.११२ //
उत्तानो वामपार्श्वस्थस्तत्कुञ्चितमुदाहृतम् /
प्रलम्बिताभ्यां बाहुभ्यां यद्गात्रेणानतेन च // ना. शा_४.११३ //
अभ्यन्तरापविद्धः स्यात्तज्ज्ञेयं चक्रमण्डलम् /
स्वस्तिकापसृतौ पादावपविद्धक्रमौ यदा // ना. शा_४.११४ //
उरोमण्डलकौ हस्तावुरोमण्डलिकस्तु तत् /
आक्षिप्तं हस्तपादं च क्रियते यत्र वेगतः // ना. शा_४.११५ //
आक्षिओतं नाम करणं विज्ञेयं तद्द्विजोत्तमाः /
ऊर्ध्वाङ्गुलितलः पादः पार्श्वेनोर्ध्वं प्रसारितः // ना. शा_४.११६ //
प्रकुर्यादञ्चिततलौ हस्तौ तलविलासिते /
पृष्ठतः प्रसृतः पादौ द्वौ तालावर्धमेव च // ना. शा_४.११७ //
तस्येव चानुगो हस्तः पुरतस्त्वर्गलं तु तत् /
विक्षिप्तं हस्तपादं च पृष्ठतः पार्श्वतो ऽपि वा // ना. शा_४.११८ //
एकमार्गगतं यत्र तद्विक्षिप्तमुदाहृतम् /
प्रसार्य कुञ्चितं पादं पुनरावर्तयेत् द्रुतम् // ना. शा_४.११९ //
प्रयोगवशगौ हस्तौ तदावर्तमुदाहृतम् /
कुञ्चितं पादमुत्क्षिप्य पार्श्वात्पार्श्वं तु डोलयेत् // ना. शा_४.१२० //
प्रयोगवशगौ हस्तौ डोलापादं तदुच्यते /
आक्षिप्तं हस्तपादं च त्रिकं चैव विवर्तयेत् // ना. शा_४.१२१ //
रेचितौ च तथा हस्तौ विवृत्ते करणे द्विजाः /
सूचीविद्धं विधायाथ त्रिकं तु विनिवर्तयेत् // ना. शा_४.१२२ //
करौ च रेचितौ कार्यौ विनिवृत्ते द्विजोत्तमः /
पार्श्वक्रान्तक्रमं कृत्वा पुरस्तादथ पातयेत् // ना. शा_४.१२३ //
प्रयोगवशगौ हस्तौ पार्श्वक्रान्तं तदुच्यते /
पृष्ठतः कुञ्चितः पादौ वक्षश्चैव समुन्नतम् // ना. शा_४.१२४ //
तिलके च करः स्थाप्यस्तन्निस्तम्भितमुच्यते /
पृष्ठतो वलितं पादं शिरोघृष्टं प्रसारयेत् // ना. शा_४.१२५ //
सर्वतो मण्डलाविद्धं विद्युद्भ्रान्तं तदुच्यते /
अतिक्रान्तक्रमं कृत्वा पुरस्तात्संप्रसारयेत् // ना. शा_४.१२६ //
प्रयोगवशगौ हस्तावतिक्रान्ते प्रकीर्तितौ /

आक्षिप्तं हस्तपादं च त्रिकं चैव विवर्तितम् // ना. शा_४.१२७ //
द्वितीयो रेचितो हस्तो विवर्तितकमेव तत् /
कर्णे ऽञ्चितः करो वामो लताहस्तश्च दक्षिणः // ना. शा_४.१२८ //
दोलापादस्तथा चैव गजक्रीडितकं भवेत् /
द्रुतमुत्क्षिप्य चरणं पुरस्तादथ पातयेत् // ना. शा_४.१२९ //
तलसंस्फोटितौ हस्तौ तलसंस्फोटिते मतौ /
पृष्ठप्रसारितः पादः लतारेचितकौ करौ // ना. शा_४.१३० //
समुन्नतं शिरश्चैव गरुडप्लुतकं भवेत् /
सूचिपादो नतं पार्श्वमेको वक्षःस्थितः करः // ना. शा_४.१३१ //
द्वितीयश्चाञ्चितो गण्डे गण्डसूची तदुच्यते /
ऊर्ध्वापवेष्टितौ हस्तौ सूचीपादो विवर्तितः // ना. शा_४.१३२ //
परिवृत्तत्रिकं चैव परिवृत्तं तदुच्यते /
एकः समस्थितः पाद ऊरुपृष्ठे स्थितो ऽपरः // ना. शा_४.१३३ //
मुष्टिहस्तश्च वक्षःस्थः पार्श्वजानु तदुच्यते /
पृष्ठप्रसारितः पादः किञ्चितञ्चित जानुकः // ना. शा_४.१३४ //
यत्र प्रसारितो बाहू तत्स्यात् गृध्रावलीनकम् /
उत्प्लुत्य चरणौ कार्यावग्रतः स्वस्तिकस्थितौ // ना. शा_४.१३५ //
सन्नतौ च तथा हस्तौ सन्नतं तदुदाहृतम् /
कुञ्चितं पादमुत्क्षिप्य कुर्यादग्रस्थितं भुवि // ना. शा_४.१३६ //
प्रयोगवशगौ हस्तौ सा सूची परिकीर्तिता /
अलपद्मः शिरोहस्तः सूचीपादश्च दक्षिणः // ना. शा_४.१३७ //
यत्र तत्करणं ज्ञेअयमर्धसूचीति नामतः /
पादसूच्या यदा पादो द्वितीयस्तु प्रविध्यते // ना. शा_४.१३८ //
कटिवक्षःस्थितौ हस्तौ सूचीविधं तदुच्यते /
कृत्वोरुवलितं पादमपक्रान्तक्रमं न्यसेत् // ना. शा_४.१३९ //
प्रयोगवशगौ हस्तवपक्रान्तं तदुच्यते /
वृश्चिकं चरणं कृत्वा रेचितौ च तथा करौ // ना. शा_४.१४० //
तथा त्रिकं विवृत्तं च मयूरललितं भवेत् /
अञ्चितापसृतौ पादौ शिरश्च परिवाहितम् // ना. शा_४.१४१ //
रेचितौ च तथा हस्तौ तत्सर्पितमुदाहृतम् /
नूपुरं चरणं कृत्वा दण्डपादं प्रसारयेत् // ना. शा_४.१४२ //
क्षिप्राविद्धकरं चैव दण्डपादं तदुच्यते /
अतिक्रान्तक्रमं कृत्वा समुत्प्लुत्य निपातयेत् // ना. शा_४.१४३ //
जङ्घाञ्चितोपरि क्षिप्ता तद्विद्याद्धरिणप्लुतम् /
(सी थे च्लुस्तेर् ङ्घा. आ नेव् लिगतुरे मय् बे अद्देद् तो रेप्रेसेन्त् थिस् च्लुस्तेर्)
डोलापादक्रमं कृत्वा समुत्प्लुत्य निपातयेत् // ना. शा_४.१४४ //
परिवृत्तत्रिकं चैव तत्प्रेङ्खोलितमुच्यते /
भुजावूर्ध्वविनिष्क्रान्तौ हस्तौ चाभिमुखाङ्गुली // ना. शा_४.१४५ //
बद्धा चारी तथ चैव नितम्बे करणे भवेत् /

दोलापादक्रमं कृत्वा हस्तौ तदनुगावुभौअ // ना. शा_४.१४६ //
रेचितौ घूर्णितौ वापि स्खलितं करणं भवेत् /
एको वक्षःस्थितो हस्तः प्रोद्वेष्टिततलो ऽपरः // ना. शा_४.१४७ //
अञ्चितश्चरणश्चैव प्रयोज्यः करिहस्तके /
एकस्तु रेचितो हस्तो लताख्यस्तु तथा परः // ना. शा_४.१४८ //
प्रसर्पिततलौ पादौ प्रसर्पितकमेव तत् /
अलातं च पुरःकृत्वा द्वितीयं च द्रुतक्रमम् // ना. शा_४.१४९ //
हस्तौ पादानुगौ चापि सिंहविक्रीडिते स्मृतौ /
पृष्ठप्रसर्पितः पादस्तथा हस्तौ निकुञ्चितौ // ना. शा_४.१५० //
पुनस्तथैव कर्तव्यौ सिंहाकर्ष्तके द्विजाः /
आक्षिप्तहस्तमाक्षिप्तदेहमाक्षिप्तपादकम् // ना. शा_४.१५१ //
अद्वृत्तगात्रमित्येतदुद्वृतां करणं स्मृतम् /
आक्षिप्तचरणश्चैको हस्तौ तस्यैव चानुगौ // ना. शा_४.१५२ //
आनतं च तथ गात्रं तयोपसृतकं भवेत्
दोलापादक्रमं कृत्वा तलसङ्घट्टितौ करौ // ना. शा_४.१५३ //
रेचयेच्च करं वामं तलसङ्घट्टिते सदा /
एको वक्षःस्थितो हस्तो द्व्तीयश्च प्रलम्बितः // ना. शा_४.१५४ //
तलाग्रसंस्थितः पादो जनिते करणे भवेत् /
जनितं करणं कृत्वा हस्तौ चाभिमुखाङ्गुली // ना. शा_४.१५५ //
शनैर्निपतितो चैव ज्ञेयं तदवहित्थकम् /
करौ वक्षःस्थितौ कार्यावुरौ निर्भुग्नमेव च // ना. शा_४.१५६ //
मण्डलस्थानकं चैव निवेशं करणं तु तत् /
तलसञ्चरपादाभ्यामुत्प्लुत्य पतनं भवेत् // ना. शा_४.१५७ //
संनतं वलितं गात्रमेलकाक्रीडितं तु तत् /
करमावृत्तकरणमूरुपृष्ठे ऽञ्चितं न्यसेत् // ना. शा_४.१५८ //
जङ्घाञ्चिता तथोद्वृत्ता ह्यूरूद्वृत्तं तु तद्भवेत् /
करौ प्रलम्बितौ कार्यो शिरश्च परिवाहितम् // ना. शा_४.१५९ //
पादौ च वलिताविध्दौअ मदस्खलितके द्विजाः /
पुरः प्रसारितः पादः कुञ्चितो गगनोन्मुखः // ना. शा_४.१६० //
करौ च रेचितौ यत्र विष्णुक्रान्तं तदुच्यते /
करमावर्तितं कृत्वा ह्यूरुपृष्ठे निकुञ्चयेत् // ना. शा_४.१६१ //
ऊरुश्चैव तथाविद्धः सम्भ्रान्तं करणं तु तत् /
अपविद्धः करः सूच्या पादश्चैव निकुट्टितः // ना. शा_४.१६२ //
वक्षःस्थश्च करो वामो विष्कम्भे करणे भवेत् /
पादावुद्घट्टितौ कार्यौ तलसङ्घट्टितौ करौ // ना. शा_४.१६३ //
नतश्च पार्श्वं कर्तव्यं बुधैरुद्घट्टिते सदा /
प्रयुज्यालातकं पूर्वं हस्तौ चापि हि रेचयेत् // ना. शा_४.१६४ //
कुञ्चितावञ्चितौ चैव वृषभक्रीडिते सदा /
रेचितावञ्चितौ हस्तौ लोलितं वर्तितं शिरः // ना. शा_४.१६५ //

उभयोःपार्श्वयोर्यत्र तल्लोलितमुदाहृतम् /
स्वस्तिकापसृतौ पादौ शिरश्च परिवाहितम् // ना. शा_४.१६६ //
रेचितौ च तथा हस्तौ स्यातां नागापसर्पिते /
निषण्णाङ्गस्तु चरणं प्रसार्य तलसञ्चरम् // ना. शा_४.१६७ //
उद्वाहितमुरः कृत्वा शकटास्यं प्रयोजयेत् /
ऊर्ध्वाङ्गुलितलौ पादौ त्रिपताकावधोमुखौ // ना. शा_४.१६८ //
हस्तौ शिरस्सन्नतं च गङ्गावतरणं त्विति /
यानि स्थानानि याश्चार्यो व्यायामे कथितानि तु // ना. शा_४.१६९ //
पादप्रचारस्त्वेषां तु करणानामयं भवेत् /
ये चापि नृत्तहस्तास्तु गदिता नृत्तकर्मणि // ना. शा_४.१७० //
तेषां समासतो योगः करणेषु विभाव्यते /
प्रायेण करणे कार्यो वामो वक्षःस्थितः करः // ना. शा_४.१७१ //
चरणश्चानुगश्चापि दक्षिणस्तु भवेत्करः /
चार्यश्चैव तु याः प्रोक्ता नृत्तहस्तास्तथैव च // ना. शा_४.१७२ //
सा मातृकेति विज्ञेया तद्भेदात्करणानि तु /
अष्टोत्तरशतं ह्येतत्करणानां मयोदितम् // ना. शा_४.१७३ //
अतः परं प्रवक्ष्यामि ह्यङ्गहारविकल्पनम् /
प्रसार्योत्क्षिप्य च करौ समपादं प्रयोजयेत् // ना. शा_४.१७४ //
व्यंसितापसृतं सव्यं हस्तमूर्ध्वं प्रसारयेत् /
प्रत्यालीढं ततः कुर्यात् तथैव च निकुट्टकम् // ना. शा_४.१७५ //
ऊरूद्वृत्तं ततः कुर्यादक्षिप्तं स्वस्तिकं ततः /
नितम्बं करि हस्तं च कटिच्छिन्नं च योगतः // ना. शा_४.१७६ //
स्थिरहस्तो भवेदेष त्वङ्गहारो हरप्रियः /
तलपुष्पापविद्धे द्वे वर्तितं संनिकुट्टिकम् // ना. शा_४.१७७ //
ऊरूद्वृत्तं तथाक्षिप्तमुरोमण्डलमेव च /
नितम्बं करिहस्तं च कटिच्छिन्नं तथैव च // ना. शा_४.१७८ //
एष पर्यस्तको नाम ह्यङ्गहारो हरोद्भवः /
अलपल्लवसूचीं च कृत्वा विक्षिप्तमेव च // ना. शा_४.१७९ //
आवर्तितं ततः कुर्यात्तथैअव च निकुट्टकम् /
ऊरूद्वृत्तं तथाक्षिप्तमुरोमण्डलमेव च // ना. शा_४.१८९ //
करिहस्तं कटिच्छिन्नं सूचीविद्धो भवेदयम् /
अपविद्धं तु करणं सूचीविद्धं तथैव च // ना. शा_४.१८१ //
उद्वेष्टितेन हस्तेन त्रिकं तु परिवर्तयेत् /
उरोमण्डलकौ हस्तौ कटिच्छिन्नं तथैव च // ना. शा_४.१८२ //
अपविद्धो ऽङ्गहाराश्च विज्ञेयो ऽयं प्रयोक्तृभिः /
करणं नूपुरं कृत्वा विक्षिप्तालातके पुनः // ना. शा_४.१८३ //
पुनराक्षिप्तकं कुर्यादुरोमण्डलकं तथा /
नितम्बं करिहस्तं च कटिच्छिन्नं तथैव च // ना. शा_४.१८४ //
आक्षिप्तकः स विज्ञेयो ह्यङ्गहारः प्रयोक्तृभिः /

उद्वेष्टितापविद्धस्तु करः पादो निकुट्टितः // ना. शा_४.१८५ //
पुनस्तैनैव योगेन वामपार्श्वे भवेदथ /
उरोमण्डलकौ हस्तौ नितम्बं करिहस्तकम् // ना. शा_४.१८६ //
कर्तव्यं सकटिच्चिन्नं नृत्ये तूद्घट्टिते सदा /
पर्यायोद्वेष्टितौ हस्तौ पादौ चैव निकुट्टितौ // ना. शा_४.१८७ //
कुञ्चितावञ्चितौअ चैव ह्यूरूद्वृत्तं तथैव च /
चतुरश्रं करं कृत्वा पादेन च निकुट्टकम् // ना. शा_४.१८८ //
भुजङ्गत्रासितं चैव करं चोद्विष्टितं पुनः /
परिच्चिन्नं च कर्तव्यं त्रिकं भ्रमरकेण तु // ना. शा_४.१८९ //
करिहस्तं कटिच्चिन्नं विष्कम्भे परिकीर्तितम् /
दण्डपादं करं चैव विक्षिप्याक्षिप्य चैव हि // ना. शा_४.१९० //
व्यंसितं वामहस्तं च सह पादेन सर्पयेत् /
निकुट्टकद्वयं कार्यमाक्षिप्तं मण्डलोरसि // ना. शा_४.१९१ //
करिहस्तं कटिच्चिन्नं कर्तव्यमपराजिते /
कुट्टितं करणं कृत्वा भुजङ्गत्रासितं तथा // ना. शा_४.१९२ //
रेचितेन तु हस्तेन पताकं हस्तमादिशेत् /
आक्षिप्तकं प्रयुञ्जीत ह्युरोमण्डलकं तथा // ना. शा_४.१९३ //
लताख्यं सकटकच्चिन्नं विष्कम्भापसृते भवेत् /
त्रिकं सुवलितं कृत्वा नूपुरं करणं तथा // ना. शा_४.१९४ //
भुजङ्गत्रासितं सव्यं तथा वैशाखरेचितम् /
आक्षिप्तकं ततः कृत्वा परिच्चिन्नं तथैव च // ना. शा_४.१९५ //
बाह्यभ्रमरकं कुर्यादुरोमण्डलमेव च /
नितम्बं करिहस्तं च कटिच्चिन्नं तथैव च // ना. शा_४.१९६ //
मत्ताक्रीडो भवेदेष ह्यङ्गहारो हरप्रियः /
रेचितं हस्तपादं च कृत्वा वृश्चिकमेव च // ना. शा_४.१९७ //
पुनस्तेनैव योगेन वृश्चिकं सम्प्रयोजयेत् /
निकुट्टकं तथा चैव सव्यासव्यकृतं क्रमात् // ना. शा_४.१९८ //
लताख्यः सकटिच्चेदो भवेत्स्वस्तिकरेचिते /
पार्श्वे तु स्वस्तिकं बद्ध्वा कार्यं त्वथ निकुट्टकम् // ना. शा_४.१९९ //
द्वितीयस्य च पार्श्वस्य विधिः स्याद्यमेव हि /
ततश्च करमावर्त्य ह्यूरूपृष्ठे निपातयेत् // ना. शा_४.२०० //
ऊरूद्वृत्तं ततः कुर्यादाक्षिप्तं पुनरेव हि /
नितम्बं करिहस्तं च कटिच्चिन्नं तथैव च // ना. शा_४.२०१ //
पार्श्वस्वस्तिक इत्येष ह्यङ्गहारः प्रकीर्तितः /
वृश्चिकं करणं कृत्वा लताख्यं हस्तमेव च // ना. शा_४.२०२ //
तमेव च करं भूयो नासाग्रे सन्निकुञ्चयेत् /
तमेवोद्वेष्टितं कृत्वा नितम्बं परिवर्तयेत् // ना. शा_४.२०३ //
करिहस्तं कटिच्चिन्नं वृश्चिकापसृते भवेत् /
कृत्वा नूपुरपादं तु तथाक्षिप्तकमेव च // ना. शा_४.२०४ //

परिच्चिन्नं च कर्तव्यं सूचीपादं तथैव च /
नितम्बं करिहस्तं चाप्युरोमण्डलकं तथा // ना. शा_४.२०५ //
कटीच्चिन्नं ततश्चैव भ्रमरः स तु संज्ञितः /
मतल्लिकरणं कृत्वा करमावर्त्य दक्षिणम् // ना. शा_४.१०६ //
कपोलस्य प्रदेशे तु कार्यं सम्यङ्निकुञ्चितम्
अपविद्धं द्रुतं चैव तलसंस्फोटसंयुतम् // ना. शा_४.२०७ //
करिहस्तं कटिच्चिन्नं मत्तस्खलितके भवेत् /
दोलैः करैः प्रचलितैः स्वस्तिकापसृतैः पदैः // ना. शा_४.२०८ //
अञ्चितैर्वलितैर्हस्तैस्तलसङ्घट्टितैस्तथा /
निकुट्टितं च कर्तव्यमूरूद्वृतं तथैव च // ना. शा_४.२०९ //
करिहस्तं कटिच्चिन्नं मदाद्विलसिते भवेत् /
मण्डलं स्थानकं कृत्वा तथा हस्तौ च रेचितौ // ना. शा_४.२१० //
उद्घट्टितेन पादेन मत्तल्लिकरणं भवेत् /
आक्षिप्तं करणं चैव ह्युरोमण्डलमेव च // ना. शा_४.२११ //
कटिच्चिन्नं तथा चैव भवेत्तु गतिमण्डले /
समपादं प्रयुज्याथ परिच्चिन्नं त्वनन्तरम् // ना. शा_४.२१२ //
आविद्धेन तु पादेन बाह्यभ्रमरकं तथा /
वामसूच्या त्वतिक्रान्तं भुजङ्गत्रासितं तथा // ना. शा_४.२१३ //
करिहस्तं कटिच्चिन्नं परिच्चिन्ने विधीयते /
शिरसस्तूपरि स्थाप्यौ स्वस्तिअकौ विच्युतौ करौ // ना. शा_४.२१४ //
ततः सव्यं करं चापि गात्रमानम्य रेचयेत् /
पुनरुत्थापयेत्तत्र गात्रमुन्नम्य रेचितम् // ना. शा_४.२१५ //
लताख्यौ च करौ कृत्वा वृश्चिकं सम्प्रयोजयेत् /
रेचितं करिहस्तं च भुजङ्गत्रासितं तथा // ना. शा_४.२१६ //
आक्षिप्तकं प्रयुञ्जीत स्वस्तिकं पादमेव च /
पराङ्ग्मुखविधिर्भूय एवमेव भवेदिह // ना. शा_४.२१७ //
करिहस्तं कटिच्चिन्नं परिवृत्तकरेचिती /
रेचितौ सह गात्रेण ह्यपविद्धौ करौ यदा // ना. शा_४.२१८ //
पुनस्तेनैव देशेन गात्रमुन्नम्य रेचयेत् /
कुर्यान्नूपुरपादं च भुजङ्गत्रासितं तथा // ना. शा_४.२१९ //
रेचितं मण्डलं चैव बाहुशीर्षे निकुञ्चयेत् /
ऊरूद्वृत्तं तथाक्षिप्तमुरोमण्डलमेव च // ना. शा_४.२२० //
करिहस्तं कटिच्चिन्नं कुर्याद्वैशाखरेचिते /
आद्यं तु जनितं कृत्वा पादमेकं प्रसारयेत् // ना. शा_४.२२१ //
तथैवालातकं कुर्यात् त्रिकं तु परिवर्तयेत् /
अञ्चितं वामहस्तं च गण्डदेशे निकुट्टयेत् // ना. शा_४.२२२ //
कटिच्चिन्नं तथा चैव परावृत्ते प्रयोजयेत् /
स्वस्तिकं करणं कृत्वा व्यंसितौ च करौ पुनः // ना. शा_४.२२३ //
अलातकं प्रयुञ्जीत ह्यूर्ध्वजानु निकुञ्चितम् /

अर्धसूची च विक्षिप्तमुद्वृत्ताक्षिप्तके तथा // ना. शा_४.२२४ //
करिहस्तं कटिच्छिन्नमङ्गहारे ह्यलातके /
निकुट्य वक्षसि करावूर्ध्वजानु प्रयोजयेत् // ना. शा_४.२२५ //
आक्षिप्तस्वस्तिकं कृत्वा त्रिकं तु परिवर्तयेत् /
उरोमण्डलकौ हस्तौ नितम्बं करिहस्तकम् // ना. शा_४.२२६ //
कटिच्छिन्नं तथा चैव पार्श्वच्चेदे विधीयते /
सूचीवामपदं दध्याद्विद्युद्भ्रान्तं च दक्षिणम् // ना. शा_४.२२७ //
दक्षिणेन पुनः सूची विद्युद्भ्रान्तं च वामतः /
परिच्छिन्नं तथा चैव ह्यतिक्रान्तं च वामकम् // ना. शा_४.२२८ //
लताख्यं सकटिच्छिन्नं विद्युद्भ्रान्तश्च स स्मृतः /
कृत्वा नूपुरपादं तु सव्यवामौ प्रलम्बितौ // ना. शा_४.२२९ //
करौ पार्श्वे ततस्ताभ्यां विक्षिप्तं सम्प्रयोजयेत् /
ताभ्यां सूची तथा चैव त्रिकं तु परिवर्तयेत् // ना. शा_४.२३० //
लताख्यं सकटिच्छिन्नं कुर्तादुद्वृत्तके सदा /
आलीढव्यंसितौ हस्तौ बाहुशीर्षे निकुट्टयेत् // ना. शा_४.२३१ //
नूपुरश्चरणो वामस्तथालातश्च दक्षिणः /
तेनैवाक्षिप्तकं कुर्यादुरोमण्डलकौ करौ // ना. शा_४.२३२ //
करिहस्तं कटिच्छिन्नमालीढे सम्प्रयोजयेत् /
हस्तं तु रेचितं कृत्वा पार्श्वमानस्य रेचयेत् // ना. शा_४.२३३ //
पुनस्तेनैव योगेन गात्रमानस्य रेचयेत् /
रेचितं करणं कार्यमुरोमण्डलमेव च // ना. शा_४.२३४ //
कटिच्छिन्नं तु कर्तव्यमङ्गहारे तु रेचिते /
नूपुरं चरणं कृत्वा त्रिकं तु परिवर्तयेत् // ना. शा_४.२३५ //
व्यंसितेन तु हस्तेन त्रिकमेव विवर्तयेत् /
वामं चालातकं कृत्वा सूचीमत्रैव योजयेत् // ना. शा_४.२३६ //
करिहस्तं कटिच्छिन्नं कुर्यादाच्छुरिते सदा /
रेचितौ स्वस्तिकौ पादौ रेचितौ स्वस्तिकौ करौ // ना. शा_४.२३७ //
कृत्वा विश्लेषमेवं तु तेनैव विधिना पुनः /
पुनरुत्क्षेपणं चैव रेचितैरेव कारयेत् // ना. शा_४.२३८ //
उद्वृत्ताक्षिप्तके चैव ह्युरोमण्डलमेव च /
नितम्बं करिहस्तं च कटिच्छिन्नं तथैव च // ना. शा_४.२३९ //
आक्षिप्तरेचितो ह्येष करणानां विधिः स्मृतः /
विक्षिप्त करणं कृत्वा हस्तपादं मुखागमम् // ना. शा_४.२४० //
वामसूचिसहकृतं विक्षिपेद्वामकं करम् /
वक्षःस्थाने भवेत्सव्यो वलितं त्रिकमेव च // ना. शा_४.२४१ //
नूपुराक्षिप्तके चैव ह्यर्धस्वस्तिकमेव च /
नितम्बं करिहस्तं च ह्युरोमण्डलकं तथा // ना. शा_४.२४२ //
कटिच्छिन्नं च कर्तव्यं सम्भ्रान्ते नृत्तयोक्तृभिः /
अपक्रान्तक्रमं कृत्वा व्यंसितं हस्तमेव च // ना. शा_४.२४३ //

कुर्यादुद्वेष्टितं चैव ह्यर्धसूचीं तथैव च /
विक्षिप्तं सकटिच्छिन्नमुद्वृत्ताक्षिप्तके तथा // ना. शा_४.२४४ //
करिहस्तं कटिच्छिन्नं कर्तव्यमपसर्पिते /
कृत्वा नूपुरपादं च द्रुतमाक्षिप्य च क्रमम् // ना. शा_४.२४५ //
पादस्य चानुगौ हस्तौ त्रिकं च परिवर्तयेत् /
निकुट्य करपादं चाप्युरोमण्डलकं पुनः // ना. शा_४.२४६ //
करिहस्तं कटिच्छिन्नं कार्यमर्धनिकुट्टके /
द्वात्रिंशदेते सम्प्रोक्ता ह्यङ्गहारा द्विजोत्तमाः // ना. शा_४.२४७ //
चतुरो रेचकांश्चापि गदतो मे निबोधत /
पादरेचक एकः स्यात् द्वितीयः कटिरेचकः // ना. शा_४.२४८ //
कररेचकस्तृतीयस्तु चतुर्थः कण्ठरेचकः /
[रेचिताख्यः पृथग्भावे वलने चाभिधीयते /
उद्वाहनात्पृथग्भावाच्चलनाच्चापि रेचकः // ना. शा_४.२४९अब्*१ //
पार्श्वात्पार्श्वे तु गमनं स्खलितैश्चलितैः पदैः /
विविधैश्चैव पादस्य पादरेचक उच्यते // ना. शा_४.२४९अब्*२ //
त्रिकस्योद्वर्तनं चैव चटीवलनमेव च /
तथाऽपसर्पणं चैव कटिरेचक उच्यते // ना. शा_४.२४९अब्*३ //
उद्वर्तनं परिक्षेपो विक्षेपः परिवर्तनम् /
विसर्पणं च हस्तस्य हस्तरेचक उच्यते // ना. शा_४.२४९अब्*४ //
उद्वाहनं सन्नमनं तथा पार्श्वस्य सन्नतिः /
भ्रमणं चापि विज्ञेयो ग्रीवाया रेचको बुधैः] // ना. शा_४.२४९अब्*५ //
रेचकैरङ्गहारैश्च नृत्यन्तं वीक्ष्य शङ्करम् // ना. शा_४.२४९ //
सुकुमारप्रयोगेण नृत्यन्तीं चैव पार्वतीम् /
मृदङ्गभेरीपटहैर्भाण्डडिण्डिमगोमुखैः // ना. शा_४.२५० //
पणवैर्ददुरैश्चैव सर्वातोद्यैः प्रवादितैः /
दक्षयज्ञे विनिहते सन्ध्याकाले महेश्वरः // ना. शा_४.२५१ //
नानाङ्गहारैः प्रानृत्यल्लयतालवशानुगैअः /
पिण्डिबन्धांस्ततो दृष्ट्वा नन्दिभद्रमुखा गणाः // ना. शा_४.२५२ //
चक्रुस्ते नाम पिण्डीनां बन्धमासां सलक्षणम् /
ईश्वरस्येश्वरी पिन्डी नन्दिनश्चापि पट्टसी // ना. शा_४.२५३ //
चण्डिकाया भवेत्पिण्डी तथा वै सिंहवाहिनी /
तार्क्ष्यपिण्डी भवेद्विष्णोः पद्मपिण्डी स्वयंभुवः // ना. शा_४.२५४ //
शक्रस्यैरावती पिण्डी झषपिण्डी तु मान्मथी /
शिखिपिण्डी कुमारस्य रूपपिण्डी भवेच्छ्रियः // ना. शा_४.२५५ //
धारापिण्डी च जाह्नव्याः पाशपिण्डी यमस्य च /
वारुणी च नदीपिण्डी याक्षी स्याद्धनदस्य तु // ना. शा_४.२५६ //
हलपिण्डी बलस्यापि सर्पपिण्डी तु भोगिनाम् /
गाणेश्वरी महापिण्डी दक्षयज्ञविमर्दिनी // ना. शा_४.२५७ //
त्रिशूलाकृतिसंस्थाना रौद्री स्यादन्धकद्विषः /

एवमन्यास्वपि तथा देवतासु यथाक्रमम् // ना. शा_४.२५८ //
ध्वजभूताः प्रयोक्तव्याः पिण्डीबन्धाः सुचिह्निताः /
रेचका अङ्गहाराश्च पिण्डीबन्धातस्थैव च // ना. शा_४.२५९ //
सृष्ट्वा भगवता दत्तास्तण्डवे मुनये तदा /
तेनापि हि ततः सम्यग्गानभाण्डसमन्वितः // ना. शा_४.२६० //
नृत्तप्रयोगः सृष्टो यः स ताण्डव इति स्मृतः /
ऋषय ऊचुः -
यदा प्राप्त्यर्थमर्थानां तज्ज्ञैरभिनयः कृतः // ना. शा_४.२६१ //
कस्मानृत्तं कृतं ह्येतत्कं स्वभावमपेक्षते /
न गीतकार्थसम्बद्धं न चाप्यर्थस्य भावकम् // ना. शा_४.२६२ //
कस्मान्नृत्तं कृतं ह्येतद्गीतेष्वासारितेषु च /
भरतः -
अत्रोच्यते न खल्वर्थं कञ्चिन्नृत्तमपेक्षते // ना. शा_४.२६३ //
किं तु शोभां प्रजनयेदिति नृत्तं प्रवर्तितम् /
प्रायेण सर्वलोकस्य नृत्तमिष्टं स्वभावतः // ना. शा_४.२६४ //
मङ्गलमिति कृत्वा च नृत्तमेतत्प्रकीर्तितम् /
विवाहप्रसवावाहप्रमोदाभ्युअदयादिषु // ना. शा_४.२६५ //
विनोदकारणं चेति नृत्तमेतत्प्रवर्तितम् /
अतश्चैव प्रतिक्षेपाद्भूतसङ्घैः प्रवर्तिताः // ना. शा_४.२६६ //
ये गीतकादौ युज्यन्ते सम्यङ्नृत्तविभागकाः /
देवेन चापि सम्प्रोक्तस्तण्डुस्ताण्डवपूर्वकम् // ना. शा_४.२६७ //
गीतप्रयोगमाश्रित्य नृत्तमेतत्प्रवर्त्यताम् /
प्रायेण ताण्डवविधिर्देवस्तुत्याश्रयो भवेत् // ना. शा_४.२६८ //
सुकुमारप्रयोगश्च शृङ्गाररससम्भवः /
तस्य तण्डुप्रयुक्तस्य ताण्डवस्य विधिक्रियाम् // ना. शा_४.२६९ //
वर्धमानकमासाद्य सम्प्रवक्ष्यमि लक्षणम् /
कलानां वृद्धिमासाद्य ह्यक्षराणां च वर्धनात् // ना. शा_४.२७० //
लयस्य वर्धनाच्चापि वर्धमानकमुच्यते /
कृत्वा कुतपविन्यासं यथावद्द्विजसत्तमाः // ना. शा_४.२७१ //
आसारितप्रयोगस्तु ततः कार्यः प्रयोक्तृभिः /
तत्र तूपोहनं कृत्वा तन्त्रीगानसमन्वितम् // ना. शा_४.२७२ //
कार्यः प्रवेशो नर्तक्या भाण्डवाद्यसमन्वितः /
विशुद्धकरणायां तु जात्यां वाद्यं प्रयोजयेत् // ना. शा_४.२७३ //
गत्या वाद्यानुसारिण्या तस्याश्चारीं प्रयोजयेत् /
वैशाखस्थानकेनेह सर्वरेचकचारिणी // ना. शा_४.२७४ //
पुष्पाञ्जलिधरा भूत्वा प्रविशेद्रङ्गमण्डपम् /
पुष्पाञ्जलिं विसृज्याथ रङ्गपीठं परीत्य च // ना. शा_४.२७५ //
प्रणम्य देवताभ्यश्च ततो ऽभिनयमाचरेत् /
यत्राभिनेयं गीतं स्यात्तत्र वाद्यं न योजयेत् // ना. शा_४.२७६ //

अङ्गहारप्रयोगे तु भाण्डवाद्यं विधीयते /
समं रक्तं विभक्तं च स्फुटं शुद्धप्रहारजम् // ना. शा_४.२७७ //
नृत्ताङ्गग्राहि वाद्यज्ञैर्वाद्यं योज्यं तु ताण्डवे /
प्रयुज्य गीतवाद्ये तु निष्क्रामेन्नर्तकी ततः // ना. शा_४.२७८ //
अनेनैव विधानेन प्रविशन्त्यपराः पृथक् /
अन्याश्चानुक्रमेणाथ पिण्डीं बध्नन्ति याः स्त्रियः // ना. शा_४.२७९ //
तावत्पर्यस्तकः कार्यो यावत्पिण्डी न बध्यते /
पिण्डीं बद्ध्वा ततः सर्वा निष्क्रामेयुः स्त्रियस्तु ताः // ना. शा_४.२८० //
पिण्डीबन्धेषु वाद्यं तु कर्तव्यमिह वादकैअः /
पर्यस्तकप्रमाणेन चित्रौघकरणान्वितम् // ना. शा_४.२८१ //
तत्रोपवाहनं भूयः कार्यं पूर्ववदेव हि /
ततश्चासारितं भूयो गायनं तु प्रयोजयेत् // ना. शा_४.२८२ //
पूर्वेणैव विधानेन प्रविशेच्चापि नर्तकी /
गीतकार्थं त्वभिनयेद् द्वितीयासारितस्य तु // ना. शा_४.२८३ //
तदेव च पुनर्वस्तु नृत्तेनापि प्रदर्शयेत् /
आसारिते समाप्ते तु निष्क्रामेन्नर्तकी ततः // ना. शा_४.२८४ //
पूर्ववत्प्रविशन्त्यन्याः प्रयोगः स्यात्स एव हि /
एवं पदे पदे कार्यो विधिरासारितस्य तु // ना. शा_४.२८५ //
भाण्डवाद्यकृते चैव तथा गानकृते ऽपि च /
एका तु प्रथमं योज्या द्वे द्वितीयं तथैव च // ना. शा_४.२८६ //
तिस्रो वस्तु तृतीयं तु चतस्रस्तु चतुर्थकम् /
पिण्डीनां विधयश्चैव चत्वारः सम्प्रकीर्तिताः // ना. शा_४.२८७ //
पिण्डी शृङ्खलिका चैव लताबन्धो ऽथ भेद्यकः /
पिण्डीबन्धस्तु पिण्डत्वाद्गुल्मः शृङ्खलिका भवेत् // ना. शा_४.२८८ //
जालोपनद्धा च लता सनृत्तो भेद्यकः स्मृतः /
पिण्डीबन्धः कनिष्ठे तु शृङ्खला तु लयान्तरे // ना. शा_४.२८९ //
मध्यमे च लताबन्धो ज्येष्ठे चैवाथ भेद्यकः /
पिण्डीनां विविधा योनिर्यन्त्रं भद्रासनं तथा // ना. शा_४.२९० //
शिक्षायोगस्तथा चैव प्रयोक्तव्यः प्रयोक्तृभिः /
एवं प्रयोगः कर्तव्यो वर्धमाने तपोधनाः // ना. शा_४.२९१ //
गीतानां चन्दकानां च भूयो वक्ष्याम्यहं विधिम् /
यानि वस्तुनिबद्धानि यानि चाङ्गिकृतानि तु // ना. शा_४.२९२ //
गीतानि तेषां वक्ष्यामि प्रयोगं नृत्तवाद्ययोः /
तत्रावतरणं कार्यं नर्तक्याः सार्वभाण्डिकम् // ना. शा_४.२९३ //
क्षेपप्रतिक्षेपकृतं भाण्डोपोहनसंस्कृतम् /
प्रथमं त्वभिनेयं स्यद्गीतके सर्ववस्तुकम् // ना. शा_४.२९४ //
तदेव च पुनर्वस्तु नृत्तीनापि प्रदर्शयत् /
यो विधिः पूर्वमुक्तस्तु नृत्ताभिनयवादिते // ना. शा_४.२९५ //
आसारितविधौ स स्याद्गीतानां वस्तुकेष्वपि /

एवं वस्तुनिबन्धानां गीतकानां विधिः स्मृतः // ना. शा_४.२९६ //
शृणुताङ्गनिबद्धानां गीतानामपि लक्षणम् /
य एव वस्तुकविधिर्नृत्ताभिनयवादिते // ना. शा_४.२९७ //
तमेवाङ्गनिबद्धेषु च्चन्दकेष्वपि योजयेत् /
वाद्यं गुर्वक्षरकृतं तथाल्पाक्षरमेव च // ना. शा_४.२९८ //
मुखे सोपोहने कुर्याद्वर्णानां विप्रकर्षतः /
यदा गीतिवशादङ्गं भूयो भूयो निवर्तते // ना. शा_४.२९९ //
तत्राद्यमभिनेयं स्याच्चेषं नृत्तेन योजयेत् /
यदा गीतिवशादङ्गं भूयो भूयो निवर्तते // ना. शा_४.३०० //
त्रिपाणिलयसंयुक्तं तत्र वाद्यं प्रयोजयेत् /
यथा लयस्तथा वाद्यं कर्तव्यमिह वादकैः // ना. शा_४.३०१ //
[ततं चानुगतं चापि ओघं च करणान्वितम् /
स्थिरे तत्त्वं प्रयोक्तव्यं मध्ये चानुगतं भवेत् // ना. शा_४.३०१*१ //
भूयश्चौघः प्रयोक्तव्यस्त्वेष वाद्यगतो विधिः /
चन्दोगीतकमासाद्य त्वङ्गानि परिवर्तयेत् // ना. शा_४.३०१*२ //
एष कार्यो विधिर्नित्यं नृत्ताभिनयवादिते /
यानि वस्तुनिबद्धानि तेषामन्ते ग्रहो भवेत् /
अङ्गानां तु परावृत्तावादावेव ग्रहो मतः] // ना. शा_४.३०१*३ //
एवमेष विधिः कार्यो गीतेष्वासारितेष्वपि /
देवस्तुत्याश्रयं ह्येतत्सुकुमारं निबोधत // ना. शा_४.३०२ //
स्त्रीपुंसयोस्तु संलापो यस्तु कामसमुद्भवः /
तज्ज्ञेयं सुकुमारं हि शृङ्गाररससम्भवम् // ना. शा_४.३०३ //
यस्यां यस्यामवस्थायां नृत्तं योज्यं प्रयोक्तृभिः /
तत्सर्वं संप्रवक्ष्यामि तच्च मे शृणुत द्विजाः // ना. शा_४.३०४ //
अङ्गवस्तुनिवृत्तौ तु तथा वर्णनिवृत्तिषु /
तथा चाभ्युदयस्थाने नृत्तं तज्ज्ञः प्रयोजयेत् // ना. शा_४.३०५ //
यत्तु संदृश्यते किञ्चिद्दम्पत्योर्मदनाश्रयम् /
नृत्तं तत्र प्रयोक्तव्यं प्रहर्षार्थगुणोद्भवम् // ना. शा_४.३०६ //
यत्र सन्निहिते कान्ते ऋतुकालादिदर्शनम् /
गीतकार्थाभिसंबद्धं नृत्तं तत्रापि चेष्यते // ना. शा_४.३०७ //
खण्डिअता विप्रलब्धा वा कलहान्तरितापि वा /
यस्मिन्नङ्गे तु युवतिर्न नृत्तं तत्र न योजयेत् // ना. शा_४.३०८ //
सखीप्रवृत्ते संलापे तथाऽसन्निहिते प्रिये /
न हि नृत्तं प्रयोक्तव्यं यस्या न प्रोषितः प्रियः // ना. शा_४.३०९ //
[दूत्याश्रयं यदा तु स्यादृतुकालादि दर्शनम् /
औत्सुक्यचिन्तासंबद्धं न नृत्तं तत्र योजयेत्] // ना. शा_४.३०९* //
यस्मिन्नङ्गे प्रसादं तु गृह्णीयान्नायिका क्रमात् /
ततःप्रभृति नृत्तं तु शेषेष्वङ्गेषु योजयेत् // ना. शा_४.३१० //
देवस्तुत्याश्रयकृतं यदङ्गं तु भवेदथ /

माहेश्वरैरङ्गहारैरुद्धतैस्तत्प्रयोजयेत् // ना. शा_४.३११ //
यत्तु शृङ्गारसंबद्धं गानं स्त्रीपुरुषाश्रयम् /
देवीकृतैरङ्गहारैर्ललितैस्तत्प्रयोजयेत् // ना. शा_४.३१२ //
चतुष्पदा नर्कुटके खञ्जके परिगीतके /
विधानं सम्प्रवक्ष्यामि भाण्डवाद्यविधिं प्रति // ना. शा_४.३१३ //
खञ्जनर्कुटसंयुक्ता भस्वेद्या तु चतुष्पदा /
पादान्ते सन्निपाते तु तस्या भाण्डग्रहो भवेत् // ना. शा_४.३१४ //
या ध्रुवा चन्दसा यक्ता समपादा समाक्षरा /
तस्याः पादावसाने तु प्रदेशिन्या ग्रहो भवेत् // ना. शा_४.३१५ //
कृत्वैकं परिवर्तं तु गानस्याभिनयस्य च /
पुनः पादनिवृत्तिं तु भाण्डवाद्येन योजयेत् // ना. शा_४.३१६ //
अ~ घ्गवस्तुनिवृतौ तु वर्णान्तरनिवृत्तिषु /
तथोपस्थापने चैव भाण्डवाद्यं प्रयोजयेत् // ना. शा_४.३१७ //
ये ऽपि चान्तरमार्गास्स्युः तन्त्रिवाक्करणैः कृताः /
तेषु सूची प्रयोक्तव्या भाण्डेन सह ताण्डवे // ना. शा_४.३१८ //
महेश्वरस्य चरितं य इदं सम्प्रयोजयेत्
सर्वपापविशुद्धात्मा शिवलोकं स गच्चति // ना. शा_४.३१९ //
एवमेष विधिः सृ(र्दृ)ष्टस्ताण्डवस्य प्रयोगतः /
भूयः किं कथ्यतामन्यन्नाट्यवेदविधिं प्रति // ना. शा_४.३२० //

इति भारतीये नाट्यशास्त्रे ताण्डवलक्षणं नाम चतुर्थो ऽध्यायः

---

अथ पूर्वरङ्गविधानो नाम पञ्चमो ऽध्यायः

भरतस्य वचः श्रुत्वा नाट्यसन्तानकारणम् /
पुनरेवाब्रुवन्वाक्यमृषयो हृष्टमानसाः // ना. शा_५.१ //
यथा नाट्यस्य जन्मेदं जर्जरस्य च सम्भवः /
विघ्नानां शमनं चैव दैवतानां च पूजनम् // ना. शा_५.२ //
तदस्माभिः श्रुतं सर्वं गृहीत्वा चावधारितम् /
निखिलेन यथातत्त्वमिच्चामो वेदितुं पुनः // ना. शा_५.३ //
पूर्वरङ्गं महातेजः सर्वलक्षणसंयुतम् /
यथा बुद्ध्यामहे ब्रह्मंस्तथा व्याख्यातुमर्हसि // ना. शा_५.४ //
तेषां तु वचनं श्रुत्वा मुनीनां भरतो मुनिः /
प्रत्युवाच पुनर्वाक्यं पूर्वरङ्गविधिं प्रति // ना. शा_५.५ //
पूर्वरङ्गं महाभागा गदतो मे निबोधत /
पादभागाः कलाश्चैव परिवर्तास्तथैव च // ना. शा_५.६ //
यस्माद्रङ्गे प्रयोगो ऽयं पूर्वमेव प्रयुज्यते /
तस्मादयं पूर्वरङ्गो विज्ञेयो द्विजसत्तमाः // ना. शा_५.७ //

अस्याङ्गानि तु कार्याणि यथावदनुपूर्वशः /
तन्त्रीभाण्डसमायोअगैः पाठ्ययोगकृतैस्तथा // ना. शा_५.८ //
प्रत्याहारो ऽवतरणं तथा ह्यारम्भ एव च /
आश्रावणा वक्त्रपाणिस्तथा च परिघट्टना // ना. शा_५.९ //
सङ्घोटना ततः कार्या मार्गासारितमेव च /
ज्येष्ठमध्यकनिष्ठानि तथैवासारतानि च // ना. शा_५.१० //
एतानि तु बहिर्गीतान्यन्तर्यवनिकागतैः /
प्रयोक्तृभिः प्रयोज्यानि तन्त्रीभाण्डकृतानि च // ना. शा_५.११ //
ततः सर्वैस्तु कुतपैः संयुक्तानीह कारयेत् /
विघट्य वै यवनिकां नृत्तपाठ्यकृतानि तु // ना. शा_५.१२ //
गीतानां मद्रकादीनां योज्यमेकं तु गीतकम् /
वर्धमानमथापीह ताण्डवं यत्र युज्यते // ना. शा_५.१३ //
ततश्चोत्थापनं कार्यं परिवर्तनमेव च /
नान्दी शुष्कावकृष्टा च रङ्गद्वारं तथैव च // ना. शा_५.१४ //
चारि चैव ततः कार्या महाचारी तथैव च /
त्रिकं प्ररोचनां चापि पूर्वरङ्गे भवन्ति हि // ना. शा_५.१५ //
एतान्यङ्गानि कार्याणि पूर्वरङ्गविधौ द्विजाः /
एतेषां लक्षणमहं व्याख्यास्याम्यनुपूर्वशः // ना. शा_५.१६ //
कुतपस्य तु विन्यासः प्रत्याहार इति स्मृतः /
तथावतरणं प्रोक्तं गायिकानां निवेशनम् // ना. शा_५.१७ //
परिगीतक्रियारम्भ आरम्भ इति कीर्तितः /
आतोद्यरञ्जनार्थं तु भवेदाश्रावणाविधिः // ना. शा_५.१८ //
वाद्यवृत्तिविभागार्थं वक्त्रपाणिर्विधीयते /
तन्त्र्योजःकरणार्थं तु भवेच्च परिघट्टना // ना. शा_५.१९ //
तथा पाणिविभागार्थं भवेत्संघोटनाविधिः /
तन्त्रीभाण्डसमायोगान्मार्गासारितमिष्यते // ना. शा_५.२० //
कलापातविभागार्थं भवेदासारितक्रिया /
कीर्तनाद्देवतानां च ज्ञेयो गीतविधिस्तथा // ना. शा_५.२१ //
[अतः परं प्रवक्ष्यमि ह्युत्थापनविधिक्रियाम्] // ना. शा_५.२१* //
यस्मादुत्थापयन्त्यत्र प्रयोगं नान्दिपाठकाः /
पूर्वमेव तु रङ्गे ऽस्मिंस्तस्मादुत्थापनं स्मृतम् // ना. शा_५.२२ //
यस्माच्च लोकपालानां परिवृत्य चतुर्दिशम् /
वन्दनानि प्रकुर्वन्ति तस्माच्च परिवर्तनम् // ना. शा_५.२३ //
आशीर्वचनसंयुक्ता नित्यं यस्मात्प्रयुज्यते /
देवद्विजनृपादीनां तस्मान्नान्दीति संज्ञिता // ना. शा_५.२४ //
अत्र शुष्काक्षरैरेव ह्यवकृष्टा ध्रुवा यतः /
तस्माच्चुष्कावकृष्टेयं जर्जरश्लोकदर्शिता // ना. शा_५.२५ //
यस्मादभिनयस्त्वत्र प्रथमं ह्यवतार्यते /
रङ्गद्वारमतो ज्ञेयं वागङ्गाभिनयात्मकम् // ना. शा_५.२६ //

शृङ्गारस्य प्रचरणाच्चारी सम्परिकीर्तिता /
रौद्रप्रचरणाच्चापि महाचारीति कीर्तिता // ना. शा_५.२७ //
विदूषकः सूत्रधारस्तथा वै पारिपार्श्वकः /
यत्र कुर्वन्ति सञ्जल्पं तच्चापि त्रिगतं मतम् // ना. शा_५.२८ //
उपक्षेपेण काव्यस्य हेतुयुक्तिसमाश्रया /
सिद्धेनामन्त्रणा या तु विज्ञेया स प्ररोचना // ना. शा_५.२९ //
अतः परं प्रवक्ष्यामि ह्याश्रावणविधिक्रियाम् /
बहिर्गीतविधौ सम्यगुत्पत्तिं कारणं तथा // ना. शा_५.३० //
चित्रदक्षिणवृतौ तु सप्तरूपे प्रवर्तिते /
सोपोहने सनिर्गीते देवस्तुत्यभिनन्दिते // ना. शा_५.३१ //
नारदाद्यैस्तु गन्धर्वैः सभायां देवदानवाः /
निर्गीतं श्राविताः सम्यग्लयतालसमन्वितम् // ना. शा_५.३२ //
तच्छ्रुत्वा तु सुखं गानं देवस्तुत्यभिनन्दितम्
अभवन्क्षुभिताः सर्वे मात्सर्याद्दैत्यराक्षसाः // ना. शा_५.३३ //
सम्प्रधार्य च ते ऽन्योन्यमित्यवोचन्नवस्थिताः /
निर्गीतं तु सवादित्रमिदं गृह्णीमहे वयम् // ना. शा_५.३४ //
सप्तरूपेण सन्तुष्टा देवाः कर्मानुकीर्तनात् /
वयं गृह्णीम निर्गीतं तुष्यामो ऽत्रैव सर्वदा // ना. शा_५.३५ //
ते तत्र तुष्टा दैत्यास्तु साधयन्ति पुनः पुनः /
रुष्टाश्चापि ततो देवाः प्रत्यभाषन्त नारदम् // ना. शा_५.३६ //
एते तुष्यन्ति निर्गीते दानवा सह राक्षसैः /
प्रणश्यतु प्रयोगो ऽयं कथं वा मन्यते भवान् // ना. शा_५.३७ //
देवानां वचनं श्रुत्वा नारदो वाक्यमब्रवीत् /
धातुवाद्याश्रयकृतं निर्गीतं मा प्रणश्यतु // ना. शा_५.३८ //
किन्तूपोहनसंयुक्तं धातुवाद्यविभूषितम् /
भविष्यतीदं निर्गीतं सप्तरूपविधानतः // ना. शा_५.३९ //
निर्गीतेनावबद्धाश्च दैत्यदानवराक्षसाः /
न क्षोभं न विघातं च करिष्यन्तीह तोषिताः // ना. शा_५.४० //
एवं निर्गीतमेतत्तु दैत्यानां स्पर्धया द्विजाः /
देवानां बहुमानेन बहिर्गीतमिति स्मृतम् // ना. शा_५.४१ //
धातुभिश्चित्रवीणायां गुरुलघ्वक्षरान्वितम् /
वर्णालङ्कारसंयुक्तं प्रयोक्तव्यं बुधैरथ // ना. शा_५.४२ //
निर्गीतं गेयते यस्मादपदं वर्णयोजनात् /
असूयया च देवानां बहिर्गीतमिदं स्मृतम् // ना. शा_५.४३ //
निर्गीतं यन्मया प्रोक्तं सप्तरूपसमन्वितम् /
उत्थापनादिकं यच्च तस्य कारणमुच्यते // ना. शा_५.४४ //
आश्रावणायां युक्तायां दैत्यास्तुष्यन्ति नित्यशः /
वक्त्रपाणौ कृते चैव नित्यं तुष्यन्ति दानवाः // ना. शा_५.४५ //
परिघट्टनया तुष्टा युक्तायां राक्षसां गणाः /

सङ्घोटनक्रियायां च तुष्यन्त्यपि च गुह्यकाः // ना. शा_५.४६ //
मार्गासारितमासाद्य तुष्टा यक्षा भवन्ति हि /
गीतकेषु प्रयुक्तेषु देवास्तुष्यन्ति नित्यशः // ना. शा_५.४७ //
वर्धमाने प्रयुक्ते तु रुद्रस्तुष्यति सानुगः /
तथा चोत्थापने युक्ते ब्रह्मा तुष्टो भवेदिह // ना. शा_५.४८ //
तुष्यन्ति लोकपालाश्च प्रयुक्ते परिवर्तने /
नान्दीप्रयोगे ऽथ कृते प्रीतो भवति चन्द्रमाः // ना. शा_५.४९ //
युक्तायामवकृष्टायां प्रीता नागा भवन्ति हि /
तथा शुष्कावकृष्टायां प्रीतः पितृगणो भवेत् // ना. शा_५.५० //
रङ्गद्वारे प्रयुक्ते तु विष्णुः प्रीतो भवेदिह /
जर्जरस्य प्रयोगे तु तुष्टा विघ्नविनायकाः // ना. शा_५.५१ //
तथा चार्या प्रयुक्तायामुमा तुष्टा भवेदिह /
महाचार्या प्रयुक्तायां तुष्टो भूतगणो भवेत् // ना. शा_५.५२ //
आश्रावणादिचार्यन्तमेतद्दैवतपूजनम् /
पूर्वरङ्गे मया ख्यातं तथा चाङ्गविकल्पनम् // ना. शा_५.५३ //
देवस्तुष्यन्ति यो येन यस्य यन्मनसः प्रियम् /
तत्तथा पूर्वरङ्गे तु मया प्रोक्तं द्विजोत्तमाः // ना. शा_५.५४ //
सर्वदैवतपूजार्हं सर्वदैवतपूजनम् /
धन्यं यशस्यमायुष्यं पूर्वरङ्गप्रवर्तनम् // ना. शा_५.५५ //
दैत्यदानवतुष्ट्यर्थं सर्वेषां च दिवौकसाम् /
निर्गीतानि सगीतानि पूर्वरङ्गकृतानि तु // ना. शा_५.५६ //
[या विद्या यानि शिल्पानि या गतिर्यश्च चेष्टितम् /
लोकालोकस्य जगतस्तदस्मिन्नाटकाश्रये] // ना. शा_५.५६* //
निर्गीतानां सगीतानां वर्धमानस्य चैव हि /
ध्रुवाविधाने वक्ष्यामि लक्षणं कर्म चैव हि // ना. शा_५.५७ //
प्रयुज्य गीतकविधिं वर्धमानमथापि च /
गीतकान्ते ततश्चापि कार्या ह्युत्थापनी ध्रुवा // ना. शा_५.५८ //
अदौ द्वे च चतुर्थं चाप्यष्टमैकादशे तथा /
गुर्वक्षराणि जानीयत्पादे ह्येकादशे तथा // ना. शा_५.५९ //
चतुष्पदा भवेत्सा तु चतुरश्रा तथैव च /
चतुर्भिस्सन्निपातैश्च त्रिलया त्रियतिस्तथा // ना. शा_५.६० //
परिवर्ताश्च चत्वारः पाणयस्त्रय एव च /
जात्या चैव हि विश्लोका तां च तालेन योजयेत् // ना. शा_५.६१ //
शम्या तु द्विकला कार्या तलो द्विकल एव च /
पुनश्चैककला शम्या सन्निपातः कलात्रयम् // ना. शा_५.६२ //
एवमष्टकलः कार्यः सन्निपातो विअचक्षणैः /
चत्वारः सन्निपाताश्च परिवर्तः स उच्यते // ना. शा_५.६३ //
पूर्वं स्थितलयः कार्यः परिवर्तो विचक्षणैः /
तृतीये सन्निपाते तु तस्या भाण्डग्रहो भवेत् // ना. शा_५.६४ //

एकस्मिन्परिवर्ते तु गते प्राप्ते द्वितीयके /
कार्यं मध्यलये तज्ज्ञैः सूत्रधारप्रवेशनम् // ना. शा_५.६५ //
पुष्पाञ्जलिं समादाय रक्षामङ्गलसंस्कृताः /
शुद्धवस्त्राः सुमनसस्तथा चाद्भुतदृष्टयः // ना. शा_५.६६ //
स्थानन्तु वैष्णवं कृत्वा सौष्ठवाङ्गपुरस्कृतम् /
दीक्षिताः शुचयश्चैव प्रविशेयुः समं त्रयः // ना. शा_५.६७ //
भृङ्गारजर्जरधरौ भवेतां पारिपार्श्विकौ /
मध्ये तु सूत्रभृत्ताभ्यां वृत्तः पञ्चपदीं व्रजेत् // ना. शा_५.६८ //
पदानि पञ्च गच्चेयुर्ब्रह्मणो यजनेच्चया /
पदानाञ्चापि विक्षेपं व्याख्यास्याम्यनुपूर्वशः // ना. शा_५.६९ //
त्रितालान्तरविष्कम्भमुत्क्षिपेच्चरणं शनैः
पार्श्वोत्थानोत्थितं चैव तन्मध्ये पातयेत्पुनः // ना. शा_५.७० //
एवं पञ्चपदीं गत्वा सूत्रधारः सहेतरः /
सूचीं वामपदे दद्याद्विक्षेपं दक्षिणेन च // ना. शा_५.७१ //
पुष्पाञ्जल्यपवर्गश्च कार्यो ब्राह्मे ऽथ मण्डले /
रङ्गपीठस्य मध्ये तु स्वयं ब्रह्मा प्रतिष्ठितः // ना. शा_५.७२ //
ततः सललितैर्हस्तैरभिवन्द्य पितामहम् /
अभिवादानि कार्याणि त्रीणि हस्तेन भूतले // ना. शा_५.७३ //
कालप्रकर्षहेतोश्च पादानां प्रविभागतः /
सूत्रधारप्रवेशाद्यो वन्दनाभिनयान्तकः // ना. शा_५.७४ //
द्वितीयः परिवर्तस्तु कार्यो मध्यलयाश्रितः /
ततः परं तृतीये तु मण्डलस्य प्रदक्षिणम् // ना. शा_५.७५ //
भवेदाचमनं चैव जर्जरग्रहणं तथा /
उत्थाय मण्डलात्तूर्णं दक्षिणं पादमुद्धरेत् // ना. शा_५.७६ //
वेधं तेनैव कुर्वीत विक्षेपं वामकेन च /
पुनश्च दक्षिणं पादं पार्श्वसंस्थं समुद्धरेत् // ना. शा_५.७७ //
ततश्च वामवेधस्तु विक्षेपो दक्षिणस्य च /
इत्यनेन विधानेन सम्यक्कृत्वा प्रदिक्षणम् // ना. शा_५.७८ //
भृङ्गारभृतमाहूय शौचं चापि समाचरेत् /
यथान्यायं तु कर्तव्या तेन ह्याचमनक्रिया // ना. शा_५.७९ //
आत्मप्रोक्षणमेवाद्भिः कर्तव्यं तु यथाक्रमम् /
प्रयत्नकृतशौचेन सूत्रधारेण यत्नतः // ना. शा_५.८० //
सन्निपातसमं ग्राह्यो जर्जरो विघ्नजर्जरः /
प्रदक्षिणाद्यो विज्ञेयो जर्जरग्रहणान्तकः // ना. शा_५.८१ //
तृतीयः परिवर्तस्तु विज्ञेयो वै द्रुते लये /
गृहीत्वा जर्जरं त्वष्टौ कला जप्यं प्रयोजयेत् // ना. शा_५.८२ //
वामवेधं ततः कुर्याद्विक्षेपं दक्षिणस्य च /
ततः पञ्चपदीं चैव गच्चेतु कुतपोन्मुखः // ना. शा_५.८३ //
वामवेधस्तु तत्रापि विक्षेपो दक्षिणस्य तु /

जर्जरग्रहणाद्यो ऽयं कुतपाभिमुखान्तकः // ना. शा_५.८४ //
चतुर्थः परिवर्तस्तु कार्यो द्रुतलये पुनः /
करपादनिपातास्तु भव्न्त्यत्र तु षोडश // ना. शा_५.८५ //
त्र्यश्रे द्वादश पातास्तु भवन्ति करपादयोः /
वन्दनान्यथ कार्याणि त्रीणि हस्तेन भूतले // ना. शा_५.८६ //
आत्मप्रोक्षणमद्भिश्च त्र्यश्रे नैव विधीयते /
एवमुत्थापनं कार्यं ततस्तु परिवर्तनम् // ना. शा_५.८७ //
चतुरश्रं लये मध्ये सन्निपातैरथाष्टभिः /
यस्या लघूनि सर्वाणि केवलं नैधनं गुरु // ना. शा_५.८८ //
भवेदतिजगत्यान्तु सा ध्रुवा परिवर्तनी /
वार्तिकेन तु मार्गेण वाद्येनानुगतेन च // ना. शा_५.८९ //
ललितैः पादविन्यासैर्वन्द्या देवा यथादिशम् /
द्विकलं पादपतनं पादचार्या गतं भवेत् // ना. शा_५.९० //
वामपादेन वेधस्तु कर्तव्यो नृत्तयोक्तृभिः /
द्वितालान्तरविष्कम्भो विक्षेपो दक्षिणस्य च // ना. शा_५.९१ //
ततः पञ्चपदीं गच्चेदतिक्रान्तैः पदरथ /
ततो ऽभिवादनं कुर्याद्देवतानां यथादिशम् // ना. शा_५.९२ //
वन्देत प्रथमं पूर्वां दिशं शक्राधिदैवताम् /
द्वितीयां दक्षिणामाशां वन्देत यमदेवताम् // ना. शा_५.९३ //
वन्देत पश्चिमामाशां ततो वरुणदैवताम् /
चतुर्थीमुत्तरामाशां वन्देत धनदाश्रयाम् // ना. शा_५.९४ //
दिशां तु वन्दनं कृत्वा वामवेधं प्रयोजयेत् /
दक्षिणेन च कर्तव्यं विक्षेपपरिवर्तनम् // ना. शा_५.९५ //
प्राङ्ग्मुखस्तु ततः कुर्यात्पुरुषस्त्रीनपुंसकैः /
त्रिपद्या सूत्रभृद्रुद्रब्रह्मोपेन्द्राभिवादनम् // ना. शा_५.९६ //
दक्षिणं तु पदं पुंसो वामं स्त्रीणां प्रकीर्तितम् /
पुनर्दक्षिणमेव स्यान्नात्युत्क्षिप्तं नपुंसकम् // ना. शा_५.९७ //
वन्देत पौरुषेणेशं स्त्रीपदेन जनार्दनम् /
नपुंसक्पदेनापि तथैवाम्बुजसम्भवम् // ना. शा_५.९८ //
परिवर्तनमेवं स्यात्तस्यान्ते प्रविशेत्ततः /
चतुर्थकारः पुष्पाणि प्रगृह्य विधिपूर्वकम् // ना. शा_५.९९ //
यथावत्तेन कर्तव्यं पूजनं जर्जरस्य तु /
कुतपस्य च सर्वस्य सूत्रधारस्य चैव हि // ना. शा_५.१०० //
तस्य भाण्डसमः कार्यस्तज्ज्ञैर्गतिपरिक्रमः /
न तत्र गानं कर्तव्यं तत्र स्तोभक्रिया भवेत् // ना. शा_५.१०१ //
चतुर्थकारः पूजां तु स कृत्वान्तर्हितो भवेत् /
ततो गेयावकृष्टा तु चतुरश्रा स्थिता ध्रुवा // ना. शा_५.१०२ //
गुरुप्राया तु सा कार्या तथा चैवावपाणिका /
स्थायिवर्णाश्रयोपेता कलाष्टकविनिर्मिता // ना. शा_५.१०३ //

[चतुर्थं पञ्चमं चैव सप्तमं चाष्टमं तथा /
लघूनि पादे पङ्क्त्यान्तु सावकृष्टा ध्रुवा स्मृता] // ना. शा_५.१०३* //
सूत्रधारः पठेत्तत्र मध्यमं स्वरमाश्रितः /
नान्दीं पदैर्द्वादशभिरष्टभिर्वाऽप्यलङ्कृताम् // ना. शा_५.१०४ //
नमो ऽस्तु सर्वदेवेभ्यो द्विजातिभ्यः शुभं तथा /
जितं सोमेन वै राज्ञा शिवं गोब्राह्मणाय च // ना. शा_५.१०५ //
ब्रह्मोत्तरं तथैवास्तु हता ब्रह्मद्विषस्तथा /
प्रशास्त्विमां महाराजः पृथिवीं च ससागराम् // ना. शा_५.१०६ //
राष्ट्रं प्रवर्धतां चैव रङ्गस्याशा समृद्ध्यतु /
प्रेक्षाकर्तुर्महान्धर्मो भवतु ब्रह्मभाषितः // ना. शा_५.१०७ //
काव्यकर्तुर्यशश्चास्तु धर्मश्चापि प्रवर्धताम् /
इज्यया चानया नित्यं प्रीयन्तां देवता इति // ना. शा_५.१०८ //
नान्दीपदान्तरेष्वेषु ह्येवमार्येति नित्यशः /
वदेतां सम्यगुक्ताभिर्वाग्भिस्तौ पारिपार्श्विकौ // ना. शा_५.१०९ //
एवं नान्दी विधातव्या यथावल्लक्षणान्विता /
ततश्शुष्कावकृष्टा स्याज्जर्जरश्लोकदर्शिका // ना. शा_५.११० //
नवं गुर्वाक्षराण्यादौ षड्लघूनि गुरुत्रयम् /
शुष्कावकृष्टा तु भवेत्कला ह्यष्टौ प्रमाणतः // ना. शा_५.१११ //
यथाः
दिग्ले दिग्ले दिग्ले दिग्ले जम्बुकपलितकते तेचाम् /
कृत्वा शुष्कावकृष्टां तु यथावद्द्विजसत्तमाः // ना. शा_५.११२ //
ततः श्लोकं पठेदेकं गम्भीरस्वरसंयुतम् /
देवस्तोत्रं पुरस्कृत्य यस्य पूजा प्रवर्तते // ना. शा_५.११३ //
राज्ञो वा यत्र भक्तिः स्यादथ वा ब्रह्मणस्स्तवम् /
गदित्वा जर्जरश्लोकं रङ्गद्वारे च यत्स्मृतम् // ना. शा_५.११४ //
पठेदन्यं पुनः श्लोकं जर्जरस्य विनाशनम् /
जर्जरं नमयित्वा तु ततश्चारीं प्रयोजयेत् // ना. शा_५.११५ //
पारिपार्श्विकयोश्च स्यात्पश्चिमेनापसर्पणम् /
अङ्किता चात्र कर्तव्या ध्रुवा मध्यलयान्विता // ना. शा_५.११६ //
चतुर्भिः सन्निपातैश्च चतुरश्रा प्रमाणतः /
आद्यमन्त्यं चतुर्थं च पञ्चमं च तथा गुरु // ना. शा_५.११७ //
यस्यां ह्रस्वानि शेषाणि सा ज्ञेया त्वङ्किता बुधैः /
अस्याः प्रयोगं वक्ष्यामि यथा पूर्वं महेश्वरः // ना. शा_५.११८ //
सहोमया क्रीडितवान्नानाभावविचेष्टतैः /
कृत्वाऽवहित्थं स्थानं तु वामं चाधोमुखं भुजम् // ना. शा_५.११९ //
चतुरश्रमुरः कार्यमञ्चितश्चापि मस्तकः /
नाभिप्रदेशे विन्यस्य जर्जरं च तुलाधृतम् // ना. शा_५.१२० //
वामपल्लवहस्तेन पादैस्तालान्तरोत्थितैः /
गच्चेत्पञ्चपदीं चैव सविलासाङ्गचेष्टितैः // ना. शा_५.१२१ //

वामवेधस्तु कर्तव्यो विक्षेपो दक्षिणस्य च /
शृङ्गाररससंयुक्तां पठेदार्यां विचक्षणः // ना. शा_५.१२२ //
चारीश्लोकं गदित्वा तु कृत्वा च परिवर्तनम् /
तैरेव च पदः कार्यं पश्चिमेनापसर्पणम् // ना. शा_५.१२३ //
पारिपार्श्विकहस्ते तु न्यस्य जर्जरमुत्तमम् /
महाचारीं ततश्चैव प्रयुञ्जीत यथाविधि // ना. शा_५.१२४ //
चतुरश्रा ध्रुवा तत्र तथा द्रुतलयान्विता /
चतुर्भिस्सन्निपातैश्च कला ह्यष्टौ प्रमाणतः // ना. शा_५.१२५ //
आद्यं चतुर्थमन्त्यं च सप्तमं दशमं गुरु /
लघु शेषं ध्रुवापादे चतुर्विंशतिके भवेत् // ना. शा_५.१२६ //
(यथा-)
पादतलाहतिपातितशैलं क्षोभितभूतसमग्रसमुद्रम् /
ताण्डवनृत्यमिदं प्रलयान्ते पातु जगत्सुखदायि हरस्य // ना. शा_५.१२७ //
भाण्डोन्मुखेन कर्तव्यं पादविक्षेपणं ततः /
सूचीं कृत्वा पुनः कुर्याद्विक्षेपपरिवर्तनम् // ना. शा_५.१२८ //
अतिक्रान्तैः सललितैः पादैर्द्रुतलयान्वितैः /
त्रितालान्तरमुत्क्षेपैर्गच्चेत्पञ्चपदीं ततः // ना. शा_५.१२९ //
तत्रापि वामवेधस्तु विक्षेपो दक्षिणस्य च /
तैरेव च पदैः कार्यं प्राङ्मुखेनापसर्पणम् // ना. शा_५.१३० //
पुनः पदानि त्रीण्येव गच्चेत्प्राङ्मुख एव तु /
ततश्च वामवेधः स्याद्विक्षेपो दक्षिणस्य च // ना. शा_५.१३१ //
ततो रौद्ररसं श्लोकं पादसंहरणं पठेत् /
तस्यान्ते तु त्रिपद्याथ व्याहरेत्पारिपार्श्विकौ // ना. शा_५.१३२ //
तयोरागमने कार्यं गानं नर्कुटकं बुधैः /
तथा च भारतीभेदे त्रिगतं सम्प्रयोजयेत् // ना. शा_५.१३३ //
विदूषकस्त्वेकपदां सुत्रधारस्मितावहाम् /
असम्बद्धकथाप्रायां कुर्यात्कथनिका ततः // ना. शा_५.१३४ //
(वितण्डां गण्डसंयुक्तां तालिकाञ्च प्रयोजयेत् /
कस्तिष्ठति जितं केनेत्यादिकाव्यप्ररूपिणीम् // ना. शा_५.१३४*१ //
पारिपार्श्वकसञ्जल्पो विदूषकविरूपितः /
स्थापितः सूत्रधारेण त्रिगतं सम्प्रयुज्यते) // ना. शा_५.१३४*२ //
प्ररोचना च कर्तव्या सिद्धेनोपनिमत्रणम् /
रङ्गसिद्धौ पुनः कार्यं काव्यवस्तुनिरूपणम् // ना. शा_५.१३५ //
सर्वमेव विधिं कृत्वा सूचीवेधकृतैरथ /
पादैरनाविद्धगतैर्निष्क्रामेयुः समं त्रयः // ना. शा_५.१३६ //
एवमेष प्रयोक्तव्यः पूर्वरङ्गो यथाविधि /
चतुरश्रो द्विजश्रेष्ठास्त्र्यश्रं चापि निबोधत // ना. शा_५.१३७ //
अयमेव प्रयोगः स्यादङ्गान्येतानि चैव हि /
तालप्रमाणं संक्षिप्तं केवलं तु विशेषकृत् // ना. शा_५.१३८ //

शम्या तु द्विकला कार्या तालो ह्येककलस्तथा /
पुनश्चैककला शम्या सन्निपातः कलाद्वयम् // ना. शा_५.१३९ //
अनेन हि प्रमाणेन कलातालयान्वितः /
कर्तव्यः पूर्वरङ्गस्तु त्र्यश्रो ऽप्युत्थापनादिकः // ना. शा_५.१४० //
आद्यं चतुर्थं दशममष्टमं नैधनं गुरु /
यस्यास्तु जागते पादे सा त्र्यश्रोत्थापिनी ध्रुवा // ना. शा_५.१४१ //
वाद्यं गतिप्रचारश्च ध्रुवा तालस्तथैव च /
संक्षिप्तान्येव कार्याणि त्र्यश्रे नृत्तप्रवेदिभिः // ना. शा_५.१४२ //
वाद्यगीतप्रमाणेन कुर्यादङ्गविचेष्टितम् /
विस्तीर्णमथ संक्षिप्तं द्विप्रमाणविनिर्मितम् // ना. शा_५.१४३ //
हस्तपादप्रचारस्तु द्विकलः परिकीर्तितः /
चतुरश्रे परिक्रान्ते पाताः स्युः षोडशैव तु // ना. शा_५.१४४ //
त्र्यश्रे द्वादश पातास्तु भवन्ति करपादयोः /
एतत्प्रमाणं विज्ञेयमुभयोः पूर्वरङ्गयोः // ना. शा_५.१४५ //
केवलं परिवर्ते तु गमने त्रिपदी भवेत् /
दिग्वन्दने पञ्चपदी चतुरश्रे विधीयते // ना. शा_५.१४६ //
आचार्यबुद्ध्या कर्तव्यस्त्र्यश्रस्तालप्रमाणतः /
तस्मान्न लक्षणं प्रोक्तं पुनरुक्तं भवेद्यतः // ना. शा_५.१४७ //
एवमेष प्रयोक्तव्यः पूर्वरङ्गो द्विजोत्तमाः /
त्र्यश्रश्च चतुरश्रश्च शुद्धो भारत्युपाश्रयः // ना. शा_५.१४८ //
एवं तावदयं शुद्धः पूर्वरङ्गो मयोदितः /
चित्रत्वमस्य वक्ष्यामि यथाकार्यं प्रयोक्तृभिः // ना. शा_५.१४९ //
वृत्ते ह्युत्थापने विप्राः कृते च परिवर्तने /
चतुर्थकारदत्ताभिः सुमनोभिरलङ्कृते // ना. शा_५.१५० //
उदात्तैर्गानैर्गन्धर्वैः परिगीते प्रमाणतः /
देवदुन्दुभयश्चैव निनदैयुर्भृशं यतः // ना. शा_५.१५१ //
सिद्धाः कुसुममालाभिर्विकिरेयुः समन्ततः /
अङ्गहारैश्च देव्यस्ता उपनृत्येयुरग्रतः // ना. शा_५.१५२ //
यस्ताण्डवविधिः प्रोक्तो नृत्ते पिण्डीसमन्वितः /
रेचकैरङ्गहारैश्च न्यासोपन्याससंयुतः // ना. शा_५.१५३ //
नान्दीपदानां मध्ये तु एकैकस्मिन्पृथक्पृथक् /
प्रयोक्तव्यो बुधैः सम्यक्चित्रभावमभीप्सुभिः // ना. शा_५.१५४ //
एवं कृत्वा यथान्यायं शुद्धं चित्रं प्रयत्नतः /
ततःपरं प्रयुञ्जीत नाटकं लक्षणान्वितम् // ना. शा_५.१५५ //
ततस्त्वन्तर्हिताः सर्वा भवेयुर्दिव्ययोषितः /
निष्क्रान्तासु च सर्वासु नर्तकीषु ततः परम् // ना. शा_५.१५६ //
पूर्वरङ्गे प्रयोक्तव्यमङ्गजातमतःपरम् /
एवं शुद्धो भवेच्चित्रः पूर्वरङ्गो विधानतः // ना. शा_५.१५७ //
कार्यो नातिप्रसङ्गो ऽत्र नृत्तागीतविधिं प्रति /

गीते वाद्ये च नृत्ते च प्रवृत्ते ऽतिप्रसङ्गतः // ना. शा_५.१५८ //
खेदो भवेत्प्रयोक्त्?णां प्रेक्षकाणां तथैव च /
खिन्नानां रसभावेषु स्पष्टता नोपजायते // ना. शा_५.१५९ //
ततः शेषप्रयोगस्तु न रागजनको भवेत् /
(लक्षनेन विना बाह्यलक्षणाद्विस्तृतं भवेत् /
लोकशास्त्रानुसारेण तस्मान्नाट्यं प्रवर्तते) // ना. शा_५.१६०अब्*१ //
त्र्यश्रं वा चतुरश्रं वा शुद्धं चित्रमथापि वा // ना. शा_५.१६० //
प्रयुज्य रङ्गान्निष्क्रामेत्सूत्रधार्ः सहानुगः /
(देवपार्थिवरङ्गानामाशीर्वचनसंयुताम् // ना. शा_५.१६१*१ //
कवेर्नामगुणोपेतां वस्तूपक्षेपरूपिकाम् /
लघुवर्णपदोपेतां वृत्तैश्चित्रैरलङ्कृताम् // ना. शा_५.१६१*२ //
अन्तर्यवनिकासंस्थः कुर्यादाश्रावणां ततः /
आश्रावनावसाने च नान्दीं कृत्वा स सूत्रधृत् /
पुनः प्रविश्य रङ्गं तु कुर्यात्प्रस्तावनां ततः) // ना. शा_५.१६१*३ //
प्रयुज्य विधिनैवं तु पूर्वरङं प्रयोगतः // ना. शा_५.१६१ //
स्थापकः प्रविशेत्तत्र सूत्रधारगुणाकृतिः /
स्थानं तु वैष्णवं कृत्वा सौष्ठवाञ्गपुरस्कृतम् // ना. शा_५.१६२ //
प्रविश्य रङ्गं तैरेव सूत्रधारपदैर्व्रजेत् /
श्थापक्ष्य प्रवेशे तु कर्तव्यऽर्थानुगा ध्रुवा // ना. शा_५.१६३ //
त्र्यश्रा वा चतुरश्रा वा तज्ज्ञैर्मध्यलयान्विता /
कुर्यादनन्तरं चारीं देवरह्मणशंसिनीम् // ना. शा_५.१६४ //
सुवाक्यमधुरैः श्लोकेर्नानाभसवरसान्वितैः /
प्रसाद्य रङ्गं विधिवत्कवेर्नाम च कीर्तयेत् // ना. शा_५.१६५ //
प्रस्तवा. ततः कुर्यात्काव्यप्रख्यापनाश्रयाम् /
उद्घात्यकादि कर्तव्यं काव्योपक्षेपणाश्र्यम् // ना. शा_५.१६६ //
दिव्ये दिव्याश्रयो भूत्वा मानुषे मानुषाश्रयः /
दिव्यमानुषसंयोगे दिव्यो वा मानुषो ऽपि वा // ना. शा_५.१६७ //
मुखबीजानुसद्?शं नानामार्गसमाश्रयम् /
आआविधैरुपक्षेपैः काव्योपक्षेपणं भवेत् // ना. शा_५.१६८ //
प्रस्ताव्यैवं तु निष्क्रामेत्काव्यप्रस्तावकस्ततः /
एवमेष प्रयोक्तव्यः पूर्वरङ्गो यथाविधि // ना. शा_५.१६९ //
य इमं पूर्वरङ्गं तु विधिनैव प्रयोजयेत् /
नाशुभं प्राप्नुयात्किञ्चित्स्वर्गलोकं च गच्चति // ना. शा_५.१७० //
यश्चापि विधिमुत्सृज्य यथेष्टं सम्प्रयोजयेत् /
प्राप्नोत्यपचयं घोरं तिर्यग्योनिं च गच्चति // ना. शा_५.१७१ //
न तथाऽग्निः प्रदहति प्रभञ्जनसमीरतः /
यथा ह्यप्रयोगस्तु प्रयुक्तो दहति क्षणात् // ना. शा_५.१७२ //
इत्येवावन्तिपाञ्चालदाक्षिणात्यौढ्रमागधैः /
कर्तव्य पूर्वरङ्गस्तु द्विप्रमाणविनिर्मितः // ना. शा_५.१७३ //

एष वः कथितो विप्राः पूर्वरङ्गाश्रितो विधिः /
भूयः किं कथ्यतां सम्यङ्नाट्यवेदविधिं प्रति // ना. शा_५.१७४ //

इति भारतीये नाट्यशास्त्रे पूर्वरङ्गप्रयोगो नाम पञ्चमो ऽध्यायः

---

अथ षष्ठो ऽध्यायः

पूर्वरङ्गविधिं श्रुत्वापुनराहुर्महत्तमाः /
भरतं मुनयः सर्वे प्रश्नान्पञ्चाभिधत्स्व नः // ना. शा_६.१ //
ये रसा इति पठ्यन्ते नाट्ये नाट्यविचक्षणैः /
रसत्वं केन वै तेषामेतदाख्यातुमर्हसि // ना. शा_६.२ //
भावाश्चैव कथं प्रोक्ताः किं वा ते भावयन्त्यपि /
संग्रहं कारिकां चैव निरुक्तं चैव तत्वतः // ना. शा_६.३ //
तेषां तु वचनं श्रुत्वा मुनीनां भरतो मुनिः /
प्रत्युवाच पुनर्वाक्यं रसभावविकल्पनम् // ना. शा_६.४ //
अहं वः कथयिष्यामि निखिलेन तपोधनाः /
संग्रहं कारिकां चैव निरुक्तं च यथाक्रमम् // ना. शा_६.५ //
न शक्यमस्य नाट्यस्य गन्तुमन्तं कथञ्चन /
कस्माद्बहुत्वाज्ज्ञानानां शिल्पानां वाप्यनन्ततः // ना. शा_६.६ //
एकस्यापि न वै शक्यस्त्वन्तो ज्ञानार्णवस्य हि /
गन्तुं किं पुनरन्येषां ज्ञानानामर्थतत्त्वतः // ना. शा_६.७ //
किन्त्वल्पसूत्रग्रन्थार्थमनुमानप्रसाधकम् /
नाट्यस्यास्य प्रवक्ष्यामि रसभावादिसङ्ग्रहम् // ना. शा_६.८ //
विस्तरेणोपदिष्टानामर्थानां सूत्रभाष्ययोः /
निबन्धो यो समासेन सङ्ग्रहं तं विदुर्बुधाः // ना. शा_६.९ //
रसा भावा ह्यभिनयाः धर्मी वृत्तिप्रवृत्तयः /
सिद्धिः स्वरास्तथातोद्यं गानं रङ्गश्च सङ्ग्रहः // ना. शा_६.१० //
अल्पाभिधानेनार्थो यः समासेनोच्यते बुधैः /
सूत्रतः साऽनुमतव्या कारिकार्थप्रदर्शिनी // ना. शा_६.११ //
नानानामाश्रयोत्पन्नं निघण्टुनिगमान्वितम् /
धात्वर्थहेतुसंयुक्तं नानासिद्धान्तसाधितम् // ना. शा_६.१२ //
स्थापितो ऽर्थो भवेद्यत्र समासेनार्थासूचकः /
धात्वर्थवचनेनेह निरुक्तं तत्प्रचक्षते // ना. शा_६.१३ //
सङ्ग्रहो यो मया प्रोक्तः समासेन द्विजोत्तमाः /
विस्तरं तस्य वक्ष्यामि सनिरुक्तं सकारिकम् // ना. शा_६.१४ //
शृङ्गारहास्यकरुणा रौद्रवीरभयानकाः /
बीभत्साद्भुतसंज्ञौ चेत्यष्टौ नाट्ये रसाः स्मृताः // ना. शा_६.१५ //
एते ह्यष्टौ रसाः प्रोक्ता द्रुहिनेन महात्मना /

पुनश्च भावान्वक्ष्यामि स्थायिसञ्चारिसत्त्वजान् // ना. शा_६.१६ //
रतिहासश्च शोकश्च क्रोधोत्साहौ भयं तथा /
जुगुप्सा विस्मयश्चेति स्थायिभावाः प्रकीर्तिताः // ना. शा_६.१७ //
निर्वेदग्लानिशङ्काख्यास्तथासूया मदः श्रमः /
आलस्यं चैव दैन्यं च चिन्तामोहः स्मृतिर्धृतिः // ना. शा_६.१८ //
व्रीडा चपलता हर्ष आवेगो जडता तथा /
गर्वो विषाद औत्सुक्यं निद्रापस्मार एव च // ना. शा_६.१९ //
सुप्तं विबोधो ऽमर्षश्चाप्यवहित्थमथोग्रता /
मतिर्व्याधिस्तथोन्मादस्तथा मरणमेव च // ना. शा_६.२० //
त्रासश्चैव वितर्कश्च विज्ञेया व्यभिचारिणः /
त्रयस्त्रिंशदमी भावाः समाख्यातास्तु नामतः // ना. शा_६.२१ //
स्तम्भः स्वेदो ऽथ रोमाञ्चः स्वरभेदो ऽथ वेपथुः /
वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्विकाः स्मृताः // ना. शा_६.२२ //
आङ्गिकौ वाचिकश्चैव ह्याहार्यः सात्विकस्तथा /
चत्वारो ऽभिनया ह्येते विज्ञेया नाट्यसंश्रयाः // ना. शा_६.२३ //
लोकधर्मी नाट्यधर्मी धर्मीति द्विविधः स्मृतः /
भारती सात्वती चैव कैशिक्यारभटी तथा // ना. शा_६.२४ //
चतस्रो वृत्तयो ह्येता यासु नाट्यं प्रतिष्ठितम् /
आवन्ती दाक्षिणात्या च तथा चैवोढ्रमागधी // ना. शा_६.२५ //
पाञ्चालमध्यमा चेति विज्ञेयास्तु प्रवृत्तयः /
दैविकी मानुषी चैव सिद्धिः स्याद्द्विविधैव तु // ना. शा_६.२६ //
शारीराश्चैव वैणाश्च सप्त षड्जादयः स्वराः /
[निषादर्षभगान्धारमध्यपञ्चमधैवताः] // ना. शा_६.२७अब्* //
ततं चैवावनद्धं च घनं सुषिरमेव च // ना. शा_६.२७ //
चतुर्विधं च विज्ञेयमातोद्यं लक्षणान्वितम् /
ततं तन्त्रीगतं ज्ञेयमवनद्धं तु पौष्करम् // ना. शा_६.२८ //
घनस्तु तालो विज्ञेयः सुषिरो वंश एव च /
प्रवेशाक्षेपनिष्क्रामप्रासादिकमथान्तरम् // ना. शा_६.२९ //
गानं पञ्चविधं ज्ञेयं ध्रुवायोगसमन्वितम् /
चतुरस्रो विकृष्टश्च रङ्गस्त्र्यश्रश्च कीर्तितः // ना. शा_६.३० //
एवमेषो ऽल्पसूत्रार्थो निर्दिष्टो नाट्यसंग्रहः /
अतः परं प्रवक्ष्यामि सूत्रग्रन्थविकल्पनम् // ना. शा_६.३१ //

तत्र रसानेव तावदादावभिव्याख्यास्यामः ।
न हि रसादृते कश्चिदर्थः प्रवर्तते ।
तत्र विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः ।
को दृष्टान्तः ।
अत्राह यथा हि नानाव्यञ्जनौषधिद्रव्यसंयोगाद्रसनिष्पत्तिः तथा
नानाभावोपगमाद्रसनिष्पत्तिः ।

यथा हि गुडादिभिर्द्रव्यैर्व्यञ्जनैरौषधिभिश्च षाडवादयो रसा निर्वर्त्यन्ते तथा नानाभावोपगता अपि स्थायिनो भावा रसत्वमाप्नुवन्तीति ।
अत्राह रस इति कः पदार्थः ।
उच्यते
आस्वाद्यत्वात् ।
कथमास्वाद्यते रसः ।
यथा हि नानाव्यञ्जनसंस्कृतमन्नं भुञ्जान रसानास्वादयन्ति सुमनसः पुरुष हर्षादींश्चाधिगच्चन्ति तथा नानाभावाभिनयव्यञ्जितान् वागङ्गसत्तोपेतान् स्थायिभावानास्वादयन्ति सुमनसः प्रेक्षकाः
हर्षादींश्चाधिगच्चन्ति ।
तस्मान्नाट्यरसा इत्यभिव्याख्याताः ।

अत्रानुवंश्यौ श्लोकौ भवतः
यथा बहुद्रव्ययुतैर्व्यञ्जनैर्बहुभिर्युतम् /
आस्वादयन्ति भुञ्जाना भक्तं भक्तविदो जनाः // ना. शा_६.३२ //
भावाभिनयसंबद्धान्स्थायिभावांस्तथा बुधाः /
आस्वादयन्ति मनसा तस्मान्नाट्यरसाः स्मृताः // ना. शा_६.३३ //
अत्राह
किं रसेभ्यो भावानामभिनिर्वृत्तिरुताहो भावेभ्यो रसानामिति ।
केषाञ्चिन्मतं परस्परसम्बन्धादेषामभिनिर्वृत्तिरिति ।
तन्न ।
कस्मात् ।
दृश्यते हि भावेभ्यो रसानामभिनिर्वृत्तिर्न तु रसेभ्यो भावानामभिनिर्वृत्तिरिति ।

भवन्ति चात्र श्लोकाः
नानाभिनयसम्बद्धान्भावयन्ति रसनिमान् /
यस्मात्तस्मादमी भावा विज्ञेया नाट्ययोक्तृभिः // ना. शा_६.३४ //
नानाद्रव्यैबहुविधैर्व्यञ्जनं भाव्यते यथा /
एवं भावा भावयन्ति रसानभिनयैः सह // ना. शा_६.३५ //
न भावहीनो ऽस्ति रसो न भावो रसवर्जितः /
परस्परकृता सिद्धिस्तयोरभिनये भवेत् // ना. शा_६.३६ //
व्यञ्जनौषधिसंयोगो यथान्नं स्वादुतां नयेत् /
एवं भावा रसाश्चैव भावयन्ति परस्परम् // ना. शा_६.३७ //
यथा बीजाद्भवेद्वृक्षो वृक्षात्पुष्पं फलं यथा /
तथा मूलं रसाः सर्वे तेभ्यो भावा व्यवस्थिताः // ना. शा_६.३८ //

तदेषं रसानामुत्पत्तिवर्णदैवतनिदर्शनान्यभिव्याख्यास्यामः ।
तेषामुत्पत्तिहेतवश्चत्वारो रसाः ।
तद्यथा शृङ्गारो रौद्रौ वीरो बीभत्स इति ।

अत्र

शृङ्गाराद्धि भवेद्धास्यो रौद्राच्च करुणो रसः /
वीराच्चैवाद्भुतोत्पत्तिर्बीभत्साच्च भयानकः // ना. शा_६.३९ //
शृङ्गारानुकृतिर्या तु स हास्यस्तु प्रकीर्तितः /
रौद्रस्यैव च यत्कर्म स ज्ञेयः करुणो रसः // ना. शा_६.४० //
वीरस्यापि च यत्कर्म सो ऽद्भुतः परिकीर्तितः /
बीभत्सदर्शनं यच्च ज्ञेयः स तु भयानकः // ना. शा_६.४१ //
अथ वर्णाः
श्यामो भवति शृङ्गारः सितो हास्यः प्रकीर्तितः /
कपोतः करुणश्चैव रक्तो रौद्रः प्रकीर्तितः // ना. शा_६.४२ //
गौरो वीरस्तु विज्ञेयः कृष्णश्चैव भयानकः /
नीलवर्णस्तु बीभत्सः पीतश्चैवाद्भुतः स्मृतः // ना. शा_६.४३ //
अथ दैवतानि
शृङ्गारो विष्णुदेवत्यो हास्यः प्रमथदैवतः /
रौद्रो रुद्राधिदैवत्यः करुणो यमदैवतः // ना. शा_६.४४ //
बीभत्सस्य महाकालः कालदेवो भयानकः /
वीरो महेन्द्रदेवः स्यादद्भुतो ब्रह्मदैवतः // ना. शा_६.४५ //

एतमेतेषां रसानामुत्पत्तिवर्णदैवतान्यभिव्याख्यातानि ।
इदानीमनुभावविभावव्यभिचारिसंयुक्तानां लक्षणनिदर्शनान्यभिव्याख्यास्यामः ।
स्थायिभावांश्च रसत्वमुपनेष्यामः ।
तत्र शृङ्गारो नाम रतिस्थायिभावप्रभवः । उज्ज्वलवेषात्मकः ।
यत्किञ्चिल्लोके शुचि मेध्यमुज्ज्वलं दर्शनीयं वा तच्चृङ्गारेणोपमीयते ।
यस्तावदुज्ज्वलवेषः स शृङ्गारवानित्युच्यते ।
यथा च गोत्रकुलाचारोत्पन्नान्याप्तोपदेशसिद्धानि पुंसां नामानि भवन्ति
तथैवेषां रसानां भावानां च नाट्याश्रितानां
चार्थानामाचारोत्पन्नान्योप्तोपदेशसिद्धानि नामानि ।
एवमेष आचारसिद्धो हृद्योज्ज्वलवेषात्मकत्वाच्चृङ्गारो रसः ।
स च स्त्रीपुरुषहेतुक उत्तमयुवप्रकृतिः ।
तस्य द्वे अधिष्ठाने सम्भोगो विप्रलम्भश्च ।
तत्र सम्भोगस्तावत्
ऋतुमाल्यानुलेपनालङ्कारेष्टजनविषयवरभवनोपभोगोपवनगमनानुभवनश्रवणदर्शनक्रीडालीलादिभिर्विभावैरुत्पद्यते
।
तस्य
नयनचातुर्यभ्रूक्षेपकटाक्षसञ्चारललितमधुराङ्गहारवाक्यादिभिरनुभावैरभिनयः
प्रयोक्तव्यः ।
व्यभिचारिणश्चास्यालस्यौग्र्यजुगुप्सावर्ज्याः ।
विप्रलम्भकृतस्तु

निर्वेदग्लानिशङ्कासूयाश्रमचिन्तौत्सुक्यनिद्रास्वप्नविबोधव्याध्युन्मादमदापस्मारजाड्यमरणादिभिरनुभावैरभिनेतव्यः
।
अत्राह:
यद्ययं रतिप्रभवः शृङ्गारः कथमस्य करुणाश्रयिणो भावा भवन्ति ।
अत्रोच्यते:
पूर्वमेवाभिहितं सम्भोगविप्रलम्भकृतः शृङ्गार इति ।
वैशिकशास्त्रकारैश्च दशावस्थो ऽभिहितः ।
ताश्च सामान्याभिनये वक्ष्यामः ।
करुणस्तु शापक्लेशविनिपतितेष्टजनविभवनाशवधबन्धसमुत्थो
निरपेक्षभावः ।
औत्सुक्यचिन्तासमुत्थः सापेक्षभावो विप्रलम्भकृतः ।
एवमन्यः करुणो ऽन्यश्च विप्रलम्भ इति ।
एवमेष सर्वभावसंयुक्तः शृङ्गारो भवति ।
अपि च
सुखप्रायेषु सम्पन्नः ऋतुमाल्यदिसेवकः /
पुरुषः प्रमदायुक्तः शृङ्गार इति संज्ञितः // ना. शा_६.४६ //
अपि चात्र सूत्रार्थानुविद्धे आर्ये भवतः
ऋतुमाल्यालङ्कारैः प्रियजनगान्धर्वकाव्यसेवाभिः /
उपवनगमनविहारैः शृङ्गाररसः समुद्भवति // ना. शा_६.४७ //
नयनवदनप्रसादैः स्मितमधुरवचोधृतिप्रमोदैश्च /
मधुरैश्चाङ्गविहारैस्तस्याभिनयः प्रयोक्तव्यः // ना. शा_६.४८ //

अथ हास्यो नाम हासस्थायिभावात्मकः ।
स च
विकृतपरवेषालङ्कारधार्ष्ट्यलौल्यकुहकासत्प्रलापव्यङ्गदर्शनदोषोदाहरणादिभिर्विभावैरुत्पद्यते
।
तस्योष्ठनासाकपोलस्पन्दनदृष्टिव्याकोशाकुञ्चनस्वेदास्यरागपार्श्वग्रहणादिभिरनुभावैरभिनयः
प्रयोक्तव्यः ।
व्यभिचारिणश्चास्यावहित्थालस्यतन्द्रानिद्रास्वप्नप्रबोधादयः ।
द्विविधश्चायमात्मस्थः परस्थश्च ।
यदा स्वयं हसति तदाऽत्मस्थः ।
यदा तु परं हासयति तदा परस्थः ।
अत्रानुवंश्ये आर्ये भवतः ।

विपरितालङ्कारैर्विकृताचराभिधानवेषैश्च /
विकृतैरर्थविशेषैर्हसतीति रसः स्मृतो हास्यः // ना. शा_६.४९ //
विकृताचारैर्वाक्यैरङ्गविकारैश्च विकृतवेषैश्च /
हासयति जनं यस्मात्तस्मज्ज्ञेयो रसो हास्यः // ना. शा_६.५० //
स्त्रीनीचप्रकृतावेष भूयिष्ठं दृश्यते रसः /

षड्भेदाश्चास्य विज्ञेयास्तांश्च वक्ष्याम्यहं पुनः // ना. शा_६.५१ //
स्मितमथ हसितं विहसितमुपहसितं चापहसितमतिहसितम् /
द्वौ द्वौ भेदौ स्यातामुत्तममध्याधमप्रकृतौ // ना. शा_६.५२ //
तत्र
स्मितहसिते ज्येष्ठानां मध्यानां विहसितोपहसिते च /
अधमानामपहसितं ह्यतिहसितं चापि विज्ञेयम् // ना. शा_६.५३ //
अत्र श्लोकाः:
ईषद्विकसितैर्गण्डैः कटाक्षैः सौष्ठवान्वितैः /
अलक्षितद्विजं धीरमुत्तमानां स्मितं भवेत् // ना. शा_६.५४ //
उत्फुल्लानननेत्रं तु गण्डैर्विकसितैरथ /
किञ्चिल्लक्षितदन्तं च हसितं तद्विधीयते // ना. शा_६.५५ //
अथ मध्यमानाम्:
आकुञ्चिताक्षिगण्डं यत्सस्वनं मधुरं तथा /
कालागतं सास्यरागं तद्वै विहसितं भवेत् // ना. शा_६.५६ //
उत्फुल्लनासिकं यत्तु जिह्मदृष्टिनिरीक्षितम् /
निकुञ्चिताङ्गकशिरस्तच्चोपहसितं भवेत् // ना. शा_६.५७ //
अथाधमानाम्:
अस्थानहसितं यत्तु साश्रुनेत्रं तथैव च /
उत्कम्पितांसकशिरस्तच्चापहसिअतं भवेत् // ना. शा_६.५८ //
संरब्धसाश्रुनेत्रं च विकृष्टस्वरमुद्धतम् /
करोपगूढपार्श्वं च तच्चातिहसितं भवेत् // ना. शा_६.५९ //
हास्यस्थानानि यानि स्युः कार्योत्पन्नानि नाटके /
उत्तमाधममध्यानामेवं तानि प्रयोजयेत् // ना. शा_६.६० //
इत्येष स्वसमुत्थस्तथा परसमुत्थश्च विज्ञेयः /
द्विविधस्त्रिप्रकृतिगतस्त्र्यवस्थभावो रसो हास्यः // ना. शा_६.६१ //

अथ करुणो नाम शोकस्थायिभावप्रभवः ।
स च
शापक्लेशविनिपतितेष्टजनविप्रयोगविभवनाशवधबन्धविद्रवोपघातव्यसनसंयोगादिभिर्विभावैः
समुपजायते ।
तस्याश्रुपातपरिदेवनमुखशोषणवैवर्ण्यस्रस्तगात्रतानिश्वाससस्मृतिलोपादिभिरनुभावैरभिनयः
प्रयोक्तव्यः ।
व्यभिचारिणश्चास्य
निर्वेदग्लानिचिन्तौत्सुक्यावेगभ्रममोहश्रमभयविषाददैन्यव्याधिजडतोन्मादापस्मारत्रासालस्यमरणस्तम्भवेपथु
वैवर्ण्याश्रुस्वरभेदादयः
।
अत्रार्ये भवतः:

इष्टवधदर्शनाद्वा विप्रियवचनस्य संश्रवाद्वापि /
एभिर्भावविशेषैः करुणो नाम संभवति // ना. शा_६.६२ //

सस्वनरुदितैर्मोहागमैश्च परिदैवतैर्विलपितैश्च /
अभिनेयः करुणरसो देहायासाभिघातैश्च // ना. शा_६.६३ //
अथ रौद्रो नाम क्रोधस्थायिभावात्मको
रक्षोदानवोद्धतमनुष्यप्रकृतिः
संग्रामहेतुकः ।
स च
क्रोधाधर्षणाधिक्षेपानृतवचनोपघातवाक्पारुष्याभिद्रोहमात्सर्यादिभिर्विभावैरुत्पद्यते
।
तस्य च
ताडनपाटनपीडाच्चेदनप्रहरणाहरणशस्त्रसंपातसंप्रहाररुधिराकर्षणाद्यानि
कर्माणि ।
पुनश्च
रक्तनयनभ्रुकुटिकरणदन्तोष्ठपीडनगण्डस्फुरणहस्ताग्रनिष्पेषादिरनुभावैरभिनयः
प्रयोक्तव्यः ।

भावाश्चास्यासम्मोहोत्साहावेगामर्षचपलतौग्र्यगर्वस्वेदवेपथुरोमाञ्चगद्गदादयः
।
अत्राह:
यदभिहितं रक्षोदानवादीनां रौद्रो रसः ।
किमन्येषां नास्ति ।
उच्यते:
अस्त्यन्येषामपि रौद्रो रसः ।
किन्त्वधिकारो ऽत्र गृह्यते ।
ते हि स्वभावत एव रौद्रः ।
कस्मात् ।
बहुबाहवो बहुमुखाः प्रोद्धूतविकीर्णपिङ्गलशिरोजाः ।
रक्तोद्वृत्तविलोचना भीमासितरूपिणश्चैव ।
यच्च किञ्चित्समारम्भते स्वभावचेष्टितं वागङ्गादिकं तत्सर्वं रौद्रमेवैषाम्
।
शृङ्गारश्च तैः प्रायशः प्रसभ्यं सेव्यते ।
तेषां चानुकारिणो ये पुरुषस्तेषामपि सङ्ग्रामसम्प्रहारकृतो रौद्रो रसो
ऽनुमन्तव्यः ।
अत्रानुवंश्ये आर्ये भवतः:

युद्धप्रहारघातनविकृतच्चेदनविदारणैश्चैव /
संङ्ग्रामसम्भ्रमाद्यैरेभिः सञ्जायते रौद्रः // ना. शा_६.६४ //
नानाप्रहरणमोक्षैः शिरःकबन्धभुजकर्तनैश्चैव /
एभिश्चार्थविशेषैरस्याभिनयः प्रयोक्तव्यः // ना. शा_६.६५ //
इति रौद्ररसो दृष्टो रौद्रवागङ्गचेष्टितः /
शस्त्रप्रहारभूयिष्ठ उग्रकर्मक्रियात्मकः // ना. शा_६.६६ //

अथ वीरो नामोत्तमप्रकृतिरुत्साहात्मकः ।
स
चासंमोहाध्यवसायनविनयबलपराक्रमशक्तिप्रतापप्रभावादिभिर्विभावैरुत्पद्यते
।
तस्य स्थैर्यधैर्यशौर्यत्यागवैशारद्यादिभिरनुभावैरभिनयः प्रयोक्तव्यः
।
भावाश्चास्य धृतिमतिगर्वावेगौग्र्यामर्षस्मृतिरोमाञ्चादयः ।

अत्रार्ये रसविचारमुखे
उत्साहाध्यवसायादविषादित्वादविस्मयामोहात् /
विविधादर्थविशेषाद्वीररसो नाम सम्भवति // ना. शा_६.६७ //
स्थितिधैर्यवीर्यगर्वैरुत्साहपराक्रमप्रभावैश्च /
वाक्यैश्चाक्षेपकृतैर्वीररसः सम्यगभिनेयः // ना. शा_६.६८ //

अथ भयानको नाम भयस्थायिभावात्मकः ।
स च
विकृतरवसत्त्वदर्शनशिवोलूकत्रासोद्वेगशून्यागारारण्यगमनस्वजनवधबन्धदर्शनश्रुतिकथादिभिर्विभावैरुत्पद्यते
।
तस्य
प्रवेपितकरचरणनयनचपलपुलकमुखवैवर्ण्यस्वरभेदादिभिरनुभावैरभिनयः
प्रयोक्तव्यः ।
भावाश्चास्य
स्तम्भस्वेदगद्गदरोमाञ्चवेपथुस्वरभेदवैवर्ण्यशङ्कामोहदैन्यावेगचापलजडतात्रासापस्मारमरणादयः
।
अत्रार्याः:

विकृतरवसत्त्वदर्शनसंग्रामारण्यशून्यगृहगमनात् /
गुरुनृपयोरपराधात्कृतकश्च भयानको ज्ञेयः // ना. शा_६.६९ //
गात्रमुखदृष्टिभेदैरूरुस्तम्भाभिवीक्षणोद्वेगैः /
सन्नमुखशोषहृदयस्पन्दनरोमोद्गमैश्च भयम् // ना. शा_६.७० //
एतत्स्वभावजं स्यात्सत्त्वसमुत्थं तथैव कर्तव्यम् /
पुनरेभिरेव भावैः कृतकं मृदुचेष्टितैः कार्यम् // ना. शा_६.७१ //
करचरणवेपथुस्तम्भगात्रहृदयप्रकम्पेन /
शुष्कोष्ठतालुकण्ठैर्भयानको नित्यमभिनेयः // ना. शा_६.७२ //

अथ बीभत्सो नाम जुगुप्सास्थायिभावात्मकः ।
स चाहृद्याप्रियाचोष्यानिष्टश्रवणदर्शनकीर्तनादिभिर्विभावैरुत्पद्यते ।
तस्य
सर्वाङ्गसंहारमुखविकूणनोल्लेखननिष्ठीवनोद्वेजनादिभिरनुभावैरभिनयः
प्रयोक्तव्यः ।

भावाश्चास्यापस्मारोद्वेगावेगमोहव्याधिमरणादयः ।
अत्रानुवंश्ये आर्ये भवतः:

अनभिमतदर्शनेन च गन्धरसस्पर्शशब्ददोषैश्च /
उद्वेजनैश्च बहुभिर्बीभत्सरसः समुद्भवति // ना. शा_६.७३ //
मुखनेत्रविकूणनया नासाप्रच्चादनावनमितास्यैः /
अव्यक्तपादपतनैर्बीभत्सः सम्यगभिनेयः // ना. शा_६.७४ //

अथाद्भुतो नाम विस्मयस्थायिभावात्मकः ।
स च
दिव्यजनदर्शनेप्सितमनोरथावाप्त्युपवनदेवकुलादिगमनसभाविमानमायेन्द्रजालसम्भावनादिभिर्विभावैरुत्पद्यते
।
तस्य
नयनविस्तारानिमेषप्रेक्षणरोमाञ्चाश्रुस्वेदहर्षसाधुवाददानप्रबन्धहाहाकारबाहुवदनचेलाङ्गुलिभ्रमणादिभिरनुभावै
रभिनयः
प्रयोक्तव्यः ।
भावाश्चास्य स्तम्भाश्रुस्वेदगद्गदरोमाञ्चावेगसम्भ्रमजडताप्रलयादयः ।
अत्रानुवंश्ये आर्ये भवतः:

यत्त्वातिशयार्थयुक्तं वाक्यं शिल्पं च कर्मरूपं वा /
तत्सर्वमद्भुतरसे विभावरूपं हि विज्ञेयम् // ना. शा_६.७५ //
स्पर्शग्रहोल्लुकसनैर्हाहाकारैश्च साधुवादैश्च /
वेपथुगद्गदवचनैः स्वेदाद्यैरभिनयस्तस्य // ना. शा_६.७६ //

शृङ्गारं त्रिविधं विद्यात्द्वाङ्नैपथ्यक्रियात्मकम् /
अङ्गनैपथ्यवाक्यैश्च हास्यरौद्रौ त्रिधा स्मृतौ // ना. शा_६.७७ //
धर्मोपघातजश्चैव तथार्थापचयोद्भवः /
तथा शोककृतश्चैव करुणस्त्रिविधः स्मृतः // ना. शा_६.७८ //
दानवीरं धर्मवीरं युद्धवीरं तथैव च /
रसं वीरमपि प्राह ब्रह्मा त्रिविधमेव हि // ना. शा_६.७९ //
व्याजाच्चैवापराधाच्च वित्रासितकमेव च /
पुनर्भयानकञ्चैव विद्यात् त्रिविधमेव हि // ना. शा_६.८० //
बीभत्सः क्षोभजः शुद्ध उद्वेगी स्यात् द्वितीयकः /
विष्ठाकृमिभिरुद्वेगी क्षोभजो रुधिरादिअजः // ना. शा_६.८१ //
दिव्यश्चानन्दजश्चैव द्विधा ख्यातो ऽद्भुतो रसः /
दिव्यदर्शनजो दिव्यो हर्षादानदजः स्मृतः // ना. शा_६.८२ //

[अथ शान्तो नाम शमस्थायिभावात्मको मोक्षप्रवर्तकः ।
स तु तत्त्वज्ञानवैराग्याशयशुद्ध्यादिभिर्विभावैः समुत्पद्यते ।
तस्य

यमनियमाध्यात्मध्यानधारणोपासनसर्वभूतदयालिङ्गग्रहणादिभिरनुभावैरभिनयः प्रयोक्तव्यः ।
व्यभिचाणश्चास्य निर्वेदस्मृतिधृतिसर्वाश्रमशौचस्तम्भरोमाञ्चादयः ।
अत्रार्याः श्लोकाश्च भवन्तिः

मोक्षाध्यात्मसमुत्थस्तत्त्वज्ञानार्थहेतुसंयुक्तः /
नैःश्रेयसोपदिष्टः शान्तरसो नाम सम्भवति // ना. शा_६.८२*१ //
बुद्धीन्द्रियकर्मेन्द्रियसंरोधाध्यात्मसंस्थितोपेतः /
सर्वप्राणिसुखहितः शान्तरसो नाम विज्ञेयः // ना. शा_६.८२*२ //
न यत्र दुःखं न सुखं न द्वेषो नापि मत्सरः /
समः सर्वेषु भूतेषु स शान्तः प्रथितो रसः // ना. शा_६.८२*३ //
भावा विकारा रत्याद्याः शान्तस्तु प्रकृतिर्मतः /
विकारः प्रकृतैर्जातः पुनस्तत्रैव लीयते /
स्वं स्वं निमित्तमासाद्य शान्ताद्भावः प्रवर्तते // ना. शा_६.८२*४ //
पुनर्निमित्तापाये च शान्त एवोपलीयते /
एवं नवरसा दृष्टा नाट्यज्ञैर्लक्षणान्विअताः // ना. शा_६.८२*५ //
]

एवमेते रसा ज्ञेयास्त्वष्टौ लक्षणलक्षिताः /
अत ऊर्ध्वं प्रवक्ष्यामि भावानामपि लक्षणम् // ना. शा_६.८३ //

इति भारतीये नाट्यशास्त्रे रसाध्यायः षष्ठः

---

अथ सप्तमो ऽध्यायः

भावानिदानीं व्याख्यास्यामः ।
अत्राह
भावा इति कस्मात् ।
किं भवन्तीति भावाः किं वा भावयन्तीति भावाः ।
उच्यतेः
वागङ्गसत्त्वोपेतानान्काव्यार्थान्भावयन्तीति भावा इति ।
भू इति करणे धातुस्तथा च भावितं वासितं कृतमित्यनर्थान्तरम् ।
लोके ऽपि च प्रसिद्धम् ।
अहो ह्यनेन गन्धेन रसेन वा सर्वमेव भावितमिति ।
तच्च व्याप्त्यर्थम् ।
श्लोकाश्चात्र

विभावेनाहृतो यो ऽर्थो ह्यनुभावैस्तु गम्यते /
वागङ्गसत्त्वाभिनयैः स भाव इति संज्ञितः // ना. शा_७.१ //

वागङ्गमुखरागेण सत्त्वेनाभिनयेन च /
कवेरन्तर्गतं भावं भावयन्भाव उच्यते // ना. शा_७.२ //
नानाभिनयसम्बद्धान्भावयन्ति रसानिमान् /
यस्मातस्मादमी भावा विज्ञेया नाट्ययोक्तृभिः // ना. शा_७.३ //

अथ विभाव इति कस्मात् ।
उच्यते
विभवो विज्ञानार्थः ।
विभावः कारणं निमित्तं हेतुरिति पर्यायाः ।
विभाव्यते ऽनेन वागङ्गसत्त्वाभिनया इत्यतो विभावः ।
यथा विभावितं विज्ञातमित्यनर्थान्तरम् ।

अत्र श्लोकः
बहवो ऽर्था विभाव्यन्ते वागङ्गाभिनयाश्रयाः /
अनेन यस्मात्तेनायं विभाव इति संज्ञितः // ना. शा_७.४ //

अथानुभाव इति कस्मात् ।
उच्यते
अनुभाव्यते ऽनेन वागङ्गसत्त्वकृतो ऽभिनय इति ।
अत्र श्लोकः:

वागङ्गाभिनयेनेह यतस्त्वर्थो ऽनुभाव्यते /
शाखाङ्गोपाङ्गसंयुक्तस्त्वनुभावस्ततः स्मृतः // ना. शा_७.५ //

एवं ते विभावानुभावसंयुक्ता भावा इति व्याख्याताः ।
अतो ह्येषां भावानां सिद्धिर्भवति ।
तस्मादेषां भावानां विभावानुभावसंयुक्तानां
लक्षणनिदर्शनान्यभिव्याख्यास्यामः ।
तत्र विभावानुभावौ लोकप्रसिद्धौ ।
लोकस्वभावानुगतत्वाच्च तयोर्लक्षणं नोच्यते ऽतिप्रसङ्गनिवृत्यर्थम् ।
भवति चात्र श्लोकः:

लोकस्वभावसंसिद्धा लोकयात्रानुगामिनः /
अनुभावा विभावाश्च ज्ञेयास्त्वभिनये बुधैः // ना. शा_७.६ //

तत्राष्टौ भावाः स्थायिनः ।
त्रयस्त्रिंशद्व्यभिचारिणः ।
अष्टौ सात्विका इति भेदाः ।
एवमेते काव्यरसाभिव्यक्तिहेतव एकोनपञ्चाशद्भावाः प्रत्यवगन्तव्याः ।
एभ्यश्च सामान्यगुणयोगेन रसा निष्पद्यन्ते ।
अत्र श्लोकः:

योऽर्थो हृदयसंवादी तस्य भावो रसोद्भवः /
शरीरं व्याप्यते तेन शुष्कं काष्ठमिवाग्निना // ना. शा_७.७ //

अत्राह
यदि
काव्यार्थसंश्रितैर्विभावानुभावव्यञ्जितैरेकोनपञ्चाशद्भावैः
सामान्यगुणयोगेनाभिनिष्पद्यन्ते रसास्तत्कथं स्थायिन एव भावा
रसत्वमाप्नुअवन्ति ।
उच्यते
यथा हि समानलक्षणास्तुल्यपाणिपादोदरशरीराः समानाङ्गप्रत्यङ्गा अपि पुरुषाः
कुलशीलविद्याकर्मशिल्पविचक्षणत्वाद्राजत्वमाप्नुवन्ति तत्रैव चान्ये
ऽल्पबुद्धयस्तेषामेवानुचरा भवन्ति
तथा
विभावानुभावव्यभिचारिणः स्थायिभावानुपाश्रिता भवन्ति ।
बह्वाश्रयत्वास्वामिभूताः स्थायिनो भावाः ।
तद्वत्स्थानीयपुरुषगुणभूता अन्ये भावास्तान्गुणतया श्रयन्ते ।
स्थायिभावा रसत्वमाप्नुवन्ति ।
परिजनभूता व्यभिचारिणो भावाः ।
अत्राह
को दृष्टान्त इति ।
यथा नरेन्द्रो बहुजनपरिवारो ऽपि स एव नाम लभते नान्यः सुमहानपि
पुरुषः तथा विभावानुभावव्यभिचारिपरिवृतः स्थायी भावो रसनाम लभते ।

भवति चात्र श्लोकः:

यथा नराणां नृपतिः शिष्याणां च यथा गुरुः /
एवं हि सर्वभावानां भावः स्थायि महानिह // ना. शा_७.८ //

लक्षणं खलु पूर्वमभिहितमेषां रससंज्ञकानाम् ।
इदानीं भावसामान्यलक्षणमभिधास्यामः ।
तत्र स्थायिभावान्वक्ष्यामः
रतिर्नाम प्रमोदात्मिका
ऋतुमाल्यानुलेपनाभरणभोजनवरभवनानुभवनाप्रातिकूल्यादिभिर्विभावैः
समुत्पद्यते ।
तामभिनयेत्स्मितवदनमधुरकथनभ्रूक्षेपकटाक्षादिभिरनुभावैः ।

अत्र श्लोकः:
इष्टार्थविषयप्राप्त्या रतिरित्युपजायते /
सौम्यत्वादभिनेया सा वाङ्माधुर्याङ्गचेष्टितैः // ना. शा_७.९ //

हासो नाम

परचेष्टानुकरणकुहकासम्बद्धप्रलापपौरोभाग्यमौर्ख्यादिभिर्विभावैः
समुत्पद्यते ।
तमभिनयेत्पूर्वोक्तैर्हसितादिभिरनुभावैः ।
भवति चात्र श्लोकः:

परचेष्टानुकरणाद्धासः समुपजायते /
स्मितहासातिहसितैरभिनेयः स पण्डितैः // ना. शा_७.१० //

शोको नाम इष्टजनवियोगविभवनाशवधबन्धदुःखानुभनवनादिभिर्विभावैः
समुत्पद्यते ।
तस्यास्रपातपरिदेवितविलपितवैवर्ण्यस्वरभेदस्रस्तगात्रताभूमिपतनसस्वनरुदिताक्रन्दितदीर्घनिःश्वसितजडतो
न्मादमोहमरणादिभिरनुभावैरभिनयः
प्रयोक्तव्यः ।
रुदितमत्र त्रिविधम् आनन्दजमार्तिजमीर्ष्यासमुद्भवं चेति ।
भवन्ति चात्रार्याः
आनन्दे ऽप्यार्तिकृतं त्रिविधं रुदितं सदा बुधैर्ज्ञेयम् /
तस्य त्वभिनययोगान्विभावगतितः प्रवक्ष्यामि // ना. शा_७.१०* //
हर्षोत्फुल्लकपोलं सानुस्मरणादपाङ्गविसृतास्रम् /
रोमाञ्चगात्रमनिभृतमानन्दसमुद्भवं भवति // ना. शा_७.११ //
पर्याप्तविमुक्तास्रं सस्वनमस्वस्थगात्रगतिचेष्टम् /
भूमिनिपातनिवर्तितविलपितमित्यार्तिजं भवति // ना. शा_७.१२ //
प्रस्फुरितौष्ठकपोलं सशिरःकम्पं तथा सनिःश्वासम् /
भ्रुकुटीकटाक्षकुटिलं स्त्रीणामीर्ष्याकृतं भवति // ना. शा_७.१३ //
स्त्रीनीचप्रकृतिष्वेष शोको व्यसनसम्भवः /
धैर्येणोत्तममध्यानां नीचानां रुदितेन च // ना. शा_७.१४ //

क्रोधो नाम आधर्षणाक्रुष्टकलहविवादप्रतिकूलादिभिर्विभावैः समुत्पद्यते ।
अस्य
विकृष्टनासापुटोद्वृत्तनयनसंदष्टोष्ठपुटगण्डस्फुरणादिभिरनुभावैरभिनयः
प्रयोक्तव्यः ।

रिपुजो गुरुजश्चैव प्रणयिप्रभवस्तथा /
भृत्यजः कृतकश्चेति क्रोधः पञ्चविधः स्मृतः // ना. शा_७.१५ //

अत्रार्या भवन्ति
भृकुटीकुटिलोत्कटमुखः सन्दष्टोष्ठः स्पृशन्करेण करम् /
क्रुद्धः स्वभुजाप्रेक्षी शत्रौ निर्यन्त्रणं रुष्येत् // ना. शा_७.१६ //
किञ्चिदवाङ्ग्मुखदृष्टिः सास्रस्वेदापमार्जनपरश्च /
अव्यक्तोल्बणचेष्टो गुरौ विनययन्त्रितो रुष्येत् // ना. शा_७.१७ //
अल्पप्रतरविचारो विकिरन्नश्रूण्यपाङ्गविक्षेपैः /
सभ्रुकुटिस्फुरितोष्ठः प्रणयोपगतां प्रिया रुष्येत् // ना. शा_७.१८ //

अथ परिजने तु रोषस्तर्जननिर्भर्त्सनाक्षिविस्तारैः /
विप्रेक्षणैश्च विविधैरभिनेयः क्रूरतारहितः // ना. शा_७.१९ //
कारणमवेक्षमाणः प्रायेणायासलिङ्गसंयुक्तः /
वीररसान्तरचारी कार्यः कृतको भवति कोपः // ना. शा_७.२० //

उत्साहो नाम उत्तमप्रकृतिः ।
स चाविषादशक्तिधैर्यशौर्यादिभिर्विभावैरुत्पद्यते ।
तस्य धैर्यत्यागवैशारद्यादिभिरनुभावैरभिनयः प्रयोक्तव्यः ।
अत्र श्लोकः:

असम्मोहादिभिर्व्यक्तो व्यवसायनयात्मकः /
उत्साहस्त्वभिनेयः स्यादप्रमादोत्थितादिभिः // ना. शा_७.२१ //

भयं नाम स्त्रीनीचप्रकृतिकम् ।
गुरुराजापराधश्वापदशून्यागाराटवीपर्वतगहनगजाहिदर्शननिर्भर्त्सनकान्तारदुर्दिननिशान्धकरोलूकनक्तञ्चरारावश्रवणादिभिर्विभावैः
समुत्पद्यते ।
तस्य
प्रकम्पितकरचरणहृदयकम्पनस्तम्भमुखशोषजिह्वापरिलेहनस्वेदवेपथुत्रासपरित्राणान्वेषणधावनोत्कृष्टादिभिरनुभवैरभिनयः
प्रयोक्तव्यः ।
अत्र श्लोकाः:

गुरुराजापराधेन रौद्राणां चापि दर्शनात् /
श्रवणादपि घोराणां भयं मोहेन जायते // ना. शा_७.२२ //
गात्रकम्पनवित्रासैर्वक्त्रशोषणसम्भ्रमैः
विस्फारितैक्षणैः कार्यमभिनेयक्रियागुणैः // ना. शा_७.२३ //
सत्त्ववित्रासनोद्भूतं भयमुत्पद्यते नृणाम् /
स्रस्ताङ्गाक्षिनिमेषैस्तदभिनेयं तु नर्तकैः // ना. शा_७.२४ //

अत्रार्या भवति
करचरणहृदयकम्पैर्मुखशोषणवदनलेहनस्तम्भैः /
सम्भ्रान्तवदनवेपथुसंत्रासकृतैरभिनयो ऽस्य // ना. शा_७.२५ //

जुगुप्सा नाम स्त्रीनीचप्रकृतिका ।
सा चाहृद्यदर्शनश्रवणादिभिर्विभावैः समुत्पद्यते ।
तस्याः सर्वाङ्गसङ्कोचनिष्ठीवनमुखविकूणनहृल्लेखादिभिरनुभावैरभिनयः
प्रयोक्तव्यः ।
भवति चात्र श्लोकः

नासाप्रच्चादनेनेह गात्रसङ्कोचनेन च /

उद्वेजनैः सहृल्लेखैर्जुगुप्सामभिनिर्दिशेत् // ना. शा_७.२६ //

विस्मयो नाम
मायेन्द्रजालमानुषकर्मातिशयचित्रपुस्तशिल्पविद्यातिशयादिभिर्विभावैः
समुत्पद्यते ।
तस्य
नयनविस्तारानिमेषप्रेक्षितभ्रूक्षेपरोमहर्षणशिरःकम्पसाधुवादादिभिरनुभावैरभिनयः
प्रयोक्तव्यः ।
भवति चात्र श्लोकः:

कर्मातिशयनिर्वृत्तो विस्मयो हर्षसम्भवः /
सिद्धिस्थाने त्वसौ साध्यः प्रहर्षपुलकादिभिः // ना. शा_७.२७ //

एवमेते स्थायिनो भावा रससंज्ञाः प्रत्यवगन्तव्याः ।
व्यभिचारिण इदानीं व्याख्यास्यामः ।
अत्राह
व्यभिचारिण इति कस्मात् ।
उच्यते
वि अभि इत्येतावुपसर्गौ ।
चर इति गत्यर्थो धातुः ।
विविधमाभिमुख्येन रसेषु चरन्तीति व्यभिचारिणः ।
वागङ्गसत्त्वोपेताः प्रयोगे रसान्नयन्तीति व्यभिचारिणः ।
अत्राह
कथं नयन्तीति ।
उच्यते
लोकसिद्धान्त एषः
यथा सूर्य इदं दिनं नक्षत्रं वा नयतीति ।
न च तेन बाहुभ्यां स्कन्धेन वा नीयते ।
किं तु लोकप्रसिद्धमेतत् ।
यथेदं सूर्यो नक्षत्रं दिन वा नयतीति ।
एवमेते व्यभिचारिण इत्यवगन्तव्याः ।
तानिह सङ्ग्रहाभिहितांस्त्रयस्त्रिंशद्व्यभिचारिणो भावान् वर्णयिष्यामः ।
तत्र निर्वेदो नाम
दारिद्र्यव्याध्यवमानाधिक्षेपाक्रुष्टक्रोधताडनेष्टजनवियोगतत्त्वज्ञानादिभिर्विभावैः
समुत्पद्यते स्त्रीनीचकुसत्त्वानाम् ।
रुदितनिःश्वसितोच्छ्वसितसम्प्रधारणादिभिरनुभावैस्तमभिनयेत् ।
अत्र श्लोकः:

दारिद्र्येष्टवियोगाद्यैः निर्वेदो नाम जायते /
सम्प्रधारणनिःश्वासैस्तस्य त्वभिनयो भवेत् // ना. शा_७.२८ //

अत्रानुवंश्ये आर्ये भवतः:
इष्टजनविप्रयोगाद्दारिद्र्याद्व्याधितस्तथा दुःखात् /
ऋद्धिं परस्य दृष्ट्वा निर्वेदो नाम सम्भवति // ना. शा_७.२९ //
बाष्पपरिप्लुतनयनः पुनश्च निःश्वासनदीनमुखनेत्रः /
योगीव ध्यानपरो भवति हि निर्वेदवान्पुरुषः // ना. शा_७.३० //

ग्लानिर्नाम
वान्तविरिक्तव्याधितपोनियमोपवासमनस्तापातिशयमदनसेवनातिव्यायामाध्वगमनक्षुत्पिपासानिद्राच्चेदादिभि
र्विभावैः
समुत्पद्यते ।
तस्याः
क्षामवाक्यनयनकपोलोदरमन्दपदोत्क्षेपणवेपनानुत्साहतनुगात्रवैवर्ण्यस्वरभेदाभिरनुभावैरभिनयः
प्रयोक्तव्यः ।

अत्रार्ये भवतः
वान्तविरिक्तव्याधिषु तपसा जरसा च जायते ग्लानिः /
कार्श्येन साभिनेया मन्दभ्रमणेन कम्पेन // ना. शा_७.३१ //
गदितैः क्षामक्षामैर्नेत्रविकारैश्च दीनसञ्चारैः /
श्लथभावेनाङ्गानां मुहुर्मुहुर्निर्दिशेद् ग्लानिम् // ना. शा_७.३२ //

शङ्का नाम सन्देहात्मिका स्त्रीनीचप्रभवा ।
चौर्याभिग्रहणनृपापराधपापकर्मकरणादिभिर्विभावैः समुत्पद्यते ।
तस्या
मुहुर्मुहुरवलोकनावकुण्ठनमुखशोषणजिह्वालेहनमुखवैवर्ण्यस्वरभेदवेपथुशुष्कोष्ठकण्ठायाससाधर्म्यादिभिरनुभावैर
भिनयः
प्रयोक्तव्यः ।

चौर्यादिजनिता शङ्का प्रायः कार्या भयानके /
प्रियव्यलीकजनिता तथा शृङ्गारिणी मता // ना. शा_७.३३ //

अत्राकारसंवरणमपि केचिदिच्चन्ति ।
तच्च कुशलैरुपाधिभिरिङ्गितैश्चोपलक्ष्यम् ।

अत्रार्ये भवतः
द्विविधा शङ्का कार्याह्यात्मसमुत्था च परसमुत्था च /
या तत्रात्मसमुत्था सा ज्ञेया दृष्टिचेष्टाभिः // ना. शा_७.३४ //
किञ्चित्प्रवेपिताङ्गस्त्वधोमुखो वीक्षते च पार्श्वानि /
गुरुसज्जमानजिह्वः श्यामास्यः शङ्कितः पुरुषः // ना. शा_७.३५ //

असूया नाम नानापराधद्वेषपरैश्वर्यसौभाग्यमेधाविद्यालीलादिभिर्विभावैः
समुत्पद्यते ।

तस्याश्च परिषदि
दोषप्रख्यापनगुणोपघातेर्ष्याचक्षुःप्रदानाधोमुखभ्रुकुटीक्रियावज्ञानकुत्सनादिभिरनुभावैरभिनयः
प्रयोक्तव्यः ।

अत्रार्ये भवतः
परसौभाग्येश्वरतामेधालीलासमुच्छ्रयान्दृष्ट्वा /
उत्पद्यते ह्यसूया कृतापराधो भवेद्यश्च // ना. शा_७.३६ //
भ्रुकुटिकुटिलोत्कटमुखैः सेर्ष्याक्रोधपरिवृत्तनेत्रैश्च /
गुणनाशनविद्वेषैस्तत्राभिनयः प्रयोक्तव्यः // ना. शा_७.३७ //

मदो नाम मद्योपयोगादुत्पद्यते ।
स च त्रिविधः पञ्चविभावश्च ।
अत्रार्या भवन्ति

ज्ञेयस्तु मदस्त्रिविधस्तरुणो मध्यस्तथावकृष्टश्च /
करणं पञ्चविधं स्यात्तस्याभिनयः प्रयोक्तव्यः // ना. शा_७.३८ //
कश्चिन्मत्तो गायति रोदिति कश्चित्तथा हसति कश्चित् /
परुषवचनाभिधायी कश्चित्कश्चित्तथा स्वपिति // ना. शा_७.३९ //
उत्तमसत्त्वः शेते हसति च गायति च मध्यमप्रकृतिः /
परुषवचनाभिधायी रोदत्यपि चाधमप्रकृतिः // ना. शा_७.४० //
स्मितवचनमधुररागो हृष्टतनुः किञ्चिदाकुलितवाक्यः /
सुकुमाराविद्धगतिस्तरुणमदस्तूत्तमप्रकृतिः // ना. शा_७.४१ //
स्खलिताघूर्णितनयनः स्रस्तव्याकुलितबाहुविक्षेपः /
कुटिलव्याविद्धगतिर्मध्यमदो मध्यमप्रकृतिः // ना. शा_७.४२ //
नष्टस्मृतिर्हतगतिश्चर्दितहिक्काकफैः सुबीभत्सः /
गुरुसज्जमानजिह्वो निष्ठीवति चाधमप्रकृतिः // ना. शा_७.४३ //
रङ्गे पिबतः कार्या मदवृद्धिर्नाट्ययोगमासाद्य /
कार्यो मदक्षयो वै यः खलु पीत्वा प्रविष्टः स्यात् // ना. शा_७.४४ //
सन्त्रासाच्चोकाद्वा भयात्प्रहर्षाच्च कारणोपगतात् /
उत्क्रम्यापि हि कार्यो मदप्रणाशः क्रमात्तज्ज्ञैः // ना. शा_७.४५ //
एभिर्भावविशेषैर्मदो द्रुतं सम्प्रणाशमुपयाति /
अभ्युदयसुखैर्वाक्यैर्यथैव शोकः क्षयं याति // ना. शा_७.४६ //

श्रमो नाम अध्वव्यायामसेवनादिभिर्विभावैः समुत्पद्यते ।
तस्य
गात्रपरिमर्दनसंवाहननिःश्वसितविजृम्भितमन्दपदोत्क्षेपणनयनवदनविकूणनसीत्करादिभिरनुभावैरभिनयः
प्रयोक्तव्यः ।

अत्रार्या
नृत्ताध्वव्यायामान्नरस्य सञ्जायते श्रमो नाम /
निःश्वासखेदगमनैस्तस्याभिनयः प्रयोक्तव्यः // ना. शा_७.४७ //

आलस्यं नाम खेदव्याधिगर्भस्वभावश्रमसौहित्यादिभिर्विभावैः समुत्पद्यते स्त्रीनीचानाम् ।
तदभिनयेत्सर्वकर्मानभिलाषशयनासननिद्रातन्द्रीसेवनादिभिरनुभावैः ।

अत्रार्या
आलस्यं त्वभिनेयं खेदापगतं स्वभावजं चापि /
आहारवर्जितानामारम्भाणामनारम्भात् // ना. शा_७.४८ //

दैन्यं नाम दौर्गत्यमनस्तापादिभिर्विभावैः समुत्पद्यते ।
तस्याधृतिशिरोरोगगात्रगौरवान्यमनस्कतामृजापरिवर्जनादिभिरनुभावैरभिनयः प्रयोक्तव्यः ।

अत्रार्या
चिन्तौत्सुक्यसमुत्था दुःखाद्या भवति दीनतां पुंसाम् /
सर्वमृजापरिहारैर्विविधो ऽभिनयो भवेत्तस्य // ना. शा_७.४९ //
चिन्ता नाम ऐश्वर्यभ्रंशेष्टद्रव्यापहारदारिद्र्यादिभिर्विभावैरुत्पद्यते ।
तामभिनयेन्निःश्वसितोच्च्वसितसन्तापध्यानाधोमुखचिन्तनतनुकार्श्यादिभिरनुभावैः ।

अत्रार्ये भवतः
ऐश्वर्यभ्रंशेष्टद्रव्यक्षयजा बहुप्रकारा तु /
हृदयवितर्कोपगता न्?णां चिन्ता समुद्भवति // ना. शा_७.५० //
सोच्च्वासैर्निःश्वसितैः सन्तापैश्चैव हृदयशून्यतया /
अभिनेतव्या चिन्ता मृजाविहीनैरधृत्या च // ना. शा_७.५१ //

मोहो नाम दैवोपघातव्यसनाभिघातव्याधिभयावेगपूर्ववैरानुस्मरणादिभिर्विभावैः समुत्पद्यते ।
तस्य निश्चैतन्यभ्रमणपतनाघूर्णनादर्शनादिभिरनुभावैरभिनयः प्रयोक्तव्यः ।

अत्र श्लोकस्तावदार्या च
अस्थाने तस्करान्दृष्ट्वा त्रासनैर्विविधैरपि /
तत्प्रतीकारशून्यस्य मोहः समुपजायते // ना. शा_७.५२ //
व्यसनाभिघातभयपूर्ववैरसंस्मरणरोगजो मोहः /
सर्वेन्द्रियसम्मोहात्तस्याभिनयः प्रयोक्तव्यः // ना. शा_७.५३ //

स्मृतिर्नाम सुखदुःखकृतानां भावानामनुस्मरणम् ।
सा च स्वास्थ्यजघन्यरात्रिनिद्राच्चेदसमानदर्शनोदाहरणचिन्ताभ्यासादिभिर्विभावैः समुत्पद्यते ।

तामभिनयेच्चिरःकम्पनावलोकनभ्रूसमुन्नमनादिभिरनुभावैः ।

अत्रार्ये भवतः
सुखदुःखमतिक्रान्तं तथा मतिविभावितं यथावृत्तम् /
चिरविस्मृतं स्मरति यः स्मृतिमानिति वेदितव्यो ऽसौ // ना. शा_७.५४ //
स्वास्थ्याभ्याससमुत्था श्रुतिदर्शनसम्भवा स्मृतिर्निपुणैः /
शिर उद्वाहनकम्पैर्भ्रूक्षेपैश्चाभिनेतव्या // ना. शा_७.५५ //

धृतिर्नाम
शौर्यविज्ञानश्रुतिविभवशौचाचारगुरुभक्त्यधिकमनोरथार्थलाभक्रीडादिभिर्विभावैः
समुत्पद्यते ।
तामभिनयेत्प्राप्तानां
विषयाणामुपभोगादप्राप्तातीतोपहृतविनष्टानामनुशोचनादिभिरनुभावैः ।
अत्रार्ये भवतः:

विज्ञानशौचविभवश्रुतिशक्तिसमुद्भवा धृतिः सद्भिः /
भयशोकविषदाद्यै रहिता तु सदा प्रयोक्तव्या // ना. शा_७.५६ //
प्राप्तानामुपभोगः शब्दरसस्पर्शरूपगन्धानाम् /
अप्राप्तैश्च न शोको यस्यां हि भवेद् धृतिः सा तु // ना. शा_७.५७ //

व्रीडा नाम अकार्यकरणात्मिका ।
सा च गुरुव्यतिक्रमणावज्ञानप्रतिज्ञातानिर्वहनपश्चात्तापादिभिर्विभावैः
समुत्पद्यते ।
तां
निगूढवदनाधोमुखविचिन्तनोर्वीलेखनवस्त्राङ्गुलीयकस्पर्शनखनिकृन्तनादिभिरनुभावैरभिनयेत्
।
अत्रार्ये भवतः:

किञ्चिदकार्यं कुर्वन्नेवं यो दृश्यते शुचिभिरन्यैः /
पश्चात्तापेन युतो व्रीडित इति वेदितव्यो ऽसौ // ना. शा_७.५८ //
लज्जानिगूढवदनो भूमिं विलिखन्नखांश्च विनिकृन्तन् /
वस्त्राङ्गुलीयकानां संस्पर्शं व्रीडितः कुर्यात् // ना. शा_७.५९ //

चपलता नाम रागद्वेषमात्सर्यामर्षाप्रतिकूल्यादिभिर्विभावैः समुत्पद्यते ।
तस्याश्च
वाक्पारुष्यनिर्भर्त्सनवधबन्धसम्प्रहारताडनादिभिरनुभावैरभिनयः
प्रयोक्तव्यः ।
अत्रार्या भवति:

अविमृश्य तु यः कार्यं पुरुषो वधताडनं समारभते /
अविनिश्चितकारित्वात्स तु खलु चपलो बुधैर्ज्ञेयः // ना. शा_७.६० //

हर्षो नाम
मनोरथलाभेष्टजनसमागममनमनःपरितोषदेवगुरुराजभर्तृप्रसादभोजनाच्चादनलाभोपभोगादिभिर्विभावैः
समुत्पद्यते ।
तमभिनयेन्नयनवदनप्रसादप्रियभाषणालिङ्गनकण्टकितपुलकितास्रस्वेदादिभिरनुभावैः
।
अत्रार्ये भवतः:

अप्राप्ये प्राप्ये वा लब्धे ऽर्थे प्रियसमागमे वाऽपि /
हृदयमनोरथलाभे हर्षः सञ्जायते पुंसाम् // ना. शा_७.६१ //
नयनवदनप्रियभाषालिङ्गनैश्च रोमाञ्चैः /
ललितैश्चाङ्गविहारैः स्वेदाद्यैरभिनयस्तस्य // ना. शा_७.६२ //

आवेगो नाम
उत्पातवातवर्षाकुञ्जरोद्भ्रमणप्रियाप्रियश्रवणव्यसनाभिघातादिर्विभावैः
समुत्पद्यते ।
तत्रोत्पातकृतो नाम विद्युदुल्कानिर्घातप्रपतनचन्द्रसूर्योपरागकेतुदर्शनकृतः
।
तमभिनयेत्सर्वाङ्गस्रस्ततावैमनस्यमुखवैवर्ण्यविषादविस्मयादिभिः ।
वातकृतं पुनरवकुण्ठनाक्षिपरिमार्जनवस्त्रसङ्गूहनत्वरितगमनादिभिः ।
वर्षकृतं पुनः सर्वाङ्गसम्पिण्डनप्रधावनच्चन्नाश्रयमार्गणादिभिः ।
अग्निकृतं तु धूमाकुलनेत्रताऽङ्गसङ्कोचनविधूननातिक्रान्तापक्रान्तादिभिः ।
कुञ्जरोद्भ्रमणकृतं नाम
त्वरितापसर्पणचञ्चलगमनभयस्तम्भवेपथुपश्चादवलोकनविस्मयादिभिः ।
प्रियश्रवणकृतं नामाभ्युत्थानालिङ्गनवस्त्राभरणप्रदानाश्रुपुलकितादिभिः ।
अप्रियश्रवणकृतं नाम
भूमिपतनविषमविवर्तनपरिधावनविलापनाक्रन्दनादिभिः ।
व्यसनाभिघातजं तु
सहसापसर्पणशस्त्रचर्मवर्मधारणगजतुरगरथारोहणसम्प्रधारणादिभिः ।

एवमष्टविकल्पो ऽयमावेगः सम्भ्रमात्मकः /
स्थैर्येणोत्तममध्यानां नीचानां चापसर्पणैः // ना. शा_७.६३ //

अत्रार्ये भवतः:
अप्रियनिवेदनाद्वा सहसा ह्यवधारितारिवचनस्य /
शस्त्रक्षेपात् त्रासादावेगो नाम सम्भवति // ना. शा_७.६४ //
अप्रियनिवेदनाद्यो विषादभावाश्रयो ऽनुभावस्य /
सहसारिदर्शनाच्चेत्पहरणपरिघट्टनैः कार्यः // ना. शा_७.६५ //

जडतानाम सर्वकार्याप्रतिपत्तिः ।
इष्टानिष्टश्रवणदर्शनव्याध्यादिभिर्विभावैः समुत्पद्यते ।
तामभिनयेदकथनाविभाषणतूष्णीम्भावाप्रतिभाऽनिमेषनिरीक्षणपरवशत्वादिभिरनुभावैः

।
अत्रार्या भवतिः

इष्टं वाऽनिष्टं वा सुखदुःखे वा न वेत्ति यो मोहात् /
तूष्णीकः परवशगो भवति स जडसंज्ञितः पुरुषः // ना. शा_७.६६ //

गर्वो नाम ऐश्वर्यकुलरूपयौवनविद्याबलधनलाभादिभिर्विभावैः
समुत्पद्यते ।
तस्यासूयावज्ञाघर्षणानुत्तरदानासम्भाषणाङ्गावलोकन
विभ्रमापहसनवाक्पारुष्यगुरुव्यतिक्रमणाधिक्षेपवचनविच्चेदादिभिरनुभावैरभिनयः
प्रयोक्तव्यः
अत्रार्या भवतिः

विद्यावाप्ते रूपादैश्वर्यादथ धनागमाद्वापि /
गर्वः खलु नीचानां दृष्ट्यङ्गविचारणैः कार्यः // ना. शा_७.६७ //

विषादो नाम कार्यानिस्तरणदैवव्यापत्तिसमुत्थः ।
तमभिनयेत्सहायान्वेषणोपायचिन्तनोत्साहविघातवैमनस्यनिःश्वसितादिभिरनुभावैरुत्तममध्यमानाम्
।
अधमानां तु
विपरिधावनालोकनमुखशोषणसृक्वपरिलेहननिद्रानिःश्वसितध्यानादिभिरनुभावैः
।
अत्रार्या श्लोकौः
कार्यानिस्तरणाद्वा चौर्याभिग्रहणराजदोषाद्वा /
दैवादर्थविपत्तेर्भवति विषादः सदा पुंसाम् // ना. शा_७.६८ //
वैचित्र्योपायचिन्ताभ्यां कार्य उत्तममध्ययोः /
निद्रानिःश्वसितध्यानैरधमानां तु योजयेत् // ना. शा_७.६९ //

औत्सुक्यं नाम इष्टजनवियोगानुस्मरणोद्यानदर्शनादिभिर्विभावैः समुत्पद्यते ।
तस्य
दीर्घनिःश्वसिताधोमुखविचिन्तननिद्रातन्द्रीशयनाभिलाषादिभिरनुभवैरभिनयः
प्रयोक्तव्यः ।
अत्रार्या भवतिः

इष्टजनस्य वियोगादौत्सुक्यं जायते ह्यनुस्मृत्या /
चिन्तानिद्रातन्द्रीगात्रगुरुत्वैरभिनयो ऽस्य // ना. शा_७.७० //

निद्रा नाम दौर्बल्यश्रमक्लममदालस्यचिन्ताऽत्याहारस्वभावादिभिर्विभावैः
समुत्पद्यते ।
तामभिनयेद्वदनगौरवशरीरावलोकननेत्रघूरणनगात्रविजृम्भनमान्द्योच्छ्वसितसन्नगात्रताऽक्षिनिमीलनादिभिरनु
भावैः

।
अत्रार्ये भवतः:

आलस्याद्दौर्बल्यात्क्लमाच्च्रमाच्चिन्तनात्स्वभावाच्च /
रात्रौ जागरणादपि निद्रा पुरुषस्य सम्भवति // ना. शा_७.७१ //
तां मुखगौरवगात्रप्रतिलोलननयनमीलनजडत्वैः /
जृम्भणगात्रविमर्दैरनुभावैरभिनयेत्प्राज्ञः // ना. शा_७.७२ //

अपस्मारो नाम
देवयक्षनागब्रह्मराक्षसभूतप्रेतपिशाचग्रहणानुस्मरनोच्चिष्टशून्यागारसेवनाशुचिकालान्तरापरिपतनव्याद्यादिभिर्वि
भावैः
समुत्पद्यते ।
तस्य
स्फुरितनिःश्वसितोत्कम्पितधावनपतनस्वेदस्तम्भवदनफेनजिह्वापरिलेहनादिभिरनुभावैरभिनयः
प्रयोक्तव्यः ।

अत्रार्ये भवतः:
भूतपिशाचग्रहणानुस्मरणोच्चिष्टशून्यगृहगमनात् /
कालान्तरातिपातादशुचेश्चभवत्यपस्मारः // ना. शा_७.७३ //
सहसा भूमौ पतनं प्रवेपनं वदनफेनमोक्षश्च /
निःसंज्ञस्योत्थानं रूपाण्येतान्यपस्मारे // ना. शा_७.७४ //

सुप्तं नाम
निद्राभिभवविषयोपगमनक्षितितलशयनप्रसारणानुकर्षणादिभिर्विभावैः
समुत्पद्यते निद्रासमुत्थम् ।
तदुच्च्वसितंसन्नगात्राक्षिनिमीलनसर्वेन्द्रिय
सम्मोहनोत्स्वप्नायितादिभिरनुभावैरभिनयेत् ।

अत्रार्ये भवतः:
निद्राभिभवेन्द्रियोपरमणमोहाइर्हवेत्सुप्तम् /
अक्षिनिमीलनोच्च्वसनैः स्वप्नायितजल्पितैः कार्यः // ना. शा_७.७५ //
सोच्च्वासैर्निःश्वासैर्मन्दाक्षिनिमीलनेन निश्चेष्टः /
सर्वेन्द्रियसम्मोहात्सुप्तं स्वप्नैश्च युञ्जीत // ना. शा_७.७६ //

विबोधो नाम आहारपरिणामनिद्राच्चेदस्वप्नान्ततीव्रशब्दश्रवणादिभिर्विभावैः
समुत्पद्यते ।
तमभिनयेज्जृम्भणाक्षिपरिमर्दनशयनमोक्षणादिभिरनुभावैः ।

अत्रार्या भवति:
आहारविपरिणामाच्चब्दस्पर्शादिभिश्च सम्भूतः /
प्रतिबोधस्त्वभिनेयो जृम्भणवदनाक्षिपरिमर्दैः // ना. शा_७.७७ //

अमर्षो नाम विद्यैश्वर्यशौर्यबलाधिकैरधिक्षिप्तस्यावमानितस्य वा
समुत्पद्यते ।
तमभिनयेच्चिरःकम्पनप्रस्वेदनाधोमुखचिन्तनध्यानाध्यवसायोपायसहायान्वेषणादिभिरनुभावैः
।

अत्र श्लोकौः
आक्षिप्तानां सभामध्ये विद्याशौर्यबलाधिकैः /
न्?णामुत्साहसंयोगादमर्षो नाम जायते // ना. शा_७.७८ //
उत्साहाध्यवसायाभ्यामधोमुखविचिन्तनैः /
शिरःप्रकम्पस्वेदाद्यैस्तं प्रयुञ्जीत पण्डितः // ना. शा_७.७९ //

अवहित्थं नाम आकारप्रच्चादनात्मकम् ।
तच्च लजाभयापजयगौरवजैह्मयादिभिर्विभाविः समुत्पद्यते ।
तस्यान्यथाकथनावलोकितकथाभङ्गकृतकधैर्यादिभिरनुभावैरभिनयः
प्रयोक्तव्यः ।

अत्र श्लोको भवतिः
धार्ष्ट्यजैह्म्यादिसम्भीतमवहित्थं भयत्मकम् /
तच्चागणनया कार्यं नातीवोत्तरभाषणात् // ना. शा_७.८० //

उग्रता आम चौर्याभिग्रहाणनृपापराधासत्प्रलापादिभिर्विभावैः समुत्पद्यते ।
तां च वधबन्धनताडननिर्भत्सनादिभिरनुभावैरभिनयेत् ।

अत्रार्या भवतिः
चौर्याभिग्रहनवशान्नृपापराधादथोग्रता भव्ति /
वधबन्धताडनादिभिरनुभावैरभिनयस्तस्याः // ना. शा_७.८१ //
भवति चात्र श्लोकःः
नानाशात्रार्थबोधेन मतिः संजायते नृणाम् /
शिष्योपदेशार्थकृतस्तस्यास्त्वभिनयो भवेत् // ना. शा_७.८२ //

व्याधिर्नाम वातपित्तकफसन्निपातप्रभवः ।
तस्य ज्वरादयो विशेषाः ।
ज्वरस्तु द्विविधः सशीतः सदाहश्च ।
तत्र सशीतो नाम
प्रवेपितसर्वाङ्गोप्कम्पननिकुञ्चनाग्न्यभिलाषरोमाञ्चहनुवलननासाविकूननमुखशोषणपरिदेवितादिभिरनुभावैर
भिनेयः
।
सदाहो नाम
विक्षिप्ताङ्गकरचरणभूम्यभिलाषानुलेपनशीताभिलाषपरिदेवनमुखशोषोत्क्रुष्टादिभिरनुभावैः
।
ये चान्ये व्याधयस्ते ऽपि खलु

मुखविकूणनगात्रस्तम्भस्रस्ताक्षिनिःश्वसनस्तनितोत्क्रुष्टवेपनादिभिरनुभावैरभिनेयाः
।

अत्र श्लोको भवति:
समासतस्तु व्याधीनां कर्तव्यो ऽभिनयो बुधैः /
स्रस्ताङ्गगात्रविक्षेपैस्तथा मुखविकूणनैः // ना. शा_७.८३ //

उन्मादो नाम
इष्टजनवियोगविभवनाशाभिघातवातपित्तश्लेष्मप्रकोपादिभिर्विभावैरुत्पद्यते
।
तमनिमित्तहसितरुदितोत्क्रुष्टासम्बद्धप्रलापशयितोपविष्टोत्थितप्रधावितनृत्तगीतपठितभस्मपांस्ववधूलनतृणनिर्माल्यकुचेलचीरघटककपालशरावाभरणधारणोपभोगैरनेकैश्चानवस्थितैश्चेष्टानुकरणा
।
अत्रार्ये भवतः:
इष्टजनविभवनाशादभिघाताद्वातपित्तकफकोपात् /
विविधाच्चित्तविकारादुन्मादो नाम सम्भवति // ना. शा_७.८४ //
अनिमित्तरुदितहसितोपविष्टगीतप्रधावितोत्क्रुष्टैः /
अन्यैश्च विकारैरकृतैरुन्मादं सम्प्रयुञ्जीत // ना. शा_७.८५ //

मरणं नाम व्याधिजमभिघातजञ्च ।
तत्र यदान्त्रयकृच्चूलदोषवैषम्यगण्डपिटकज्वरविषूचिकादिभिरुत्पद्यते
तद्व्याधिप्रभवम् ।
अभिघातजं तु
शस्त्राहिदंशविषपानश्वापदगजतुरगरथपशुयानपातविनाशप्रभवम् ।

एतयोरभिनयविशेषान्वक्ष्यामः:
तत्र व्याधिजं
विषण्णगात्राव्यायताङ्गविचेष्टितनिमीलितनयनहिक्काश्वासोपेतानवेक्षितपरिजनाव्यक्ताक्षरकथनादिभिरनुभावैरभिनयेत्
।

अत्र श्लोको भवति:
व्याधीनामेकभावो हि मरणाभिनयः स्मृतः /
विषण्णगात्रैर्निश्चेष्टैरिन्द्रिअयैश्च विवर्जितः // ना. शा_७.८६ //

अभिघातजे तु नानाप्रकाराभिनयविशेषाः ।
शस्त्रक्षताहिदष्टविषपीतगजादिपतितश्वापदहताः ।
यथा तत्र शस्त्रक्षते तावत्सहसा भूमिपतनवेपनस्फुरणादिभिरभिनयः
प्रयोक्तव्यः ।
अहिदष्टविषपीतयोर्विषयोगो यथा
कार्श्यवेपथुविदाहहिक्काफेनस्कन्धभङ्गजडतामरणानीत्यष्टौ विषवेगाः ।

अत्र श्लोकौ भवतः:
कार्श्यं तु प्रथमे वेगे द्वितीये वेपथुर्भवेत् /
दाहं तृतीये हिक्कां च चतुर्थे सम्प्रयोजयेत् // ना. शा_७.८७ //
फेनञ्च पञ्चमे कुर्यात्षष्ठे स्कन्धस्य भञ्जनम् /
जडतां सप्तमे कुर्यादष्टमे मरणं भवेत् // ना. शा_७.८८ //
अत्रार्या भवति:
श्वापदगजतुरगरथोद्भवं तु पशुयानपतनजं वाऽपि /
शास्त्रक्षतवत्कुर्यादनवेक्षितगात्रसञ्चारम् // ना. शा_७.८९ //
इत्येव मरणं ज्ञेयं नानावस्थान्तरात्मकम् /
प्रयोक्तव्यं बुधैः सम्यग्यथा भवाङ्गचेष्टितैः // ना. शा_७.९० //

त्रासो नाम
विद्युदुल्काशनिपातनिर्घाताम्बुधरमहासत्त्वपशुरवादिभिर्विभावैरुत्पद्यते ।
तमभिनयेत्संक्षिप्ताङ्गोत्कम्पनवेपथुस्तम्भरोमाञ्चगद्गदप्रलापादिभिरनुभावैः
।
अत्र श्लोको भवति:
महाभैरवनादाद्यैस्त्रासः समुपजायते /
स्रस्ताङ्गाक्षिनिमेषैश्च तस्य त्वभिनयो भवेत् // ना. शा_७.९१ //

वितर्को नाम सन्देहविमर्शविप्रतिपत्त्यादिभिर्विभावैरुत्पद्यते ।
तमभिनयेद्विविधविचारितप्रश्नसम्प्रधारणमन्त्रसङ्गूहनादिभिरनुभावैः ।

अत्र श्लोको भवति:
विचारणादिसम्भूतः सन्देहातिशयात्मकः /
वितर्कः सो ऽभिनेयस्तु शिरोभ्रूक्षेपकम्पनैः // ना. शा_७.९२ //

एवमेते त्रयस्त्रिंशद्व्यभिचारिणो भावा
देशकालावस्थानुरूप्येणात्मगतपरगतमध्यस्था उत्तममध्यमाधमैः
स्त्रीपुंसैः स्वप्रयोगवशादुपपाद्या इति ।
त्रयस्त्रिंशदिमे भावा विज्ञेया व्यभिचारिणः /
सात्त्विकांस्तु पुनर्भावान्प्रवक्ष्याम्यनुपूर्वशः // ना. शा_७.९३ //

अत्राह:
किमन्ये भावाः सत्त्वेन विनाऽभिनीयन्ते यस्मादुच्यते
एते सात्त्विका इति ।
अत्रोच्यते:
इह हि सत्त्वं नाम मनःप्रभवम् ।
तच्च समाहितमनस्त्वादुच्यते ।
मनसः समाधौ सत्त्वनिष्पत्तिर्भवति ।
तस्य च यो ऽसौ स्वभावो रोमाञ्चाश्रुवैवर्ण्यादिलक्षणो यथाभावोपगतः स न

शक्यो ऽन्यमनसा कर्तुमिति ।
लोकस्वभावानुकरणत्वाच्च नाट्यस्य सत्त्वमीप्सितम् ।
को दृष्टान्तः:
इह हि नाट्याधर्मिप्रवृत्ताः सुखदुःखकृता भावास्तथा सत्त्वविशुद्धाः कार्या यथा सरूपा भवन्ति ।
तत्र दुःखं नाम रोदनात्मकं तत्कथमदुःखितेन सुखं च प्रहर्षात्मकमसुखितेन वाभिनेयम् ।
एतदेवास्य सत्त्वं यत् दुःखितेन सुखितेन वाऽश्रुरोमाञ्चौ दर्शयितव्यौ इति कृत्वा सात्त्विका भावा इत्यभिव्याख्याताः ।

त इमे:
स्तम्भः स्वेदो ऽथ रोमाञ्चः स्वरभेदो ऽथ वेपथुः /
वैवर्ण्यमश्रुप्रलय इत्यष्टौ सात्त्विका मताः // ना. शा_७.९४ //

अत्रार्याः
तत्र:
क्रोधभयहर्षलजादुःखश्रमरोगतापघातेभ्यः /
व्यायामक्लमधर्मैः स्वेदः सम्पीडनाच्चैव // ना. शा_७.९५ //
हर्षभयशोकविस्मयविषादरोषादिसम्भवः स्तम्भः /
शीतभयहर्षरोषस्पर्शजरारोगजः कम्पः // ना. शा_७.९६ //
आनन्दामर्षाभ्यां धूमाञ्जनजृम्भणाद्भयाच्चोकात् /
अनिमेषप्रेक्षणतः शीताद्रोगाद्भवेदश्रु // ना. शा_७.९७ //
शीतक्रोधभयश्रमरोगक्लमतापजं च वैवर्ण्यम् /
स्पर्शभयशीतहर्षात् क्रोधाद्रोगाच्च रोमाञ्चः // ना. शा_७.९८ //
स्वरभेदो भयहर्षक्रोधजरारौक्ष्यरोगमदजनितः /
श्रममूर्चमदनिद्राभिघातमोहादिभिः प्रलयः // ना. शा_७.९९ //
एवमेते बुधैर्ज्ञेया भावा ह्यष्टौ तु सात्त्विकाः /
कर्म चैषां प्रवक्ष्यामि रसभावानुभावकम् // ना. शा_७.१०० //
निःसंज्ञो निष्प्रकम्पश्च स्थितः शून्यजडाकृतिः /
स्कन्नगात्रतया चैव स्तम्भं त्वभिनयेद्बुधः // ना. शा_७.१०१ //
व्यजनग्रहणाच्चापि स्वेदापनयनेन च /
स्वेदस्याभिनयो योज्यस्तथा वाताभिलाषतः // ना. शा_७.१०२ //
मुहुः कण्टिकितत्वेन तथोल्लुकसनेन च /
पुलकेन च रोमाञ्चं गात्रस्पर्शेन दर्शयेत् // ना. शा_७.१०३ //
स्वरभेदो ऽभिनेतव्यो भिन्नगद्गदनिस्वनैः /
वेपनात्स्फुरणात्कम्पाद्वेपथुं सम्प्रदर्शयेत् // ना. शा_७.१०४ //
मुखवर्णपरावृत्त्या नाडीपीडनयोगतः /
वैवर्ण्यमभिनेतव्यं प्रयत्नात्तद्धि दुष्करम् // ना. शा_७.१०५ //
बाष्पाम्बुप्लुतनेत्रत्वान्नेत्रसंमार्जनेन च /
मुहुरश्रुकणापातैरस्रं त्वभिनयेद्बुधः // ना. शा_७.१०६ //

निश्चेष्टो निष्प्रकम्पत्वादव्यक्तश्वसितादपि /
महीनिपतनाच्चापि प्रलयाभिनयो भवेत् // ना. शा_७.१०७ //
एकोनपञ्चाशदिमे यथावद्भावास्त्र्यवस्था गदिता मयेह /
भूयश्च ये यत्र रसे नियोज्यास्तान् श्रोतुमर्हन्ति च विप्रमुख्याः // ना. शा_७.१०८ //

[अत्र श्लोकाः:
शङ्काव्याधिस्तथाग्लानिश्चिन्तासूया भयं तथा /
विस्मयश्च वितर्कश्च स्तम्भश्चपलता तथा // ना. शा_७.१०८*१ //
रोमाञ्चहर्षौ निद्रा च तथोन्मादमदावपि /
स्वेदश्चैवावहित्थं च प्रलयो वेपथुस्तथा // ना. शा_७.१०८*२ //
विषादश्रमनिर्वेदा गर्वावेगौ धृतिः स्मृतिः /
मतिर्मोहो विबोधश्च सुप्तमौत्सुक्यवर्जिते // ना. शा_७.१०८*३ //
क्रोधामर्षौ च हासश्च शोको ऽपस्मार एव च /
दैन्यं च मरणं चैव रतिरुत्साहसंयुता // ना. शा_७.१०८*४ //
त्रासवैवर्ण्यरुदितैः स्वरभेदः शमो ऽपि च /
जडता च तथा षट् च चत्वारिंशत्प्रकीर्तिताः] // ना. शा_७.१०८*५ //
आलस्यौग्र्यजुगुप्साख्यैरेवं भावैस्तु वर्जिताः /
उद्भावयन्ति शृङ्गारं सर्वे भावाः स्वसंज्ञया // ना. शा_७.१०९ //
[यथाऽवसरमेते हि स्थायिसञ्चारिसत्त्वजाः /
उद्दीपयन्ति शृङ्गारं रसमासाद्य संज्ञितम्] // ना. शा_७.१०९* //
ग्लानिः शङ्का ह्यसूया च श्रमश्चपलता तथा /
सुप्तं निद्रावहित्थं च हास्ये भावाः प्रकीर्तिताः // ना. शा_७.११० //
निर्वेदश्चैव चिन्ता च दैन्यं ग्लान्यास्रमेव च
जडता मरणं चैव व्याधिश्च करुणे स्मृताः // ना. शा_७.१११ //
गर्वो ऽसूया मदोत्साहावावेगो ऽमर्ष एव च /
क्रोधश्चपलतौग्र्यं च विज्ञेया रौद्रसम्भवाः // ना. शा_७.११२ //
असम्मोहस्तथोत्साह आवेगो हर्ष एव च /
मतिश्चैव तथोग्रत्वममर्षो मद एव च // ना. शा_७.११३ //
रोमाञ्चः स्वरभेदश्च क्रोधो ऽसूया धृतिस्तथा /
गर्वश्चैव वितर्कश्च वीरे भावा भवन्ति हि // ना. शा_७.११४ //
स्वेदश्च वेपथुश्चैव रोमाञ्चो गद्गदस्तथा /
त्रासश्च मरणश्चैअव वैवर्ण्यं च भयानके // ना. शा_७.११५ //
अपस्मारस्तथोन्मादो विषादो मद एव च /
मृत्युर्व्याधिर्भयं चैव भावा बीभत्ससंश्रयाः // ना. शा_७.११६ //
स्तम्भः स्वेदश्च मोहश्च रोमाञ्चो विस्मयस्तथा /
आवेगो जडता हर्षो मूर्चा चैवाद्भुताश्रयाः // ना. शा_७.११७ //
ये त्वेते सात्विका भावा नानाभिनयसंश्रिताः /
रसेष्वेतेषु सर्वे ते ज्ञेया नाट्यप्रयोक्तृभिः // ना. शा_७.११८ //
न ह्येकरसजं काव्यं किञ्चिदस्ति प्रयोगतः /

भावो वापि रसो वापि प्रवृत्तिर्वृत्तिरेव च // ना. शा_७.११९ //
[ बहूनां समवेतानां रूपं यस्य भवेद्बहु /
स मन्तव्यो रसः स्थायी शेषाः सञ्चारिणो मताः // ना. शा_७.११९*१ //
दीपयन्तः प्रवर्तन्ते ये पुनः स्थायिनं रसम् /
ते तु सञ्चारिणो ज्ञेयास्ते हि स्थायित्वमागताः // ना. शा_७.११९*२ //
विभावानुभावयुतो ह्यङ्गवस्तुसमाश्रयः /
संचारिभिस्तु संयुक्तः स्थाय्येव तु रसो भवेत् // ना. शा_७.११९*३ //
स्थायी सत्त्वातिरेकेण प्रयोक्तव्यः प्रयोक्तृभिः /
सञ्चार्याकारमात्रेण स्थायी यस्मादवस्थितः // ना. शा_७.११९*४ //
ये त्वेते सात्त्विका भावा नानाभिनययोजिताः /
रसेष्वेतेषु सर्वेषु ते ज्ञेया नाट्यकोविदैः // ना. शा_७.११९*५ //
न ह्येकरसजं काव्यं नैकभावैकवृत्तिकम् /
विमर्दे रागमायाति प्रयुक्तं हि प्रयत्नतः // ना. शा_७.११९*६ //
भावा वाऽपि रसा वाऽपि प्रवृत्तिर्वृत्तिरेव वा /
बीभत्साद्भुतशान्तानां त्रैविध्यं नात्र कथ्यते // ना. शा_७.११९*७ //
षण्णां रसानां त्रैविध्यं नानाभावारसान्वितम् /
सत्त्वप्रयोजितो ह्यर्थः प्रयोगो ऽत्र विराजते /
विदित्वा हि विराजन्ते लोके चित्रं हि दुर्लभम्] // ना. शा_७.११९*८ //
नानाभावार्थसंपन्नाः स्थायिसत्त्वाभिचारिणः /
पुष्पावकीर्णाः कर्तव्याः काव्येषु हि रसा बुधैः // ना. शा_७.१२० //
एवं रसाश्च भावाश्च व्यवस्था नाटके स्मृताः /
य एवमेताञ्जानाति स गच्चेत्सिद्धिमुत्तमाम् // ना. शा_७.१२१ //

इति श्रीभारतीये नाट्यशास्त्रे भावव्यञ्जको नाम सप्तमो ऽध्यायः

---

अष्टमो ऽध्यायः
ऋषयः ऊचुः :
भावानां च रसानां च समुत्थानं यथाक्रमम् /
त्वत्प्रसादाच्छ्रुतं सर्वमिच्चामो वेदितुं पुनः // ना. शा_८.१ //
नाट्ये कतिविधः कार्यः तज्ज्ञैरभिनयक्रमः /
कतं वाभिनयो ह्येष कतिभेदस्तु कीर्तितः // ना. शा_८.२ //
सर्वमेतद्यथातत्त्वं कथयस्व महामुने /
यो यथाभिनयो यस्मिन् योक्तव्यः सिद्धिमिच्चता // ना. शा_८.३ //
तेषां तु वचनं श्रुत्वा मुनीनां भरतो मुनिः /
प्रत्युवाच पुनर्वाक्यं चतुरो ऽभिनयान् प्रति // ना. शा_८.४ //
अहं वः कथयिष्यामि निखिलेन तपोधनाः /
यस्मादभिनयो ह्येष विधिवत् समुदाहृतम् // ना. शा_८.५ //
यदुक्तं चत्वारो ऽभिनय इति तान् वर्णयिष्यामः ।

अत्राह:
अभिनय इति कस्मात् ।
अत्रोच्यते:
अभीत्युपसर्गः णीञ् इति प्रापणार्थको धातुः ।
अस्याभिनीत्येवं व्यवस्थितस्य एरजित्यचप्रत्यत्ययान्तस्याभिनय इत्येवं रूपं सिद्धम् ।
एतच्च धात्वर्थानुवचनेनावधार्यं भवति ।
अत्र श्लोकौ:
अभिपूर्वस्तु णीञ् धातुराभिमुख्यार्थनिर्णये /
यस्मात्पदार्थान्नयति तस्मादभिनयः स्मृतः // ना. शा_८.६ //
विभावयति यस्माच्च नानार्थान् हि प्रयोगतः /
शाखाङ्गोपाङ्गसंयुक्तस्तस्मादभिनयः स्मृतः // ना. शा_८.७ //
चतुर्विधश्चैव भवेन्नाट्यस्याभिनयो द्विजाः /
अनेकभेदवाहूयं नाट्यं ह्यस्मिन् प्रतिष्ठितम् // ना. शा_८.८ //
आङ्गिको वाचिकश्चैव ह्याहार्यः सात्त्विकस्तथा /
ज्ञेयस्त्वभिनयो विप्राः चतुर्धा परिकल्पितः // ना. शा_८.९ //
सात्त्विकः पूर्वमुक्तस्तु भावैश्च सहितो मया /
अङ्गाभिनयमेवादौ गदतो मे निबोधत // ना. शा_८.१० //
त्रिविधस्त्वाङ्गिको द्य्नेयः शारीरो मुखजस्तथा /
तथा चेष्टाकृतश्चैव शाखाङ्गोपाङ्गसंयुतः // ना. शा_८.११ //
शिरोहस्तकटीदक्षः पार्श्वपादसमन्वितः /
अङ्गप्रत्यङ्गसंयुक्तः षडङ्गो नाट्यसंग्रहः // ना. शा_८.१२ //
तस्य शिरोहस्तोरःपार्श्वकटीपादतः षडङ्गानि /
नेत्रभ्रूनासाधरकपोलचिबुकान्युपाङ्गानि // ना. शा_८.१३ //
अस्य शाखा च नृत्तं च तथैवाङ्कुर एव च /
वस्तून्यभिनयस्येह विज्ञेयानि प्रयोक्तृभिः // ना. शा_८.१४ //
आङ्गिकस्तु भवेच्चाखा ह्यङ्कुरः सूचना भवेत् /
अङ्गहारविनिष्पन्नं नृत्तं तु करणाश्रयम् // ना. शा_८.१५ //
मुखजे ऽभिनये विप्रा नानाभावरसाश्रये /
शिरसः प्रथमं कर्म गदतो मे निबोधत // ना. शा_८.१६ //
आकम्पितं कम्पितं च धूतं विधुतमेव च /
परिवाहितमाधूतमवधूतं तथाञ्चितम् // ना. शा_८.१७ //
निहञ्चितं परावृत्तमुत्क्षिप्तं चाप्यधोगतम् /
लोलितं चैव विज्ञेयं त्रयोदशविधं शिरः // ना. शा_८.१८ //
शनैराकम्पनादूर्ध्वमधश्चाकम्पितं भवेत् /
द्रुतं तदेव बहुशः कम्पितं कम्पितं शिरः // ना. शा_८.१९ //
ऋजुस्थितस्य चोर्ध्वाधः क्षेपादाकम्पितं भवेत् /
बहुशश्चलितं यच्च तत्कम्पितमिहोच्यते // ना. शा_८.२० //
संज्ञोपदेशपृच्चासु स्वभावाभाषणे तथा /

निर्देशावाहने चैव भवेदाकम्पितं शिरः // ना. शा_८.२१ //
रोषे वितर्के विज्ञाने प्रतिज्ञाने ऽथ तर्जने /
प्रश्नातिशयवाक्येषु शिरः कम्पितमिष्यते // ना. शा_८.२२ //
शिरसो रेचनं यत्तु शनैस्तद् धुतमिष्यते /
द्रुतमारेचनादेतद्विधुतं तु भवेच्चिरः // ना. शा_८.२३ //
अनीप्सिते विषादे च विस्मये प्रत्ययं तथा /
पार्श्वावलोकने शून्ये प्रतिषेधे धुतं शिरः // ना. शा_८.२४ //
शीतग्रस्ते भयार्ते च त्रासिते ज्वरिते तथा /
पीतमात्रे तथा मद्ये विधुतं तु भवेच्चिरः // ना. शा_८.२५ //
पर्यायशः पार्श्वगतं शिरः स्यात् परिवाहितम् /
आधूतमुच्यते तिर्यक् सकृदुद्वाहितं तु यत् // ना. शा_८.२६ //
साधने विस्मये हर्षे स्मिते चामर्षिते तथा /
विचारे विहृते चैव लीलायां परिवाहितम् // ना. शा_८.२७ //
गर्वेच्चादर्शने चैव पार्श्वस्थोर्ध्वनिरीक्षणे
आधुतं तु शिरो ज्ञेयमात्मसम्भावनादिषु // ना. शा_८.२८ //
यदधः सकृदाक्षिप्तमवधूतं तु तच्चिरः /
सन्देशावाहनालापसंज्ञादिषु नदिष्यते // ना. शा_८.२९ //
किञ्चित् पार्श्वनतग्रीवं शिरो विज्ञेयमञ्चितम् /
व्याधिते मूर्चिते मत्ते चिन्तायां हनुधारणम् // ना. शा_८.३० //
उत्क्षिपांसावसक्तं यत्कुञ्चितभ्रूलतं शिरः /
निहञ्चितं तु विज्ञेयं स्त्रीणामेतत् प्रयोजयेत् // ना. शा_८.३१ //
गर्वे माने विलासे च बिव्वोके किलकिञ्चिते /
मोट्टायिते कुट्टमिते स्तम्भमाने निहञ्चितम् // ना. शा_८.३२ //
परावृत्तानुकरणात् परावृत्तमिहोच्यते /
तत् स्यान्मुखापहरणे पृष्ठतः प्रेक्षणादिषु // ना. शा_८.३३ //
उत्क्षिप्तं चापि विज्ञेयमुन्मुखावस्थितं शिरः /
प्रांशुदिव्यास्त्रयोगेषु स्यादुत्क्षिप्तं प्रयोगतः // ना. शा_८.३४ //
अधोमुखं स्थितं चापि बुधाः प्राहुरधोगतम् /
लज्जायां च प्रणामे च दुःखे चाधोगतं शिरः // ना. शा_८.३५ //
सर्वतो भ्रमणाच्चैव शिरः स्यात् परिलोलितम् /
मूर्च्याव्याधिमदावेशग्रहनिद्रादिषु स्मृतम् // ना. शा_८.३६ //
ऋजुस्वभावसंस्थानं प्राकृतं तु स्वभावजम् /
मंगल्याध्ययनध्यानस्वभावजयकर्मसु // ना. शा_८.३७ //
एभ्यो ऽन्ये बहवो भेदा लोकाभिनयसंश्रिताः /
ते च लोकस्वभावेन प्रयोक्तव्या प्रयोक्तृभिः // ना. शा_८.३८ //
त्रयोदशविधं ह्येतच्चिरःकर्म मयोदितम् /
अतः परं प्रवक्ष्यामि दृष्टीनामिह लक्षणम् // ना. शा_८.३९ //
कान्ता भयानका हास्या करुणा चाद्भुता तथा /
रौद्रो वीरा च बीभत्सा विज्ञेया रसदृष्टयः // ना. शा_८.४० //

स्निग्धा हृष्टा च दीना च क्रुद्धा दृप्ता भयान्विता /
जुगुप्सिता विस्मिता च स्थायिभावेषु दृष्टयः // ना. शा_८.४१ //
शून्या च मलिना चैव श्रान्ता लज्जान्विता तथा /
ग्लाना च शङ्किता चैव विषण्णा मुकुला तथा // ना. शा_८.४२ //
कुञ्चिता चाभितप्ता च जिह्मा सललिता तथा /
वितर्कितार्धमुकुला विभ्रान्ता विलुप्ता तथा // ना. शा_८.४३ //
आकेकरा विकोशा च त्रस्ता च मदिरा तथा /
षट्त्रिंशद् दृष्टयो ह्येता तासु नाट्यं प्रतिष्ठितम् // ना. शा_८.४४ //
अस्य दृष्टिविधानस्य नानाभावरसाश्रयम् /
लक्षणं सम्प्रवक्ष्यमि यथाकर्म प्रयोगतः // ना. शा_८.४५ //
हर्षप्रसादजनिता कान्तात्यर्थं समन्यथा /
सभ्रूक्षेपकटाक्षा च शृङ्गारे दृष्टिरिक्ष्यते // ना. शा_८.४६ //
प्रोद्वृत्तनिष्टब्धपुटा स्फुरदुद्वृत्ततारका /
दृष्टिर्भयानाकात्यर्थं भीता ज्ञेया भयानके // ना. शा_८.४७ //
क्रमादाकुञ्चितपुटा विभ्रान्ताकुलतारका /
हास्या दृष्टिस्तु कर्तव्या कुहकाभिनयं प्रति // ना. शा_८.४८ //
पतितोर्ध्वपुटा सास्रा मन्युमन्थरतारका /
नासाग्रानुगता दृष्टिः करुणा करुणे रसे // ना. शा_८.४९ //
या त्वाकुञ्चितपक्ष्माग्रा साश्चर्योद्वत्ततारका /
सौम्या विकसितान्ता च साद्भुता दृष्टिरद्भुते // ना. शा_८.५०
क्रॢ //
ऊरा रूक्षारुणोद्वृतनिष्टब्धपुटतारका /
भ्रुकुटीकुटिला दृष्टिः रौद्रे रौद्री रसा स्मृता // ना. शा_८.५१ //
दीप्ता विकसिता क्षुब्धा गम्भीरा समतारका /
उत्फुल्लमध्या दृष्टिस्तु वीरा वीररसाश्रया // ना. शा_८.५२ //
निकुञ्चितपुटापाङ्गा घूर्णोपप्लुततारका /
संश्लिष्टस्थिरपक्ष्मा च बीभत्सा दृष्टिरिष्यते // ना. शा_८.५३ //
नासाग्रसक्ता निमिषा तथाधोभागचारिणी /
आकेकरपुटा शान्ते शान्ता दृष्टिर्भवेदसौ // ना. शा_८.५४ //
रसजा दृष्टयो ह्येता विज्ञेया लक्षणान्विता /
अतः परं प्रवक्ष्यामि स्थायिभावसमाश्रयाः // ना. शा_८.५५ //
व्याकोशमध्या मधुरा स्थिततारभिलाषिणी /
सानन्दाश्रुप्लुता दृष्टिः स्निग्धेयं रतिभावजा // ना. शा_८.५६ //
चला हसितगर्भा च विशत्तारानिमेषिणी /
किञ्चिदाकुञ्चिता दृष्टिः हृष्टा हासे प्रकीर्तिता // ना. शा_८.५७ //
अवस्रस्तोत्तरपुटा किञ्चित्सरंब्धतारका /
मन्दसञ्चारिणी दीना सा शोके दृष्टिरिष्यते // ना. शा_८.५८ //
रूक्षा स्थिरोद्वतपुटा निष्टब्धोद्वृत्ततारका /
कुटिला भ्रुकुटिर्दृष्टिः क्रुद्धा क्रोधे विधीयते // ना. शा_८.५९ //

संस्थिते तार्के यस्याः स्थिता विकसिता तथा /
सत्त्वमुद्गिरती दृप्ता दृष्टिरुत्साहसंभवा // ना. शा_८.६० //
विस्फारितोभयपुटा भयकम्पिततारका /
निष्क्रान्तमध्या दृष्टिस्तु भयभावे भयान्विता // ना. शा_८.६१ //
संकोचितपुटाध्यामा दृष्टिर्मीलिततारका /
पक्ष्मोद्देशात् समुद्विग्ना जुगुप्सायां जुगुप्सिता // ना. शा_८.६२ //
भृशमुद्वृत्ततारा च नष्टोभयपुटान्विता /
समा विकसिता दृष्टिर्विस्मिता विस्मये स्मृता // ना. शा_८.६३ //
स्थायिभावाश्रया ह्येता विज्ञेयाः दृष्टयो बुधैः /
संचारिणीनां दृष्टीनां सम्प्रवक्ष्यामि लक्षणम् // ना. शा_८.६४ //
समतारा समपुटा निष्कम्पा शून्यदर्शना /
बाह्यार्थाग्राहिणी ध्यामा शून्या दृष्टिः प्रकीर्तिता // ना. शा_८.६५ //
प्रस्पन्दमानपक्ष्माग्रा नात्यर्थमुकुलैः पुटैः /
मलिनान्ता च मलिना दृष्टिर्विस्मिततारका // ना. शा_८.६६ //
श्रमप्रम्लापितपुटा क्षामा कुञ्चितलोचना /
सन्ना पतिततारा च श्रान्ता दृष्टिः प्रकीर्तिता // ना. शा_८.६७ //
किञ्चिदञ्चितपक्ष्माग्रा पतितोर्ध्वपुटा ह्रिया /
त्रपाधोगततारा च दृष्टिर्लज्जान्विता तु सा // ना. शा_८.६८ //
म्लानभ्रुपुटपक्ष्मा या शिथिला मन्दचारिणी /
क्रमप्रवृष्टतारा च ग्लाना दृष्टिस्तु सा स्मृता // ना. शा_८.६९ //
किञ्चिच्चला स्थिरा किञ्चिदुद्वृता तिर्यगायता /
गूढा चकिततारा च शङ्किता दृष्टिरिष्यते // ना. शा_८.७० //
विषादविस्तीर्णपुटा पर्यस्तान्ता निमेषिणी /
किञ्चिन्निष्टब्धतारा च कार्या दृष्टीर्विषादिनी // ना. शा_८.७१ //
स्फुरदाश्लिष्टपक्ष्माग्रा मुकुलोर्ध्वपुटाञ्चिता /
सुखोन्मीलिततारा च मुकुला दृष्टिरिष्यते // ना. शा_८.७२ //
आनिकुञ्चितपक्ष्माग्रा पुटैराकुञ्चितैस्तथा /
संनिकुञ्चिततारा च कुञ्चिता दृष्टिरिष्यते // ना. शा_८.७३ //
मन्दायमानतारा या पुटैः प्रचलितैस्तथा /
सन्तापोपप्लुता दृष्टिरभितप्ता तु सव्यथा // ना. शा_८.७४ //
लम्बिताकुञ्चितपुटा शनैस्तिर्यङ् निरीक्षिणी /
निगूढा गूढतारा च जिह्मा दृष्टिरुदाहृता // ना. शा_८.७५ //
मधुराकुञ्चितान्ता च सभ्रूक्षेपा च सस्मिता /
सममन्यविकारा च दृष्टिः सा ललिता स्मृता // ना. शा_८.७६ //
वितर्कोद्वर्तितपुटा तथैवोत्फुल्लतारका /
अधोगतविचारा च दृष्टिरेषा वितर्किता // ना. शा_८.७७ //
अर्धव्याकोशपक्ष्मा च ह्लादार्धमुकुलैः पुटैः /
स्मितार्शमुकुला दृष्टिः किञ्चिल्लुलिततारका // ना. शा_८.७८ //
अनवस्थिततारा च विभ्रान्ताकुलदर्शना /

विस्तीर्णोत्फुल्लमध्या च विभ्रान्ता दृष्टिरुच्यते // ना. शा_८.७९ //
पुटौ प्रस्फुरितौ यस्य निष्टब्धौ पतितौ पुनः /
विलुप्तोद्वृत्ततारा च दृष्टिरेषा तु विप्लुता // ना. शा_८.८० //
आकुञ्चितपुटापाङ्गा सङ्गतार्धनिमेषिणी /
मुहुर्व्यावृत्ततारा च दृष्टिराकेकरा स्मृता // ना. शा_८.८१ //
विकोशितोभयपुटा प्रोत्फुल्ला चानिमेषिणी /
अनवस्थितसञ्चारा विकोशा दृष्टिरुच्यते // ना. शा_८.८२ //
त्रासोद्वृत्तपुटा या तु तथोत्कम्पिततारका /
सन्त्रासोत्फुल्लमध्या च त्रस्ता दृष्टिरुदाहृता // ना. शा_८.८३ //
आघुर्णमानमध्या या क्षामान्ताञ्चितलोचना /
दृष्टिर्विकसितापाङ्गा मदिरा तरुणे मदे // ना. शा_८.८४ //
किञ्चिदाकु~चितपुटा ह्यनवस्थिततारका /
तथा चलितपक्ष्मा च दृष्टिर्मध्यमदे भवेत् // ना. शा_८.८५ //
सनिमेषानिमेषा च किञ्चिद् दर्शिततारका /
अधोभागचरी दृष्टिरधमे तु मदे स्मृता // ना. शा_८.८६ //
इत्येवं लक्षिता ह्येता षटत्रिंशद् दृष्टयो मया /
रसजा सहजाश्चासां विनियोगं निबोधत // ना. शा_८.८७ //
रसजास्तु रसेष्वेव स्थायिषु स्थायिदृष्टयः /
शृणुत व्यभिचारिण्यः सञ्चारिषु यथास्थिताः // ना. शा_८.८८ //
शून्या दृष्टिस्तु चिन्तायां स्तम्भे चापि प्रकीर्तिता /
निर्वेदे चापि मलिना वैवर्ण्ये च विधीयते // ना. शा_८.८९ //
श्रान्ता श्रमार्ते स्वेदे च लजायां ललिता तथा /
अपस्मारे तथा व्याधौ ग्लान्यां ग्लाना विधीयते // ना. शा_८.९० //
शङ्कायां शङ्किता ज्ञेया विषादार्थे विषादिनी /
निद्रास्वप्नसुखार्थेषु मुकुला दृष्टिरिष्यते // ना. शा_८.९१ //
कुञ्चितासूयितानिष्टदुष्प्रेक्षाक्षिव्यथासु च /
अभितप्ता च निर्वेदे ह्यभिघाताभितापयोः // ना. शा_८.९२ //
जिह्मा दृष्टिरसूयायां जडतालस्ययोस्तथा /
धृतौ हर्षे सललिता स्मृतौ तर्के च तर्किता // ना. शा_८.९३ //
आल्हादिष्वर्धमुकुला गन्धस्पर्शसुखादिषु /
विभ्रान्ता दृष्टिरावेगे सम्भ्रमे विभ्रमे तथा // ना. शा_८.९४ //
विलुप्ता चपलोन्माददुःखार्तिमरणादिषु /
आकेकरा दुरालोके विच्चेदप्रेअक्षितेषु च // ना. शा_८.९५ //
विबोधगर्वामर्शौग्र्यमतिषु स्याद्विकोशिता /
त्रस्ता त्रासे भवेद् दृष्टिर्मदिरा च मदेष्विति // ना. शा_८.९६ //
षटत्रिंशद् दृष्टयो ह्येता यथावत् समुदाहृताः /
रसजानां तु दृष्टीनां भावजानां तथैअव च // ना. शा_८.९७ //
तारापुटभ्रुवां कर्म गदतो मे निबोधत /
भ्रमणं वलनं पातश्चलनं सम्प्रवेशनम् // ना. शा_८.९८ //

विवर्तनं समुद्वृत्तं निष्क्रामः प्राकृतं तथा /
पुटान्तर्मण्डलावृत्तिस्तारयोर्भ्रमणं स्मृतम् // ना. शा_८.९९ //
वलनं गमनं त्र्यस्रं पातनं स्रस्तता तथा /
चलनं कम्पनं ज्ञेयं प्रवेशो ऽन्तःप्रवेशनम् // ना. शा_८.१०० //
विवर्तनं कटाक्षस्तु समुद्वृत्तं समुन्नतिः /
निष्क्रामो निर्गमः प्रोक्तः प्राकृतं तु स्वभावजम् // ना. शा_८.१०१ //
अथैषां रसभावेषु विनियोगं निबोधत /
भ्रमणं चलनोद्वृत्ते निष्क्रामो वीररौद्रयोः // ना. शा_८.१०२ //
निष्क्रामणं संवलनं कर्तव्यं तु भयानके /
हास्यबीभत्सयोश्चापि प्रवेशनमिहेष्यते // ना. शा_८.१०३ //
पातनं करुणे कार्यं निष्क्रामणमथाद्भुते /
प्राकृतं शेषभावेषु शृङ्गारे च विवर्तितम् // ना. शा_८.१०४ //
स्वभावसिद्धमेवैतत् कर्म लोकक्रियाश्रयम् /
एवं रसेषु भावेषु ताराकर्माणि योजयेत् // ना. शा_८.१०५ //
अथाऽत्रैव प्रवक्ष्यामि प्रकारन् दर्शनस्य तु /
समं साचय्नुवृत्ते च ह्यालोकितविलोकिते // ना. शा_८.१०६ //
प्रलोकितोल्लोकिते चाप्यवलोकितमेव च /
समतारं च सौम्यं च यद्दृष्टं तत् समं स्मृतम् // ना. शा_८.१०७ //
पक्ष्मान्तरगततारं च त्र्यस्रं साचीकृतं तु तत् /
रूपनिर्वर्णना युक्तमनुवृत्तमिति स्मृतम् // ना. शा_८.१०८ //
सहसा दर्शनं यत् स्यात्तदालोकितमुच्यते /
विलोकितं पृष्टतस्तु पार्श्वाभ्यां तु प्रलोकितम् // ना. शा_८.१०९ //
ऊर्ध्वमुल्लोकितं ज्ञेयमवलोकितमप्यधः /
इत्येषु दर्शनविधिः सर्वभावरसाश्रयः // ना. शा_८.११० //
ताराकृतो ऽस्यानुगतं पुटकर्म निबोधत /
उन्मेषश्च निमेषश्च प्रसृतं कुञ्चितं समम् // ना. शा_८.१११ //
विवर्तितं स स्फुरितं पिहितं सविताडितम् /
विश्लेषः पुटयोर्यस्तु स तून्मेषः प्रकीर्तितः // ना. शा_८.११२ //
समागमो निमेषः स्यादायामः प्रसृतं भवेत् /
आकु~चितं कुञ्चितं स्यात् समं स्वाभाविकं स्मृतम् // ना. शा_८.११३ //
विवर्तितं समुद्वृत्तं स्फुरितं स्पन्दितं तथा /
स्थगितं पिहितं प्रोक्तमाहतं तु विताडितम् // ना. शा_८.११४ //
अथैषं रसभावेषु विनियोगं निबोधत /
क्रोधे विवर्तितं कार्यो निमेषोन्मेषणैः सह // ना. शा_८.११५ //
विस्मयार्थेषु हर्षे च वीरे च प्रसृतं स्मृतम् /
अनिष्टदर्शने गन्धे रसे स्पर्शे च कुञ्चितम् // ना. शा_८.११६ //
शृङ्गारे च समं कार्यमीर्ष्यासु स्फुरितं तथा /
सुप्तमूर्च्छितवातोष्णधूमवर्षाञ्जनार्तिषु // ना. शा_८.११७ //
नेत्ररोगे च पिहितमभिघाते विताडितम् /

इत्येवं रसभावेषु तारकापुटयोर्विधिः // ना. शा_८.११८ //
कार्यानुगतमस्यैव भ्रुवोः कर्म निबोधत /
उत्क्षेपः पातनश्चैव भ्रुकुटी चतुरं भ्रुवोः // ना. शा_८.११९ //
कुञ्चितं रेचितं चैव सहजं चेति सप्तधा /
भ्रुवोरुन्नतिरुत्क्षेपः सममेकैकशो ऽपि वा // ना. शा_८.१२० //
अनेनैव क्रमेणैव पातनं स्यादधोमुखम् /
भ्रुवोर्मूलसमुत्क्षेपात् भ्रुकुटी परिकीर्तिता // ना. शा_८.१२१ //
चतुरं कि~चिदुच्च्वासान्मधुरायतया भ्रुवोः /
एकस्या उभयोर्वापि मृदुभङ्गस्तु कुञ्चितम् // ना. शा_८.१२२ //
एकस्या एव ललितादुत्क्षेपाद्रेचितं भ्रुवः /
सहजातं तु सहजं कर्म स्वाभाविकं स्मृतम् // ना. शा_८.१२३ //
अथैषां सम्प्रवक्ष्यामि रसभावप्रयोजनम् /
कोपे वितर्के हेलायां लीलादौ सहजे तथा // ना. शा_८.१२४ //
श्रवणे दर्शने चैव भ्रुवमेकां समुत्क्षिपेत् /
उत्क्षेपो विस्मये हर्षे रोषे चैअव द्वयोरपि // ना. शा_८.१२५ //
आसूयितजुगुप्सायां हास्ये घ्राणे च पातनम् /
क्रोधस्थानेषु दीप्तेषु योजयेत् भ्रुकुटिं बुधः // ना. शा_८.१२६ //
शृङ्गारे ललिते सौम्ये सुखे स्पर्शे प्रबोधने /
एवं विधेषु भावेषु चतुरं तु प्रयोजयेत् // ना. शा_८.१२७ //
स्त्रीपुरुषयोश्च संलापे नानावस्थान्तरात्मके /
मोट्टायिते कुट्टमिते विलासे किलकिञ्चिते // ना. शा_८.१२८ //
निकुञ्चितं तु कर्तव्यं नृत्ते योज्यं तु रेचितम् /
अनाविद्धेषु भावेषु विद्यात् स्वाभाविकं बुधः // ना. शा_८.१२९ //
इत्येवं तु भ्रुवः प्रोक्तं नासाकर्म निबोधत /
नता मन्दा विकृष्टा च सोच्च्वासा च विकूणिता // ना. शा_८.१३० //
स्वाभाविका चेति बुधैः षड्विधा नासिका स्मृता /
नता मुहुःश्लिष्टपुटा मन्दा तु निभृता स्मृता // ना. शा_८.१३१ //
विकृष्टोत्फुल्लितपुटा सोच्च्वासा कृष्टमारुता /
विकूणिता संकुचिता समा स्वाभाविका स्मृता // ना. शा_८.१३२ //
नासिकालक्षणं ह्येतत् विनियोगं निबोधत /
मदोत्कम्पसमायुक्ते नारीणामनुरोधने // ना. शा_८.१३३ //
निःश्वासे च नता कार्या नासिका नाट्ययोक्तृभिः /
विच्चिन्नमन्दरुदिते सोच्च्वासे च नता स्मृता // ना. शा_८.१३४ //
निर्वेगौत्सुक्यचिन्तासु मन्दा शोके च योजयेत् /
तीव्रगन्धे विकृष्टां तौ रौद्रे वीरे तथैव च // ना. शा_८.१३५ //
इष्टघ्राणे तथोच्च्वासे दीर्घोच्च्वासां प्रयोजयेत् /
विकूणिता च कर्तव्या जुगुप्सायामसूयादिषु // ना. शा_८.१३६ //
कार्या शेषु भावेषु तज्ज्ञैः स्वाभाविका तथा /
क्षामं फुल्लं च घूर्णं च कम्पितं कुञ्चितं समम् // ना. शा_८.१३७ //

षड्विधं गण्डमुद्दिष्टं तस्य लक्षणमुच्यते /
क्षामं चावनतं ज्ञेयं फुल्लं विकसितं भवेत् // ना. शा_८.१३८ //
विततं घूर्णमत्रोक्तं कम्पितं स्फुरितं भवेत् /
स्यात् कुञ्चितं संकुञ्चितं समं प्राकृतमुच्यते // ना. शा_८.१३९ //
गण्डयोर्लक्षणं प्रोक्तं विनियोगं निबोधत /
क्षामं दुःखेषु कर्तव्यं प्रहर्षे फुल्लमेव च // ना. शा_८.१४० //
पूर्णमुत्साहगर्वेषु रोमहर्षेषु कम्पितम् /
कुञ्चितं च सरोमाञ्चं स्पर्शे शीते भये ज्वरे // ना. शा_८.१४१ //
प्राकृतं शेषभावेषु गण्डकर्म भवेदिति /
विवर्तनं कम्पनं च विसर्गो विनिगूहनम् // ना. शा_८.१४२ //
सन्दष्टकं समुद्गं च षट् कर्माण्यधरस्य तु /
विकूणितं विवर्तस्तु वेपनं कम्पनं स्मृतम् // ना. शा_८.१४३ //
विनिष्क्रामो विसर्गस्तु प्रवेशो विनिगूहनम् /
सन्दष्टकं द्विजैअर्दष्टं समुद्गः सहजोन्नति // ना. शा_८.१४४ //
इत्योष्ठलक्षणं प्रोक्तं विनियोगं निबोधत /
असूयावेदनावज्ञाभयादिषु विवर्तनम् // ना. शा_८.१४५ //
कम्पनं वेपनं शीतभयरोषजवादिषु /
स्त्रीअणां विलासे विव्वोके विसर्गो रञ्जने तथा // ना. शा_८.१४६ //
विनिगूहनमायासे सन्दष्टं क्रोधकर्मसु /
समुद्गस्त्वनुकम्पायां चुम्बने चाभिनन्दने // ना. शा_८.१४७ //
इत्योष्ठकर्माण्युक्तानि चिबुकस्य निबोधत /
कुट्टनं खण्डनं चिन्नं चुक्कितं लेहनं समम् // ना. शा_८.१४८ //
दष्टं च दन्तक्रियया चिबुकं त्विह लक्ष्यते /
कुट्टनं दन्तसंघर्षः संस्फोटः खण्डनं मुहुः // ना. शा_८.१४९ //
चिन्नं तु गाढसंश्लेषश्चुक्कितं दूरविच्युतिः /
लेहनं जिह्वया लेहः किञ्चित् श्लेषः समं भवेत् // ना. शा_८.१५० //
दन्तैर्दष्टे ऽधरे दष्टमित्येषां विनियोजनम् /
भयशीतज्वरक्रोधग्रस्तानां कुट्टनं भवेत् // ना. शा_८.१५१ //
जपाध्ययनसंलापभक्ष्ययोगे च खण्डनम् /
चिन्नं व्याधौ भये शीते व्यायामे रुदिते मृते // ना. शा_८.१५२ //
जृम्भणे चुक्कितं कार्यं तथा लेह्ये च लेहनम् /
समं स्वभावभावेषु सन्दष्टं क्रोधकर्मसु // ना. शा_८.१५३ //
इति दन्तोष्ठजिह्वानां करणाच्चिबुकक्रिया /
विधुतं विनिवृत्तं च निर्भुग्नं भुग्नमेव च // ना. शा_८.१५४ //
विवृतं च तथोद्वाहि कर्माण्यत्रास्यजानि तु /
व्यावृत्तं विनिवृत्तं स्याद्विधुतं तिर्यगायतम् // ना. शा_८.१५५ //
अवाङ्मुखत्वं निर्भुग्नं व्याभुग्नं किञ्चिदायतम् /
विश्लिष्टोष्ठं च विवृतमुद्वाह्युत्क्षिप्तमेव च // ना. शा_८.१५६ //
विनिवृत्तमसूयायामीर्ष्याक्रोधकृतेन च /

अवज्ञाविवृतादौ च स्त्रीणा कार्या प्रयोक्तृभिः // ना. शा_८.१५७ //
विधुतं वारणे चैव नैवमित्येवमादिषु /
निर्भुग्नं चापि विज्ञेयं गम्भीरालोकनादिषु // ना. शा_८.१५८ //
भुग्नं लजान्विते योज्यं यतीनां तु स्वभावजम् /
निर्वेदौत्सुक्यचिन्तासु नये च विनिमन्त्रणे // ना. शा_८.१५९ //
विवृत्तं चापि विज्ञेयं हास्यशोकभयादिषु /
स्त्रीणामुद्वाहि लीलायां गर्वे गच्चत्यनादरे // ना. शा_८.१६० //
एव नामेति कार्यं च कोपवाक्ये विचक्षणैः /
समं साच्यनुवृत्तादि यच्च दृष्टिविकल्पितम् // ना. शा_८.१६१ //
तज्ज्ञैस्तेनानुसारेण कार्यं तदनुगं मुखम् /
अथातो मुखरागस्तु चतुर्धा परिकीर्तितः // ना. शा_८.१६२ //
स्वाभाविकः प्रसन्नश्च रक्तः श्यामो ऽर्थसंश्रयः /
स्वाभाविकस्तु कर्तव्यः स्वभावाभिनयाश्रयः // ना. शा_८.१६३ //
मध्यस्थादिषु भावेषु मुखरागः प्रयोक्तृभिः /
प्रसन्नस्त्वद्भुते कार्यो हास्यशृङ्गारयोस्तथा // ना. शा_८.१६४ //
वीररौद्रमदाद्येषु रक्तः स्यात् करुणे तथा /
भयानके सबीभत्से श्यामं सञ्जायते मुखम् // ना. शा_८.१६५५ //
एवं भावरसार्थेषु मुखरागं प्रयोजयेत् /
शाखाङ्गोपाङ्गसंयुक्तः कृतो ऽप्यभिनयः शुभः // ना. शा_८.१६६ //
मुखरागविहीनस्तु नैव शोभान्वितो भवेत् /
शरीराभिनयो ऽल्पो ऽपि मुखरागसम्न्वितः // ना. शा_८.१६७ //
द्विगुणां लभते शोभां रात्राविव निशाकरः /
नयनाभिनयो ऽपि स्यान्नानाभावरसास्फुटः // ना. शा_८.१६८ //
मुखरागान्वितो यस्मान्नाट्यमत्र प्रतिष्ठितम् /
यथा नेत्रं प्रसर्पेत मुखभ्रूदृष्टिसंयुतम् // ना. शा_८.१६९ //
तथा भावरसोपेतं मुखरागं प्रयोजयेत् /
इत्येवं मुखरागस्तु प्रोक्तो भावरसाश्रयः // ना. शा_८.१७० //
अतः परं प्रवक्ष्यामि ग्रीवाकर्माणि वै द्विजाः /
समा नतोन्नता त्र्यस्रा रेचिता कुञ्चिताञ्चिता // ना. शा_८.१७१ //
वलिता च निवृत्ता च ग्रीवा नवविधार्थतः /
समा स्वाभाविकी ध्यानस्वभाजपकर्मसु // ना. शा_८.१७२ //
नता नतास्यालङ्कारबन्धे कण्ठावलम्बने ,
उन्नताभ्युन्नतमुखी ग्रीवा चोर्ध्वनिवेशने // ना. शा_८.१७३ //
त्र्यस्रा पार्श्वगता ज्ञेया स्कन्धभारे ऽति दुःखिते /
रेचिता विधुतभ्रान्ता हावे मथनृत्तयोः // ना. शा_८.१७४ //
कुञ्चिताकुञ्चिते मूर्ध्नि धारिते गलरक्षणे /
अञ्चितापसृतोद्बन्धकेशकर्षोर्ध्वदर्शने // ना. शा_८.१७५ //
पार्श्वोन्मुखी स्याद्वलिता ग्रीवाभेदैश्च वीक्षणे /
निवृताभिमुखीभूता स्वस्थानाभिमुखादिषु // ना. शा_८.१७६ //

इत्यादि लोकभावार्था ग्रीवाभङ्गैरनेकधा /
ग्रीवाकर्माणि सर्वाणि शिरः कर्मानुगानि हि // ना. शा_८.१७७ //
शिरसः कर्मणः कर्म ग्रीवायाः सम्प्रवर्तते /
इत्येतल्लक्षणं प्रोक्तं शीर्षोपाङ्गसमाश्रयम् /
अङ्गकर्माणि शेषाणि गदतो मे निबोधत // ना. शा_८.१७९ //

इति भारतीये नाट्यशास्त्रे उपाङ्गविधानं नाम अष्टमो ऽध्यायः

---

अथ नवमो ऽध्यायः

एवमेतच्चिरोनेत्रभ्रुनासोष्ठकपोलजम् /
कर्म लक्षणसंयक्तमुपाङ्गानां मयोदितम् // ना. शा_९.१ //
हस्तोरपार्श्वजठरकटीजङ्घोरुपादतः /
लक्षणं सम्प्रवक्ष्यामि विनियोगं च तत्वतः // ना. शा_९.२ //
हस्तादीनां प्रवक्ष्यामि कर्म नाट्यप्रयोजकम्
यथा येनाभिनेयं च तन्मे निगदतः शृणु // ना. शा_९.३ //
पताकस्त्रिपताकश्च तथा वै कर्तरीमुखः /
अर्धचन्द्रो ह्यरालश्च शुकतुण्डस्तथैव च // ना. शा_९.४ //
मुष्टिश्च शिखराख्यश्च कपित्थः खटकामुखः /
सूच्यास्यः पद्मकोशश्च तथा वै सर्पशीर्षकः // ना. शा_९.५ //
मृगशीर्षः परो ज्ञेयो हस्ताभिनययोक्तृभिः /
काङ्गुलको ऽलपद्मश्च चतुरो भ्रमरस्तथ // ना. शा_९.६ //
हंसास्यो हंसपक्षश्च सन्दंशो मुकुलस्तथा /
ऊर्णनाभस्ताम्रचूडचतुर्विंशतिरीरिताः // ना. शा_९.७ //
असंयुताः संयुताश्च गदतो मे निबोधत /
अञ्जलिश्च कपोतश्च कर्कटः स्वस्तिकस्तथा // ना. शा_९.८ //
खटकावर्धमानश्च ह्युत्संगो निषधस्तथा /
दोलः पुष्पपुटश्चैव तथा मकर एव च // ना. शा_९.९ //
गजदन्तो ऽवहित्थश्च वर्धमानस्तथैव च /
एते तु संयुता हस्ता मया प्रोक्तास्त्रयोदश // ना. शा_९.१० //
नृत्तहस्तानतश्चोर्ध्वं गदतो मे निबोधत /
चतुरस्रौ तथोद्वृत्तौ तथा तलमुखौ स्मृतौ // ना. शा_९.११ //
स्वस्तिकौ विप्रकीर्णौ चाप्यरालखटकामुखौ /
आविद्धवक्रौ सूच्यास्यौ रेचितावर्धरेचितौ // ना. शा_९.१२ //
उत्तानावञ्चितौ वापि पल्लवौ च तथा करौ /
नितम्बौ चापि विज्ञेयौ केशबन्धौ तथैव च // ना. शा_९.१३ //
सम्प्रोक्तौ करिहस्तौ च लताख्यौ च तथैव च /
पक्षवञ्चितकौ चैव पक्षप्रद्योतकौ तथा // ना. शा_९.१४ //

ज्ञेयो गरुडपक्षौ च हंसपक्षौ तथैव च /
ऊर्ध्वमण्डलिनौ चैव पार्श्वमण्डलिनौ तथा // ना. शा_९.१५ //
उरोमण्डलिनौ चैव उरःपार्श्वार्धमण्डलौ /
मुष्टिकस्वस्तिकौ चापि नलिनीपद्मकोशकौ // ना. शा_९.१६ //
अलपद्मावुल्बनौ च ललितौ वलितौ तथा /
सप्तषष्टिकरा ह्येते नामतो ऽभिहिता मया // ना. शा_९.१७ //
यथा लक्षणमेतेषां कर्माणि च निबोधत /
प्रसारिताः समाः सर्वा यस्याङ्गुल्यो भवन्ति हि /
कुञ्चितश्च तथाङ्गुष्ठः स पताक इति स्मृतः // ना. शा_९.१८ //
एष प्रहारपाते प्रतापन नोदने प्रहर्षे च /
गर्वे ऽप्यहमिति तज्ज्ञैललाटदेशोत्थितः कार्यः // ना. शा_९.१९ //
एषो ऽग्निवर्षधारानिरूपणे पुष्पवृष्टिपतने च /
संयुतकरणः कार्यः प्रविरलचलिताङ्गुलिर्हस्तः // ना. शा_९.२० //
स्वस्तिकविच्युतिकरणात् पल्लवपुष्पोपहारशष्पाणि /
विरचितमुर्वीसंस्थं यद् द्रव्य तच्च निर्देश्यम् // ना. शा_९.२१ //
स्वस्तिकविच्युतिकरणात् पुनरेवाधोमुखेन कर्तव्यम् /
संवृतविवृतं पाल्यं चन्नं निबिडं च गोप्यं च // ना. शा_९.२२ //
अस्यैव चाङ्गुलीभिरधोमुखप्रस्थितोत्थितचलाभिः /
वायूर्मिवेगवेलाक्षोभश्चौघश्च कर्तव्यः // ना. शा_९.२३ //
उत्साहनं बहु तथा महाजनप्रांशुपुष्करप्रहतम् /
पक्षोत्क्षेपाभिनयं रेचककरणेन चाभिनयेत् // ना. शा_९.२४ //
परिघृष्टतलस्थेन तु धौतं मृदितं प्रमृष्टपिष्टे च /
पुनरेव शैलधारणमुद्घाटनमेव चाभिनयेत् // ना. शा_९.२५ //
एवमेष प्रयोक्तव्यः स्त्रीपुंसाभिनये करः /
पताकाभ्यां तु हस्ताभ्यामभिनेयः प्रयोक्तृभिः // ना. शा_९.२६ //
दशाख्यश्च शताख्यश्च सहस्राख्यस्तथैव च /
अतः परं प्रवक्ष्यामि त्रिपताकस्य लक्षणम् // ना. शा_९.२७ //
पताके तु यदा वक्राऽनामिका त्वङ्गुलिर्भवेत् /
त्रिपताकः स विज्ञेयः कर्म चास्य निबोधत // ना. शा_९.२८ //
आवाहनमवतरणं विसर्जनं वारणं प्रवेशश्च /
उन्नामनं प्रणामो निदर्शनं विविधवचनं च // ना. शा_९.२९ //
मङ्गल्यद्रव्याणां स्पर्शः शिरसो ऽथ सन्निवेशश्च /
उष्णीषमुकुटधारणं नासास्यश्रोत्रसंवरणम् // ना. शा_९.३० //
अस्यैव चाङ्गुलीभ्यामधोमुखप्रस्थितोत्थितचलाभ्याम् /
लघुपवनस्रोतोभुजगभ्रमरादिकान् कुर्यात् // ना. शा_९.३१ //
अश्रुप्रमार्जने तिलकविरचनं रोचनयालम्भकं च
त्रिपताकानामिकया स्पर्शनमलकस्य कार्यञ्च // ना. शा_९.३२ //
स्वस्तिकौ त्रिपताकौ तु गुरूणां पादवन्दने /
विच्युतौ चलितावस्थौ कार्यावुद्वाहदर्शने // ना. शा_९.३३ //

परस्पराग्रसंश्लिष्टौ कर्तव्यौ नृपदर्शने /
तिर्यक् स्वस्तिकसम्बद्धौ स्यातां तौ ग्रहदर्शने // ना. शा_९.३४ //
तपस्विदर्शने कार्यावूर्ध्वौ चापि पराङ्मुखौ /
परस्पराभिमुखौ च कर्तव्यौ वरदर्शने // ना. शा_९.३५ //
उत्तानाधोमुखौ कार्यावग्रे वक्त्रस्य संस्थितौ /
वडवानलसङ्ग्राममकराणां च दर्शने // ना. शा_९.३६ //
अभिनयास्त्वनेनैअव वानरप्लवनोर्मयः /
पवनश्च स्त्रियश्चैव नाट्ये नाट्यविचक्षणैः // ना. शा_९.३७ //
संमुखप्रसृताङ्गुष्ठः कार्यो बालेन्दुदर्शने /
पराङ्ग्मुखस्तु कर्तव्यो याने नृणां प्रयोक्तृभिः // ना. शा_९.३८ //
त्रिपताके यदा हस्ते भवेत् पृष्ठावलोकनी
तर्जनी मध्यमायाश्च तदासौ कर्तरीमुखः // ना. शा_९.३९ //
पथि चरणरचनरञ्जनरङ्गणकरणान्यधोमुखेनैव /
ऊर्ध्वमुखेन तु कुर्यात् दष्टं शृङ्गं च लेख्यं च // ना. शा_९.४० //
पतनमरणव्यतिक्रमपरिवृत्तवितर्कित तथ न्यस्तम् /
भिन्नवलितेन कुर्यात् कर्तर्यास्याङ्गुलिमुखेन // ना. शा_९.४१ //
संयुतकरणो व स्यादसंयुतो वा प्रयुज्यते तज्ज्ञैः /
रुरुचमरमहिषसुरगजवृषगोपुरशैलशिखरेषु // ना. शा_९.४२ //
यस्याङ्गुल्यस्तु विनताः सहाङ्गुष्ठेन चापवत् /
सो ऽर्धचन्द्रो हि विज्ञेयः करः कर्मास्य वक्ष्यते // ना. शा_९.४३ //
एतेन बालतरवः शशिलेखाम्बुकलशवलयानि /
निर्घाटनमायस्तं मध्यौपम्यं च पीनं च // ना. शा_९.४४ //
रशनाजघनकटीनामाननतलपत्रकुण्डलादीनाम् /
कर्तव्यो नारीणामभिनययोगो ऽर्धचन्द्रेण // ना. शा_९.४५ //
आद्या धनुर्नता कार्या कुञ्चिताङ्गुष्ठकस्तथा /
शेषा भिन्नोर्ध्ववलिता ह्यराले ऽङ्गुलयः करे // ना. शा_९.४६ //
एतेन सत्त्वशौण्डीर्यवीर्यधृतिकान्तिदिव्यगाम्भीर्यम् /
आशीर्वादाश्च तथा भावा हितसंज्ञकाः कार्याः // ना. शा_९.४७ //
एतेन पुनः स्त्रीणां केशानां संग्रहोत्कर्षौ /
सर्वाङ्गिकं तथैव च निर्वर्णनमात्मनः कार्यम् // ना. शा_९.४८ //
कौतुकविवाहयोगं प्रदक्षिणेनैव संप्रयोगं च /
अङ्गुल्यग्रस्वस्तिकयोगान् परिमण्डलेनैव // ना. शा_९.४९ //
प्रादक्षिण्य परिमण्डलं च कुर्यान् महाजनं चैव /
यच्च महीतलरचितं द्रव्यं तच्चाभिनेयं स्यात् // ना. शा_९.५० //
आह्वाने च निवारणनिर्माणे चाप्यनेकवचने च /
स्वेदस्या चापनयने गन्धाघ्राणे शुभः शुभे चैष // ना. शा_९.५१ //
त्रिपताकहस्तजानि तु पूर्वं यान्यभिहितानि कर्माणि /
तानि त्वरालयोगात् स्त्रीभिः सम्यक् प्रयोज्यानि // ना. शा_९.५२ //
अरालस्य यदा वक्राऽनामिकात्वङ्गुलिर्भवेत् /

शुकतुण्डस्तु स करः कर्म चास्य निबोधत // ना. शा_९.५३ //
एतेन त्वभिनेयं नाहं न त्वं न कृत्यमिति चार्ये /
आवाहने विसर्गे धिगिति वचने च सावज्ञम् // ना. शा_९.५४ //
अङ्गुल्यो यस्य हस्तस्य तलमध्येग्रसंस्थिताः /
तासामुपरि चाङ्गुष्ठः सः मुष्टिरिति संज्ञितः // ना. शा_९.५५ //
एष प्रहारे व्यायामे निर्गमे पीडने तथा /
संवाहने ऽसियष्टीनां कुन्तदण्डग्रहे तथा // ना. शा_९.५६ //
अस्यैव तु यदा मुष्टेरूर्ध्वोङ्गुष्ठः प्रयुज्यते /
हस्तः स शिखरो नाम तदा ज्ञेयः प्रयोक्तृभिः // ना. शा_९.५७ //
रश्मिकुशाङ्कुशधनुषां तोमरशक्तिप्रमोक्षणे चैव /
अधरोष्ठपादरञ्जनमलकस्योत्क्षेपणं चैव // ना. शा_९.५८ //
अस्यैव शिखराख्यस्य ह्यङ्गुष्ठकनिपीडिता /
यदा प्रदेशिनी वक्रा स कपित्थस्तदा स्मृतः // ना. शा_९.५९ //
असिचापचक्रतोमरकुन्तगदाशक्तिवज्रबाणानि /
शस्त्राण्यभिनेयानि तु कार्यं सत्यं च पथ्यं च // ना. शा_९.६० //
उत्क्षिप्तवक्रा तु यदानामिका सकनीयसी /
अस्यैव तु कपित्थस्य तदासो खटकामुखः // ना. शा_९.६१ //
होत्रं हव्यं चत्रं प्रग्रहपरिकर्षणं व्यजनकञ्च /
आदर्शधारणं खण्डनं तथा पेषणं चैव // ना. शा_९.६२ //
आयतदण्डग्रहणं मुक्ताप्रालम्बसंग्रहं चैव /
स्रग्दामपुष्पमाला वस्त्रान्तालम्बनं चैव // ना. शा_९.६३ //
मन्मथशरावकर्ष्णपुष्पवचयप्रतोदकार्याणि /
अङ्कुशरज्वाकर्षणस्त्रीदर्शनमेव कार्यं च // ना. शा_९.६४ //
खटकाख्ये यदा हस्ते तर्जनी सम्प्रसारिता /
हस्तः सूचीमुखो नाम तदा ज्ञेयः प्रयोक्तृभिः // ना. शा_९.६५ //
अस्य विविधान् योगान् वक्ष्यामि समासतः प्रदेशिन्याः /
ऊर्ध्वनतलोलकम्पितविजृंभितोद्वाहितचलायाः // ना. शा_९.६६ //
चक्रं तडित्पताकामञ्जर्यः कर्णचूलिकाश्चैव /
कुटिलगतयश्च सर्वे निर्देश्याः साधुवादाश्च // ना. शा_९.६७ //
बालोरगबल्यवधूपदीपवल्लीलताशिखण्डाश्च /
परिपतनवक्रमण्डलमभिनेयान्यूर्ध्वलोलितया // ना. शा_९.६८ //
वदनाभ्यासे कुञ्चितविजृम्भिता वाक्यरूपणे कार्या /
भूयश्चोर्ध्वविरचिता ताराघोणैकदण्डयष्टिषु च /
विनताः च पुनः कार्या दंष्ट्रिषु च तथास्ययोगेन // ना. शा_९.६९ //
पुनरपि मण्डलगतया सर्वग्रहणं तथैव लोकस्य /
प्रणतोन्ती च कार्ये ह्याद्ये दीर्घे च दिवसे च // ना. शा_९.७० //
[श्रवणाभ्यासे वक्रा विजृम्भणा वाक्यरूपणावसरे] /
मेति वदेति च योज्या प्रसारितोत्कम्पितोत्ताना // ना. शा_९.७१ //
कार्या प्रकम्पित रोवदर्शन स्वेदरूपणे चैव /

कुन्तलकुण्डलाङ्गदगण्डाश्रये ऽभिनय // ना. शा_९.७२ //
गर्वे ऽहमिति ललाटे रिपुदर्शने तथैव च क्रोधे /
को ऽसाविति निर्देशे ऽथ कर्णकण्डुनयने चैव // ना. शा_९.७३ //
संयुक्ता संयोगे कार्या विश्लेषिता वियोगे च /
कलहे स्वस्तिकयुपतां परस्परोत्पीडिता बन्धे // ना. शा_९.७४ //
द्वाभ्यां तु वात्मपार्श्वे दक्षिणतो निननिशावसानानि /
अभिमुखपराङ्मुखाभ्यां विश्लिष्टाभ्यां प्रयुञ्जीत // ना. शा_९.७५ //
पुनरपि च भ्रमिताग्ररूपा शिलावर्तयन्त्रशैलेषु /
परिवेषणे तथैव हि कार्या चाधोमुखी नित्यम् // ना. शा_९.७६ //
श्लिष्टा ललाटपट्टेष्वधोमुखी शम्भुरूपणे कर्या /
शकस्याप्युत्ताना तज्ज्ञैस्तिर्यक्स्थिता कार्या // ना. शा_९.७७ //
द्वाभ्यां सन्दर्शयेन्नित्यं सम्पूर्णं चन्द्रमण्डलम् /
श्लिष्टा ललाटे शक्रस्य कार्या ह्युत्तानसंश्रया // ना. शा_९.७८ //
परिमण्डलं भ्रमिततया मण्डलमादर्शयेच्च चन्द्रस्य /
हरनयने च ललाटे शक्रस्यऽप्युगुत्ताना // ना. शा_९.७९ //
यस्याङ्गुल्यस्तु वितताः सहाङ्गुष्ठेन कुञ्चिताः /
ऊर्ध्वा ह्यसंगताग्राश्च स भवेत् पद्मकोशकः // ना. शा_९.८० //
बिल्वकपित्थफलानां ग्रहणे कुचदर्शनश्च नारीणाम् /
ग्रहणे ह्यामिषलाभे भवन्ति ताः कुञ्चिताग्रास्तु // ना. शा_९.८१ //
बहुजातिबीजपूरकमामिषखण्डं च निर्देश्यम् /
देवार्चनबलिहरणे समुद्गके साग्रपिण्डदाने च /
कार्यः पुष्पप्रकरश्च पद्मकोशेन हस्तेन // ना. शा_९.८२ //
मणिबन्धनविश्लिष्टाभ्यां प्रविरलचलिताङ्गुलिकराभ्याम् /
कार्यो विवर्तिताभ्यां विकसितकमलोत्पलाविनयः // ना. शा_९.८३ //
अङ्गुल्यः संहताः सर्वाः सहाङ्गुष्ठेन यस्य च /
तथा निम्नतलश्चैव स तु सर्पशिराः करः // ना. शा_९.८४ //
एषः सलिलप्रदाने भुजगतौ तोयसेचने चैव /
आस्फोटने च योज्यः करिकुम्भास्फालनाद्येषु // ना. शा_९.८५ //
अधोमुखीनां सर्वासामङ्गुलीनां समागमः /
कनिष्ठाङ्गुष्ठकावूर्ध्वौ स भवेत् मृगशीर्षकः // ना. शा_९.८६ //
इह साम्प्रतमस्त्यद्य शक्तेश्चोल्लासने ऽक्षपाते च /
स्वेदापमार्जनेषु च कुट्टमिते प्रचलितस्तु भवेत् // ना. शा_९.८७ //
त्रेताग्निसंस्थिता मध्या तर्जन्याङ्गुष्ठका यदा /
काङ्गुलो ऽनामिका वक्रा यदाश्चोर्ध्वा कनीयसी // ना. शा_९.८८ //
एतेन तरुणफलानि नानाविधानि च लघूनि /
कार्यानि रोषजानि स्त्रीवचान्यङ्गुलिक्षेपैः // ना. शा_९.८९ //
मरकतवैदूर्यादेः प्रदर्शनं सुमनसां च कर्तव्यम् /
ग्राह्यं मरालपदमिति तज्ज्ञैरेव प्रयोगेषु // ना. शा_९.९० //
आवर्तिताः करतले यस्याङ्गुल्यो भवन्ति हि /

पार्श्वागतविकीर्णाश्च स भवेदलपल्लवः // ना. शा_९.९१ //
प्रतिषेधकृते योज्यः कस्य त्वन्नास्ति शून्यवचनेषु /
पुनरात्मोपन्यासः स्त्रीणामेतेन कर्तव्यः // ना. शा_९.९२ //
तिस्रः प्रसारिता यत्र तथा चोर्ध्वा कनीयसी /
तासां मध्ये स्थितोङ्गुष्ठः स करश्चतुरस्मृतः // ना. शा_९.९३ //
नयविनयनियमसुनितुणबालातुरसत्यकैतवार्थेषु /
वाक्ये युक्ते पथ्ये सत्ये प्रशमे च विनियोज्यः // ना. शा_९.९४ //
एकेन द्वाभ्यां वा किञ्चिन्मण्डलकृतेन हस्तेन /
विकृतविचारितचरितं वितर्कितं लज्जितं चैव // ना. शा_९.९५ //
नयनौपम्यं पद्मदलरूपणं हरिणकर्णनिर्देशः /
संयुतकरणेनैव तु चरेणैतानि कुर्वीत // ना. शा_९.९६ //
लीला रती रुचि च स्मृतिबुद्धिविभावनाः क्षमां पुष्टिं च /
सञ्ज्ञामात्रं प्रणयं विचारणं सङ्गतं शौचम् // ना. शा_९.९७ //
चातुर्यं माधुर्यं दाक्षिण्यं मार्दवं सुखं शीलम् /
प्रश्नं वार्तायुक्तिं वेषं मृदुशाद्वलं स्तोकम् // ना. शा_९.९८ //
विभवाविभौ सुरतं गुणागुणौ यौवनं गृहान् दारान् /
नानावर्णाश्च तथा चतुरेणैवं प्रयुञ्जीत // ना. शा_९.९९ //
सितमूर्ध्वेन तु कुर्यात् रक्तं पीतं च मण्डलकृतेन /
परिमुदितेन तु नीलं वर्णाश्चतुरेण हस्तेन // ना. शा_९.१०० //
मध्यमाङ्गुष्ठसन्दंशो वक्रा चैव प्रदेशिनी /
ऊर्ध्वमन्ये प्रकीर्णे च द्व्यङ्गुल्यौ भ्रमरे करे // ना. शा_९.१०१ //
पद्मोत्पलकुमुदानामन्येषां चैव दीर्घवृन्तानाम् /
पुष्पाणां ग्रहणविधिः कर्तव्यः कर्णपुरश्च // ना. शा_९.१०२ //
विच्युतश्च सशब्दश्च कार्यो निर्भत्सनादिषु /
बालालापे च शीघ्रे च ताले विश्वासने तथा // ना. शा_९.१०३ //
तर्जनीमध्यमाङ्गुष्ठास्त्रेताग्निस्था निरन्तराः /
भवेयुर्हंसवक्त्रस्य शेषे द्वे सम्प्रसारिते // ना. शा_९.१०४ //
श्लक्ष्णाल्पशिथिललाघवनिस्सारार्थे मृदुत्वयोगेषु /
कार्यो ऽभिनयविशेषः किञ्चित्प्रस्यन्दिताग्रेण // ना. शा_९.१०५ //
समाः प्रसारितास्तिस्रस्तथा चोर्ध्वा कनीयसी /
अङ्गुष्ठः कुञ्चितश्चैव हंसपक्ष इति स्मृतः // ना. शा_९.१०६ //
एष च निवापसलिले दातव्ये गण्डसंश्रये चैव /
कार्यः प्रतिग्रहाचमनभोजनार्थेषु विप्राणाम् // ना. शा_९.१०७ //
आलिङ्गने महास्तम्भदर्शने रोमहर्षणे चैव /
स्पर्शे ऽनुलेपनार्थे योज्यः संवाहने चैव // ना. शा_९.१०८ //
पुनरेव च नारीणां स्तनान्तरस्थेन विभ्रमविशेषाः /
कार्या यथारसं स्युर्दुःखे हनुधारणे चैव // ना. शा_९.१०९ //
तर्जन्यङ्गुष्ठसन्दंशस्त्व ह्यरालस्य यथा भवेत् /
आभुग्नतलमध्यस्थः स सन्दंश इति स्मृतः // ना. शा_९.११० //

सन्दंशस्त्रिविधो ज्ञेय ह्यग्रजो मुखजस्तथा /
तथा पार्श्वगतश्चैव रसभावोपबृंहितः // ना. शा_९.१११ //
पुष्पापचयग्रथने ग्रहणे तृणपर्णकेशसूत्राणाम् /
शल्यावयवग्रहणापकर्षणे चाग्रसन्दंशः // ना. शा_९.११२ //
वृन्तात् पुष्पोद्धरणं वर्तिशलाकादिपूरणं चैअव /
धिगिति च वचनं रोषे मुखसन्दंशस्य कर्माणि // ना. शा_९.११३ //
यज्ञोपवीतधारणवेधनगुणसूक्ष्मबाणलक्ष्येषु /
योगे ध्याने स्तोके संयुक्तकरणस्तु कर्तव्यः // ना. शा_९.११४ //
पेशलकुत्सासूयादोषवचने च वामहस्तेन /
किञ्चिद् विवर्तितकराग्रः प्रयुज्यते पार्श्वसन्दंशः // ना. शा_९.११५ //
आलेख्यनेत्ररञ्जनवितर्कवन्तप्रवालरचने च /
निष्पीडनं तथालक्तकस्य कार्यं च नारीभिः // ना. शा_९.११६ //
समागताग्राः सहिता यस्याङ्गुल्यो भवन्ति हि /
ऊर्ध्वा हंसमुखस्येव स भवेन्मुकुलः करः // ना. शा_९.११७ //
देवार्च्चनबलिकरणे पद्मोत्पलकुमुदरूपणे चैव /
विटचुम्बने च कार्यो विकुत्सिते विप्रकीर्णश्च // ना. शा_९.११८ //
भोजनहिरण्यगणनामुखसंकोचप्रदानशीघ्रेषु /
मुकुलितकुसुमेषु च तथा तज्ज्ञैरेष प्रयोक्तव्यः // ना. शा_९.११९ //
पद्मकोशस्य हस्तस्य ह्यङ्गुल्यः कुञ्चिता यदा /
ऊर्णनाभः स विज्ञेयः केशचौर्यग्रहादिषु // ना. शा_९.१२० //
शिरः कण्डूयने चैव कुष्ठव्याधिनिरूपणे /
संहव्याघ्रेष्वभिनयः प्रस्तरग्रहणे तथा // ना. शा_९.१२१ //
मध्यमाङ्गुष्ठसन्दंशो वक्रा चैव प्रदेशिनी /
शेषे तलस्थे कर्तव्ये ताम्रचूलकरे ऽङ्गुली // ना. शा_९.१२२ //
विच्युतश्च सशब्दश्च कार्यो निर्भत्सनादिषु /
ताले विश्वसने चैव शीघ्रार्थे संज्ञितेषु च // ना. शा_९.१२३ //
तथा कलासु काष्ठासु निमेषे तु क्षणे तथा /
एश एव करः कार्यो बालालापनिमन्त्रणे // ना. शा_९.१२४ //
अथवा अङ्गुल्यः संहिता वक्रा उपर्युङ्गुष्ठपीडिताः /
प्रसारिता कनीष्ठाच ताम्रचूडः करः स्मृतः // ना. शा_९.१२५ //
शतं सहस्रं लक्षं च करेणैकेन योजयेत् /
क्षिप्रमुक्ताङ्गुलीभिस्तु स्फुलिङ्गान् विप्रुषस्तथा // ना. शा_९.१२६ //
असंयुताः करा ह्येते मया प्रोक्ता द्विजोत्तमाः /
अतश्च संयुतान् हस्तान् गदतो मे निबोधत // ना. शा_९.१२७ //
पताकाभ्यां तु हस्ताभ्यां संश्लेषादञ्जलिः स्मृतः /
देवतानां गुरूणां च मित्राणां चाभिवादने // ना. शा_९.१२८ //
स्थानान्यस्य पुनस्त्रीणि वक्षो वक्त्रं शिरस्तथा /
देवतानां शिरःस्थस्तु गुरूणामास्यसंस्थितः /
वक्षस्थश्चैव मित्राणां स्त्रीणां त्वनियतो भवेत् // ना. शा_९.१२९ //

उभाभ्यामपि हस्ताभ्यामन्यो ऽन्यं पार्श्वसंग्रहात् /
हस्तः कपोतको नाम कर्म चास्य निबोधत // ना. शा_९.१३० //
एष विनयाभ्युपगमे प्रणामकरणे गुरोश्च सम्भाषे /
शीते भये च कार्यो वक्षःस्थः कम्पितः स्त्रीभिः // ना. शा_९.१३१ //
अयमेवाङ्गुलिपरिघृष्यमाणमुक्तस्तु खिन्नवाक्येषु /
एतावदिति च कार्यो नेदानीं कृत्यमिति चार्थे // ना. शा_९.१३२ //
अङ्गुल्यो यस्य हस्तस्य ह्यन्योन्यान्तरनिस्सृताः /
स कर्कट इति ज्ञेयः करः कर्म च वक्ष्यते // ना. शा_९.१३३ //
एष मदनाङ्गमर्दे सुप्तोत्थितविजृम्भणे बृहद्देहे /
हनुधारणे च योज्यः शङ्खग्रहणे ऽर्थतत्त्वज्ञैः // ना. शा_९.१३४ //
मणिबन्धविन्यस्तावरालौ स्त्रीप्रयोजितौ /
उत्तानौ वामपार्श्वस्थौ स्वस्तिकः परिकीर्तितः // ना. शा_९.१३५ //
स्वस्तिकविच्युइतिकरणाद् दिशो घनाः खं वनं समुद्राश्च /
ऋतवो मही तथौघं विस्तीर्णं चाभिनेयं स्यात् // ना. शा_९.१३६ //
खटकः खटके न्यस्तः खटकावर्धमानकः /
शृङ्गारार्थेषु योक्तव्यः प्रणामकरणे तथा // ना. शा_९.१३७ //
अन्ये
कुमुदीतालवृन्तेषु कर्तव्यश्चत्रधरणे // ना. शा_९.१३८ //
इति
अरालौ तु विपर्यस्तावुत्तानौ वर्धमानकौ /
उत्सङ्ग इति विज्ञेयः स्पर्शस्य ग्रहणे करः // ना. शा_९.१३९ //
सनिष्पेषकृते चैव रोमामर्षकृते ऽपि च /
निष्पीडितः पुनश्चैव स्त्रीणामीर्ष्याकृते भवेत् // ना. शा_९.१४० //
मुकुलं तु यदा हस्तं कपित्थः परिचेष्टयेत् /
स मन्तव्यस्तदा हस्तो निषधौ नाम नामतः // ना. शा_९.१४१ //
संग्रहपरिग्रहौ धारणं च समयश्च सत्यवचनं च /
सङ्क्षेपः संक्षिप्तं निपीडितेनाभिनेतव्यम् // ना. शा_९.१४२ //
शिखरस्तु यदा हस्तो मृगशीर्षेण पीडितः /
निषधो नाम विज्ञेयः स भयार्ते विधीयते // ना. शा_९.१४३ //
गृहीत्वा वामहस्तेन कर्पुराभ्यन्तरे भुजम् /
दक्षिणं चापि वामस्य कर्पुराभ्यन्तरे न्यसेत् // ना. शा_९.१४४ //
स चापि दक्षिणो हस्तः सम्यङ् मुष्टीकृतो भवेत् /
इत्येष निषधो हस्तः कर्म चास्य निबोधत // ना. शा_९.१४५ //
एतेन धैर्यमदगर्वसौष्ठवौत्सुक्यविक्रमाटोपाः /
अभिमानावष्टम्भः स्तम्भस्थैर्यादय कार्याः // ना. शा_९.१४६ //
ज्ञेयो वै निषधो नाम हंसपक्षौ पराङ्गमुखौ /
जालवातायनादीनां प्रयोक्तव्यो ऽभिघट्टने // ना. शा_९.१४७ //
अंसौ प्रशिथिलौ मुक्तौ पताकौ तु प्रलम्बितौ /
यदा भवेतां करणे स दोल इति संज्ञितः // ना. शा_९.१४८ //

संभ्रमविषादमूर्च्छितमदाभिघाते तथैव चाऽवेगे /
व्याधिप्लुते च शस्त्रक्षते च कार्यो ऽभिनयोगः // ना. शा_९.१४९ //
यस्तु सर्पशिराः प्रोक्तस्तस्याङ्गुलिनिरन्तरः /
द्वितीयः पार्श्वसंश्लिष्टः स तु पुष्पपुटः स्मृतः // ना. शा_९.१५० //
धान्यफलपुष्पसदृशान्यनेन नानाविधानि युक्तानि /
ग्राह्याण्युपनेयानि च तोयानयनापनयने च // ना. शा_९.१५१ //
पताकौ तु यदा हस्तावूर्ध्वाङ्गुष्ठावधोमुखौ /
उपर्युपरि विन्यस्तौ तदा स मकरः करः // ना. शा_९.१५२ //
सिंहव्यालद्विपिप्रदर्शनं नक्रमकरमत्स्यानाम् /
ये चान्ये क्रव्यादा ह्यभिनेयास्ते ऽर्थयोगेन // ना. शा_९.१५३ //
कूर्परांसोचितौ हस्तौ यदास्तां सर्पशीर्षकौ /
गजदन्तः स विज्ञेयः कर्म चास्य निबोधत // ना. शा_९.१५४ //
एव च वधुवराणमुद्वाहे चातिभारयोगे च /
स्तंभग्रहणे च तथा शैलशिलोत्पाटने चैव // ना. शा_९.१५५ //
शुकतुण्डौ करौ कृत्वा वक्षस्यभिमुखाञ्चितौ /
शनैरधोमुखाविद्धौ सो ऽवहित्थ इति स्मृतः // ना. शा_९.१५६ //
दौर्बल्ये निःश्वसिते गात्राणां दर्शने तनुत्वे च /
उत्कण्ठिते च तज्ज्ञैरभिनययोगस्तु कर्तव्यः // ना. शा_९.१५७ //
मुकुलस्तु यदा हस्तः कपित्थपरिवेष्टितः /
वर्धमानः स विज्ञेयः कर्म चास्य निबोधत // ना. शा_९.१५८ //
संग्रहपरिग्रहौ धारणं च समयश्च सत्यवचं च /
संक्षेपतस्तु संक्षिप्तं निपीडितेनाभिनेतव्यम् // ना. शा_९.१५९ //
ज्ञेयो वै वर्धमानस्तु हंसपक्षो पराङ्गमुखौ /
जालवातायनादीनां प्रयोक्तव्यो विघाटने // ना. शा_९.१६० //
उक्ता ह्येते द्विविधा ह्यसंयुताः संयुताश्च संक्षेपात् /
अभिनयकरास्तु ये त्विह ते ऽन्यत्राप्यर्थतः साध्याः // ना. शा_९.१६१ //
आकृत्या चेष्टया चिह्नैर्जात्या विज्ञाय तत्पुनः /
स्वयं वितर्क्य कर्तव्यं हस्ताभिनयनं बुधैः // ना. शा_९.१६२ //
नास्ति कश्चिदहस्तस्तु नाट्ये ऽर्थो ऽभिनयं प्रति /
यस्य यद् दृश्यते रूपं बहुशस्तन्मयोषितम् // ना. शा_९.१६३ //
अन्ये चाप्यर्थसंयुक्ता लौकिका ये करास्त्विह /
चन्दतस्ते नियोक्तव्या रसभावविचेष्टितैः // ना. शा_९.१६४ //
देशं कालं प्रयोगं चाप्यर्थयुक्तिमवेक्ष्य च /
हस्ता ह्येते प्रयोक्तव्याः नृणां स्त्रीणां विशेषतः // ना. शा_९.१६५ //
सर्वेषामेव हस्तानां यानि कर्माणि सन्ति हि /
तान्यहं संप्रवक्ष्यामि रसभावकृतानि तु // ना. शा_९.१६६ //
उत्कर्षणं विकर्षणं तथा चैवापकर्षणम् /
परिग्रहो निग्रहश्चाह्वानं नोदनमेव च // ना. शा_९.१६७ //
संश्लेषश्च वियोगश्च रक्षणं मोक्षणं तथा /

विक्षेपधूनने चैव विसर्गस्तर्जनं तथा // ना. शा_९.१६८ //
चेदनं भेदनं चैव स्फोटनं मोटनं तथा /
ताडनं चेति विज्ञेयं तज्ज्ञैः कर्म करान् प्रति // ना. शा_९.१६९ //
उत्तानः पार्श्वगश्चैव तथाऽधोमुख एव च /
हस्तप्रचारस्त्रिविधो नाट्यतत्त्वसमाश्रयः // ना. शा_९.१७० //
सर्वे हस्तप्रचाराश्च प्रयोगेषु यथाविधिः
नेत्रभ्रूमुखरागैश्च कर्तव्या व्यञ्जिअता बुधैः // ना. शा_९.१७१ //
करणं कर्म स्थानं प्रचायुक्तिं क्रियां च संप्रेक्ष्य /
हस्ताभिनयतज्ज्ञैः कार्यो लोकोपचारेण // ना. शा_९.१७२ //
उत्तामानां कराः कार्या ललाटक्षेत्रचारिणः /
वक्षःस्थाश्चैव मध्यानामधमामधोगता // ना. शा_९.१७३ //
ज्येष्ठे स्वल्पप्रचाराः स्युर्मध्ये मध्यविचारिणः /
अधमेषु प्रकीर्णाश्च हस्ताः कार्या प्रयोक्तृभिः // ना. शा_९.१७४ //
लक्षणव्यञ्जिता हस्ताः कार्यास्तूत्तममध्यमैः /
लोकक्रियास्वभावेन नीचैरप्यर्थसंश्रयाः // ना. शा_९.१७५ //
अथवान्यादृशं प्राप्य प्रयोगं कालमेव च /
विपरीताश्रया हस्ताः प्रयोक्तव्या बुधैर्न वा // ना. शा_९.१७६ //
विषण्णे मूर्च्छिते भीते जुगुप्साशोकपीडिते /
ग्लाने स्वप्ने विहस्ते च निश्चेष्टे तन्द्रिते जडे // ना. शा_९.१७७ //
व्याधिग्रस्ते जरार्ते च भयार्ते शीतविप्लुते /
मत्ते प्रमत्ते चोन्मत्ते चिन्तायां तपसि स्थिते // ना. शा_९.१७८ //
हिमवर्षहते बद्धे वरिणाप्लवसंश्रिते /
स्वप्नायिते च संभ्रान्ते नतसंस्फोटने तथा // ना. शा_९.१७९ //
न हस्ताभिनयः कार्यः कार्यः सत्त्वस्य संग्रहः /
तथा काकुविशेषश्च नानाभवरसान्वितः // ना. शा_९.१८० //
यत्र व्यग्रावुभौ हस्तौ तत्तद् दृष्टिविलोकनैः /
वाचकाभिनयं कुर्याद्विरामैर्थदर्शकैः // ना. शा_९.१८१ //
उत्तानः पार्श्वगश्चैव तथाऽधोमुख एव च /
प्रचारस्त्रिविधो ऽङ्गानां नाट्यनृत्तसमाश्रयः // ना. शा_९.१८२ //
उत्तानो वर्तुलस्त्र्यश्रः स्थितो ऽधोमुख एव च /
पञ्च प्रकारा हस्तस्य नाट्यनृत्तसमाश्रयाः // ना. शा_९.१८३ //
एवं ज्ञेयाः करा ह्येते नाभिनयसंश्रिताः /
अत ऊर्ध्वं प्रवक्ष्यामि हस्तान् नृत्तसमाश्रयान् // ना. शा_९.१८४ //
वक्षसो ऽष्टाङ्गुलस्थौ तु प्राङ्मुखौ खटकामुखौ /
समानकूर्परांसौ तु चतुरस्रौ प्रकीर्तितौ // ना. शा_९.१८५ //
हंसपक्षकृतौ हस्तौ व्यावृतौ तालवृन्तवत् /
उद्वृत्ताविति विज्ञेयावथवा तालवृन्तकौ // ना. शा_९.१८६ //
चतुरस्त्रस्थितौ हस्तौ हंसपक्षकृतौ तथा /
तिर्यक्स्थितौ चाभिमुखौ ज्ञेयौ तालमुखाविति // ना. शा_९.१८७ //

तावेव मणिबन्धान्ते स्वस्तिकाकृतिसंस्थितौ /
स्वस्तिकाविति विख्यातौ विच्युतौ विप्रकीर्णकौ // ना. शा_९.१८८ //
अलपल्लवसंस्थानावुर्ध्वास्यौ पद्मकोशकौ /
अरालखटकाख्यौ चाप्यरालखटकामुखौ // ना. शा_९.१८९ //
तथै मणिबन्धान्ते ह्यरालौ विच्युतावुभौ /
ज्ञेयौ प्रयोक्तृभिर्नित्यमराल खटकाविति // ना. शा_९.१९० //
भुजांसकूर्पराग्रैस्तु कुटिलावर्तितौ करौ /
पराङ्गमुखतलाविद्धौ ज्ञेयावाविद्धवक्रकौ // ना. शा_९.१९१ //
हस्तौ तु सर्पशिरसौ मध्यमाङ्गुष्ठकौ यदा /
तिर्यक्प्रसारितास्यौ च तदा सूचीमुखौ स्मृतौ // ना. शा_९.१९२ //
सर्पशीर्षौ यदा हस्तौ भवेतां स्वस्तिकस्थितौ /
मध्यप्रसारिताङ्गुष्ठौ ज्ञेयौ सूचीमुखौ तदा // ना. शा_९.१९३ //
रेचितौ चापि विज्ञेयौ हंसपक्षौ द्रुतभ्रमौ /
प्रसारितोत्तानतलौ रेचिताविति संज्ञितौ // ना. शा_९.१९४ //
चतुरस्रो भवेद्वामः सव्यहस्तश्च रेचितः /
विज्ञेयौ नृत्ततत्त्वज्ञैर्धरेचितसंज्ञकौ // ना. शा_९.१९५ //
अञ्चितौ कूर्परांसौ तु त्रिपताकौ करौ कृतौ /
किञ्चित्तिर्यग्गतावेतौ स्मृतावुत्तनवञ्चितौ // ना. शा_९.१९६ //
मणिबन्धमुक्तौ तु पताकौ पल्लवौ स्मृतौ /
बाहुशीर्षाद्विनिष्क्रान्तौ नितम्बाविति कीर्तितौ // ना. शा_९.१९७ //
केशदेशाद्विनिष्क्रान्तौ परिपार्श्वोत्थितौ यदा /
विज्ञेयो केशबन्धौ तु करवाचार्यसम्मतौ // ना. शा_९.१९८ //
तिर्यक्प्रसारितौ चैव पार्श्वसंस्थौ तथैव च /
लताख्यौ च करौ ज्ञेयौ नृत्ताभिनयनं प्रति // ना. शा_९.१९९ //
समुन्नतो लताहस्तः पार्श्वात्पार्श्व विलोलितः /
त्रिपताको ऽपरः कर्णे करिहस्तः प्रकीर्तितः // ना. शा_९.२०० //
कटिशीर्षनिविष्टाग्रौ त्रिपताकौ यदा करौ /
पक्षवञ्चितकौ हस्तौ तदा ज्ञेयौ प्रयोक्तृभिः // ना. शा_९.२०१ //
तावेव तु परावृत्तौ पक्षप्रद्योतकौ स्मृतौ /
अधोमुखतलाविद्धौ ज्ञेयौ गरुडपक्षकौ // ना. शा_९.२०२ //
हंसपक्षकृतौ हस्तौ व्यावृत्तपरिवर्तितौ /
तथा प्रसारितभुजौ दण्डपक्षाविति स्मृतौ // ना. शा_९.२०३ //
ऊर्ध्वमण्डलिनौ हस्तावूर्ध्वदेशविवर्तनात् /
तावेव पार्श्वविन्यस्तौ पार्श्वमण्डलिनौ स्मृतौ // ना. शा_९.२०४ //
उद्वेष्टितौ भवेदेकौ द्वितीयश्चापवेष्टितः /
भ्रमितावुरसः स्थाने ह्युरोमण्डलिनौ स्मृतौ // ना. शा_९.२०५ //
अलपल्लवकारालावुरोद्वभ्रमणक्रमात् /
पार्श्वावर्तश्च विज्ञेयावुरः पार्श्वार्धमण्डलौ // ना. शा_९.२०६ //
हस्तौ तु मणीबन्धान्ते कुञ्चितावञ्चितौ यदा /

खटकाख्यौ तु तौ स्यातां मुष्टिकस्वस्तिकौ तदा // ना. शा_९.२०७ //
पद्मकोशौ यदा हस्तौ व्यावृत्तपरिवर्तितौ /
नलिनीपद्मकोशौ तु तदा ज्ञेयौ प्रयोक्तृभिः // ना. शा_९.२०८ //
करावुद्वेष्टिताग्रौ तु प्रविधायालपल्लवौ /
ऊर्ध्वप्रसरिताविद्धौ कर्तव्यावुल्बणाविति // ना. शा_९.२०९ //
पल्लवौ च शिरोदेशे संप्राप्तौ ललितौ स्मृतौ /
कर्पूरस्वस्तिकगतौ लताख्यौ वलिताविति // ना. शा_९.२१० //
करणे तु प्रयोक्तव्यो नृत्तहस्तो विशेषतः /
तथार्थाभिनये चैव पताकायाः प्रयोक्तृभिः // ना. शा_९.२११ //
संकरो ऽपि भवेत्तेषां प्रयोगो ऽर्थवशात्पुनः /
प्राधान्येन पुनः संज्ञा नाट्ये नृत्ते करेष्विह // ना. शा_९.२१२ //
वियुताः संयुताश्चैव नृत्तहस्ताः प्रकीर्तिताः /
अतः परं प्रवक्ष्यामि करान् करणसंश्रयान् // ना. शा_९.२१३ //
सर्वेषामेव हस्तानां नाट्यहस्तनिदेशिभिः /
विधातव्या प्रयत्नेन करणं तु चतुर्विधम् // ना. शा_९.२१४ //
अपवेष्टितमेकं स्यात् उद्वेष्टितमथापरम् /
व्यावर्तितं तृतीयं तु चतुर्थं परिवर्तितम् // ना. शा_९.२१५ //
आवेष्ट्यन्ते यदङ्गुल्यस्तर्जनाद्या यथाक्रमम् /
अभ्यन्तरेण करणं तदावेष्टितमुच्यते // ना. शा_९.२१६ //
उद्वेष्ट्यन्ते यदङ्गुल्यः तर्जन्याद्या बहिर्मुखम् /
क्रमशः करणं विप्रास्तदुद्वेष्टितमुच्यते // ना. शा_९.२१७ //
आवर्त्यन्ते कनिष्ठाद्या ह्यङ्गुल्यो ऽभ्यन्तरेण तु /
यथा क्रमेण करणं तद् व्यावर्तितमुच्यते // ना. शा_९.२१८ //
उद्वर्त्यन्ते कनिष्ठाद्या बाह्यतः क्रमशो यदा /
अङ्गुल्यः करणं विप्रास्तदुक्तं परिवर्तितम् // ना. शा_९.२१९ //
नृत्ते ऽभिनययोगे वा पाणिभिर्वर्तनाश्रये /
मुखभ्रुनेत्रयुक्तानि करणानि प्रयोजयेत् // ना. शा_९.२२० //
तिर्यक्तथोर्ध्वसंस्थो ह्यधोमुखश्चाञ्चितो ऽपविद्धस्तु /
मण्डलगतिस्तथा स्वस्तिकश्च पृष्ठानुसारि च // ना. शा_९.२२१ //
उद्वेष्टितः प्रसारित इत्येते वै स्मृताः प्रकारास्तु /
बाह्वोरिति करणगता विज्ञेया नित्यं नृत्तप्रयोक्तृभिः // ना. शा_९.२२२ //
हस्तानां करणविधिर्मया समासेन निगदितो विप्राः /
अत ऊर्ध्वं व्याख्यास्ये हृदयोदरपार्श्वकर्माणि // ना. शा_९.२२३ //
आभुग्नमथ निर्भुग्नं तथा चैव प्रकम्पितम् /
उद्वाहितं समं चैव उरः पञ्चविधं स्मृतम् // ना. शा_९.२२४ //
निम्नमुन्नतपृष्ठं च व्याभुग्नांसं श्लथं क्वचित्
आभुग्नं तदुरो ज्ञेयं कर्म चास्य निबोधत // ना. शा_९.२२५ //
संभ्रमविषादमूर्च्छाशोकभयव्याधिहृदयशल्येषु /
कार्यं शीतस्पर्शे वर्षे लाजान्विते ऽर्थवशात् // ना. शा_९.२२६ //

स्तब्धं च निम्नपृष्ठं च निर्भुग्नांसं समुन्नतम् /
उरो निर्भुग्नमेतद्धि कर्म चास्य निबोधत // ना. शा_९.२२७ //
स्तम्भे मानग्रहणे विस्मयदृष्टे च सत्यवचने च /
अहमिति च दर्पवचने गर्वोत्सेके तु कर्तव्यम् // ना. शा_९.२२८ //
[दीर्घनिश्वसिते चैव जृम्भणे मोटने तथा /
बिब्बोके च पुनः स्त्रीणां तद्विज्ञेयं प्रयोक्तृभिः ] // ना. शा_९.२२९ //
ऊर्ध्वोत्क्षेपैरुरो यत्र निरन्तरकृतैः कृतम् /
प्रकम्पितं तु विज्ञेयमुरो नाट्यप्रयोक्तृभिः // ना. शा_९.२३० //
हसितरुदितादिसंभ्रमभयश्रमव्याधिपीडितार्थेषु /
नानाभावोपगतं कार्यमुरो नाट्ययोगेषु // ना. शा_९.२३१ //
हसितरुदितेषु कार्ये श्रमे भये श्वसकाशयोश्चैव /
हिक्कादुःखे च तथा नाट्यज्ञैरर्थयोगेन // ना. शा_९.२३२ //
उद्वाहितमूर्ध्वगतमुरो ज्ञेयं प्रयोक्तृभिः /
दीर्घोच्च्वसनता लोके जृम्भनादिषु चेक्ष्यते // ना. शा_९.२३३ //
सर्वैः ससौष्ठवैरङ्गैश्चतुरस्रकृतैः कृतम् /
उरः समन्. तु विज्ञेयं स्वस्थं सौष्ठवसंयुतम् // ना. शा_९.२३४ //
एतदुक्तं मय सम्यगरसस्तु विकल्पनम् /
अत ऊर्ध्वं प्रवक्ष्यामि पार्श्वयोरिह लक्षणम् // ना. शा_९.२३५ //
नतं समुन्नतं चैव प्रसारितविवर्तितो /
तथापसृतमेवं तु पार्श्वयोः कर्म पञ्चधा // ना. शा_९.२३६ //
कटिर्भवेत्तु व्याभुग्ना पार्श्वमाभुग्नमेव च /
तथैवापसृतांसं च किञ्चित्पार्श्वनतं स्मृतम् // ना. शा_९.२३७ //
तस्यैव चापरं पार्श्वं विपरीतं तु युक्तितः /
कटीपार्श्वभुजांसैश्चाभ्युन्नतैरुतं भवेत् // ना. शा_९.२३८ //
आयामनादुभयतः पाश्वयोः स्यात् प्रसारितम् /
परिवर्तात्रिकस्यापि विवर्तितमिहेष्यते // ना. शा_९.२३९ //
विवर्तितापनयनाद् भवेदपसृतं पुनः /
पार्श्वलक्षणमित्युक्तं विनियोगं निबोधत // ना. शा_९.२४० //
उपसर्पे नतं कार्यमुन्नतं चापसर्पणे /
प्रसारितं प्रहर्षादौ परिवृत्ते विवर्तितम् // ना. शा_९.२४१ //
विनिवृत्ते त्वपसृतं पार्श्वमर्थवशाद्भवेत् /
एतानि पार्श्वकर्माणि जठरस्य निबोधत // ना. शा_९.२४२ //
क्षामं खल्वं च पूर्णं च सम्प्रोक्तमुदरं त्रिधा /
तनु क्षामं नतं खल्वं पूर्णमाध्मातमुच्यते // ना. शा_९.२४३ //
क्षामं हास्ये ऽथ रुदिते निःश्वासे जृम्भने भवेत् /
व्याधिते तपसि श्रान्ते क्षुधार्ते खल्वमिष्यते // ना. शा_९.२४४ //
पूर्णमुच्च्वसिते स्थूले व्याधितात्यशनादिषु /
इत्येतदुदरं प्रोक्तं कट्याः कर्म निबोधत // ना. शा_९.२४५ //
अन्ये तु

क्षामं खल्वं समं पूर्णमुदरं स्याच्चतुर्विधम् /
चिना चैव निवृत्ता च रेचिता कम्पिता तथा /
उद्वाहिता चैव कटी नाट्ये नृत्ते च पञ्चधा // ना. शा_९.२४६ //
कटी मध्यस्य वलनात्च्छिना संपरिकीर्तिता /
पराङ्ग्मुखस्याभिमुखी निवृत्ता स्यान्निवर्तिता // ना. शा_९.२४७ //
सर्वतो भ्रमणाच्चापि विज्ञेया रेचिता कटी /
तिर्यग्गतागता क्षिप्ता कटी ज्ञेया प्रकम्पिता // ना. शा_९.२४८ //
नितम्बपार्श्वोद्वहनात् शनैरुद्वाहिता कटी /
कटीकर्म मया प्रोक्तं विनियोगं निबोधत // ना. शा_९.२४९ //
चिन्ना व्यायामसम्भ्रान्तव्यावृत्तप्रेक्षणादिषु /
निवृत्ता वर्तने चैव रेचिता भ्रमणादिषु // ना. शा_९.२५० //
कुब्जवामननीचानां गतौ कार्या प्रकम्पिता /
स्थूलेषूद्वाहिओता योज्या स्त्रीणां लीलागतेषु च // ना. शा_९.२५१ //
कम्पनं वलनं चैव स्तम्भनोद्वर्तने तथा /
निवर्तनं च पञ्चैतान्यूरुकर्माणि कारयेत् // ना. शा_९.२५२ //
नमनोन्नमनात्पार्ष्णेर्मुहुः स्यादूरुकम्पनम् /
गच्चेदभ्यन्तरं जानु यत्र तद्वलनं स्मृतम् // ना. शा_९.२५३ //
स्तम्भनं चापि विज्ञेयमपविद्धक्रियात्मकम् /
वलिताविद्धकरणादूर्वोरुद्वर्तनं स्मृतम् // ना. शा_९.२५४ //
पार्ष्णिरभ्यन्तरं गच्चेद्यत्र तत्तु निवर्तनम् /
गतिष्वधमपात्रणां भये चापि हि कम्पनम् // ना. शा_९.२५५ //
वलनं चैव हि कर्तव्यं स्त्रीणां स्वैरपरिक्रमे /
साध्वसे च विषादे च स्तम्भनं तु प्रयोजयेत् // ना. शा_९.२५६ //
व्यायामे ताण्डवे चैव कार्यमुद्वर्तनं बुधैः /
निवर्तनं तु कर्तव्यं सम्भ्रादिपरिभ्रमे // ना. शा_९.२५७ //
यथादर्शनमन्यच्च लोकाद् ग्राह्यं प्रयोक्तृभिः /
इत्यूर्वोर्लक्षणं प्रोक्तं जङ्घायास्तु निबोधत // ना. शा_९.२५८ //
आवर्तितं नतं क्षिप्तमुद्वाहितमथापि च /
परिवृत्तं तथा चैव जङ्घाकर्माणि पञ्चधा // ना. शा_९.२५९ //
वामो दक्षिणपार्श्वेन दक्षिणश्चापि वामतः /
पादो यत्र व्रजेद्विप्राः तदावर्तितमुच्यते // ना. शा_९.२६० //
जङ्घास्वस्तिकयोगेन क्रमादावर्तितं नयेत् /
जानुनः कुञ्चनाच्चैव नतं ज्ञेयं प्रयोक्तृभिः /
विक्षेपाच्चैव जङ्घायाः क्षिप्तमित्यभिधीयते // ना. शा_९.२६१ //
[नतं स्याज्जानुनमनात् क्षिप्तं विक्षेपणाद् बहि] /
उद्वाहितं च विज्ञेयमूर्ध्वमूद्वाहनादपि /
प्रतीपनयनं यत्तु परिवृत्तं तदुच्यते // ना. शा_९.२६२ //
आवर्तितं प्रयोक्तव्यं विदूषकपरिक्रमे /
नतं चापि हि कर्तव्यं स्थानासनगतादिषु // ना. शा_९.२६३ //

क्षिप्तं व्यायामयोगेषु ताण्डवे च प्रयुज्यते /
तथा चोद्वाहितं कुर्यादाविद्धगमनादिषु // ना. शा_९.२६४ //
ताण्डवेषु प्रयोक्तव्यं परिवृत्तं प्रयोक्तृभिः /
इत्येतज्जङ्घयोः कर्म पादयोस्तु निबोधत // ना. शा_९.२६५ //
उद्घट्टितः समश्चैव तथाग्रतलसञ्चरः /
अञ्चितः कुञ्चितश्चैव पादः पञ्चविध स्मृतः // ना. शा_९.२६६ //
स्थित्वा पादतलाग्रेण पार्ष्णिर्भूमौ निपात्यते /
यस्य पादस्य करणे भवेदुद्घट्टितस्तु सः // ना. शा_९.२६७ //
अयमुद्वेष्टितकरणे त्वनुकरणार्थं प्रयोगमासाद्य /
द्रुतमध्यमप्रचारः सकृदसकृदा प्रयोक्तव्यः // ना. शा_९.२६८ //
स्वभावरचिते भूमौ समस्थाने च यो भवेत् /
समः पादः स विज्ञेयः स्वभावाभिनयाश्रयः // ना. शा_९.२६९ //
स्थिरस्वभावाभिनये नानाकरणसंश्रये /
चलितश्च पुनः कार्यो विधिज्ञैः पादरेचिते // ना. शा_९.२७० //
समस्यैव यदा पार्ष्णिः पादस्याभ्यन्तरे भवेत् /
बहिः पार्श्वस्थितो ऽङ्गुष्ठस्त्र्यश्रपादस्तु स स्मृतः // ना. शा_९.२७१ //
त्यक्त्वा (कृत्वा?) समपदं स्थानमश्वक्रान्ते तथैव च /
स्याद्विक्लवादिष्वर्थेषु त्र्यश्रः पादो यथाविधिः // ना. शा_९.२७२ //
अस्यैव समपादस्य पार्ष्णिरभ्यन्तरे भवेत् /
त्र्यश्रपादः स विज्ञेयः स्थानकादिषु संश्रयः // ना. शा_९.२७३ //
उत्क्षिप्ता तु भवेत्पार्ष्णिः प्रसृतोङ्गुष्ठकस्तथा /
अङ्गुल्यश्चाञ्चिताः सर्वा पादे ऽग्रतलसञ्चरः // ना. शा_९.२७४ //
तोदननिकुट्टने स्थितनिशुम्भने भूमिताडने भ्रमणे /
विक्षेपविविधरेचकपार्ष्णिकृतागमनमेतेन // ना. शा_९.२७५ //
पार्ष्णिर्यस्याञ्चिता भूमौ पादमग्रतलं तथा /
अङ्गुल्यश्चाञ्चिताः सर्वाः स पादस्त्वञ्चितः स्मृतः // ना. शा_९.२७६ //
पादाग्रतलसञ्चारे वर्तितोद्वर्तिते तथा /
एव पादाहते कार्यो नानाभ्रमरकेषु च // ना. शा_९.२७७ //
उत्क्षिप्ता यस्य पार्ष्णी स्यादङ्गुल्यः कुङ्चितास्तथा /
तथा कुञ्चितमध्यश्च स पादं कुञ्चितः स्मृतः // ना. शा_९.२७८ //
उदत्तगमने चैव वर्तितोद्वर्तिते तथा /
उत्क्षिप्ता तु भवेत्पार्ष्णिरङ्गुष्ठाग्रेण संस्थितः // ना. शा_९.२७९ //
वामश्चैव स्वभावस्थः सूचीपादः प्रकीर्तितः /
नृत्ते नूपुरकरणे प्रयोगस्तस्य कीर्त्यते // ना. शा_९.२८० //
अतिक्रान्तक्रमे चैव पादमेतं प्रयोजयेत् /
पादजङ्घोरुकरणं कर्म कार्य प्रयोक्तृभिः // ना. शा_९.२८१ //
पादस्य करणं सर्व जङ्घोरुकृतमिष्यते /
यथा पादः प्रवर्तेत तथैवोरुः प्रवर्तते // ना. शा_९.२८२ //
अनयोः समानकरणात् पादचारी प्रयोजयेत् /

इत्येतदङ्गजं प्रोक्तं लक्षणं कर्म चैव हि // ना. शा_९.२८३ //
अतः परं प्रवक्ष्यामि चारीव्यायामलक्षणम् // ना. शा_९.२८४ //

इति भारतीये नाट्यशास्त्रे अङ्गाभिनयो नाम नवमो ऽध्यायः

---

अथ दशमो ऽध्यायः

एवं पादस्य जङ्घाया ऊर्वोः कट्यास्तथैव च /
समानकरणे चेष्टा सा चारीत्यभिधीयते // ना. शा_१०.१ //
विधानोपगताश्चार्यो व्यायच्चन्ते परस्परम् /
यस्मादङ्गसमायुक्तास्तस्माद्व्यायाम उच्यते // ना. शा_१०.२ //
एकपादप्रचारो यः सा चारीत्यभिसंज्ञिता /
द्विपादक्रमणं यत्तु करणं नाम तद्भवेत् // ना. शा_१०.३ //
करणानां समायोगः खण्डमित्यभिधीयते /
खण्डैस्त्रिभिश्चतुर्भिर्वा संयुक्तं मण्डलं भवेत् // ना. शा_१०.४ //
चारीभिः प्रसृतं नृत्तं चारीभिश्चेष्टितं तथा /
चारीभिः शस्त्रमोक्षश्च चार्यो युद्धे च कीर्तिताः // ना. शा_१०.५ //
यदेतत्प्रस्तुतं नाट्यं तच्चारीष्वेव संज्ञितम् /
नहि चार्या विना किञ्चिन्नाट्ये ऽङ्गं संप्रवर्तते // ना. शा_१०.६ //
तस्माच्चारीविधानस्य सम्प्रवक्ष्यामि लक्षणम् /
या यस्मिंस्तु यथा योज्या नृत्ते युद्धे गतौ तथा // ना. शा_१०.७ //
समपादा स्थितावर्ता शकटास्या तथैव च /
अध्यर्धिका चाषगतिर्विच्यवा च तथापरा // ना. शा_१०.८ //
एडकाक्रीडिता बद्धा उरुद्वृत्ता तथाड्डिता /
उत्स्पन्दिता च जनिता स्यन्दिता चापस्यन्दिता // ना. शा_१०.९ //
समोत्सरितमत्तल्ली मत्तल्ली चेति षोडश /
एता भौम्यः स्मृताश्चार्यः शृणुताकाशिकीः पुनः // ना. शा_१०.१० //
अतिक्रान्ता ह्यपक्रान्ता पार्श्वक्रान्ता तथैव च /
ऊर्ध्वजानुश्च सूची च तथा नूपुरपादिका // ना. शा_१०.११ //
डोलपादा तथाक्षिप्ता आविद्धोद्वृत्तसंज्ञिते /
विद्युद्भ्रान्ता ह्यलाता च भुजङ्गत्रासिता तथा // ना. शा_१०.१२ //
मृगप्लुता च दण्डा च भ्रमरी चेति षोडश /
आकाशिक्यः स्मृता ह्येता लक्षणं च निबोधत // ना. शा_१०.१३ //
पादैर्निरन्तरकृतैस्तथा समनखैरपि /
समपादा स्मृता चारी विज्ञेया स्थानसंश्रया // ना. शा_१०.१४ //
भूमिघृष्टेन पादेन कृत्वाभ्यन्तरमण्डलम् /
पुनरुत्सादयेदन्यं स्थितावर्त्ता तु सा स्मृता // ना. शा_१०.१५ //
निषण्णाङ्गस्तु चरणं प्रसार्य तलसञ्चरम् /

उद्वाहितमुरः कृत्वा शकटास्यां प्रयोजयेत् // ना. शा_१०.१६ //
सव्यस्य पृष्ठतो वामश्चरणस्तु यदा भवेत् /
तस्यापसर्पणं चैव ज्ञेया साध्यर्धिका बुधैः // ना. शा_१०.१७ //
पादः प्रसारितः सव्यः पुनश्चैवोपसर्पितः /
वामः सव्यापसर्पी च चाषगत्यां विधीयते // ना. शा_१०.१८ //
विच्यवात् समपादाया विच्यवां सम्प्रयोजयेत् /
निकुट्टयंस्तलाग्रेण पादस्य धरणीतलम् // ना. शा_१०.१९ //
तलसञ्चरपादाभ्यामुत्प्लुत्य पतनं तु यत् /
पर्यायतश्च क्रियते एडकाक्रीडिता तु सा // ना. शा_१०.२० //
अन्योन्यजङ्घासंवेगात् कृत्वा तु स्वस्तिकं ततः /
ऊरुभ्याम् वलनं यस्मात् सा बद्धा चार्युदाहृता // ना. शा_१०.२१ //
तलसञ्चरपादस्य पार्ष्णिर्बाह्योन्मुखी यदा /
जङ्घाञ्चिता तथोद्वृत्ता ऊरुद्वृत्तेति सा स्मृता // ना. शा_१०.२२ //
अग्रतः पृष्ठतो वापि पादस्तु तलसञ्चरः /
द्वितीयपादो निर्घृष्टः यस्यां स्यादड्डिता तु सा // ना. शा_१०.२३ //
शनैः पादो निवर्तेत बाह्येनाभ्यन्तरेण च /
यद्रेचकानुसारेण सा चार्युत्स्यन्दिता स्मृता // ना. शा_१०.२४ //
मुष्टिहस्तश्च वक्षःस्थः करो ऽन्यश्च प्रवर्तितः /
तलसञ्चरपादश्च जनिता चार्युदाहृता // ना. शा_१०.२५ //
पञ्चतालान्तरं पादं प्रसार्य स्यन्दितां न्यसेत् /
द्वितीयेन तु पादेन तथापस्यन्दितामपि // ना. शा_१०.२६ //
तलसञ्चरपादाभ्याम् घूर्णमानोपसर्पणैः /
समोत्सरितमत्तल्ली व्यायामे समुदाहृता // ना. शा_१०.२७ //
उभाभ्यामपि पादाभ्यां घूर्णमानोपसर्पणैः /
उद्वेष्टितापविद्धैश्च हस्तैर्मत्तल्ल्युदाहृता // ना. शा_१०.२८ //
एता भौम्यः स्मृताश्चार्यो नियुद्धकरणाश्रयाः /
आकाशकीनां चारीणां सम्प्रवक्ष्यामि लक्षणम् // ना. शा_१०.२९ //
कुञ्चितं पादमुत्क्षिप्य पुरतः सम्प्रसारयेत् /
उत्क्षिप्य पातयेच्चैनमतिक्रान्ता तु सा स्मृता // ना. शा_१०.३० //
ऊरुभ्यां वलनं कृत्वा कुञ्चितं पादमुद्धरेत् /
पार्श्वे विनिक्षिपेच्चैनमपक्रान्ता तु सा स्मृता // ना. शा_१०.३१ //
कुञ्चितं पादमुत्क्षिप्य पार्श्वेनोत्पतनं न्यसेत् /
उद्वट्टितेन पादेन पार्श्वक्रान्ता विधीयते // ना. शा_१०.३२ //
कुञ्चितं पादमुत्क्षिप्य जानुस्तनसमं न्यसेत् /
द्वितीयं च क्रमात् स्तब्धमूर्ध्वजानुः प्रकीर्तिता // ना. शा_१०.३३ //
कुञ्चितं पादमुत्क्षिप्य जानूर्ध्वं सम्प्रसारयेत् /
पातयेच्चाग्रयोगेन सा सूची परिकीर्तिता // ना. शा_१०.३४ //
पृष्ठतो ह्यञ्चितं कृत्वा पादमग्रतलेन तु /
द्रुतं निर्यातयेद्भूमौ चारी नूपुरपादिका // ना. शा_१०.३५ //

कुञ्चितं पादमुत्क्षिप्य पार्श्वात्पार्श्वं तु दोलयेत् /
पातयेदञ्चितं चैवं दोलपादा तु सा स्मृता // ना. शा_१०.३६ //
कुञ्चितं पादमुत्क्षिप्य आक्षिप्य त्वञ्चितं न्यसेत् /
जङ्घास्वस्तिकसंयुक्ता चाक्षिप्ता नाम सा स्मृता // ना. शा_१०.३७ //
स्वस्तिकस्याग्रतः पादः कुञ्चितस्तु प्रसारितः /
निपतेदञ्चिताविद्ध आविद्धा नाम सा स्मृता // ना. शा_१०.३८ //
पादमाविद्धमावेष्ट्य समुत्क्षिप्य निपातयेत् /
परिवृत्य द्वितीयं च सोद्वृत्ता चार्युदाहृता // ना. शा_१०.३९ //
पृष्ठतो वलितं पादं शिरोघृष्टं प्रसारयेत् /
सर्वतो मण्डलाविद्धं विद्युद्भ्रान्ता तु सा स्मृता // ना. शा_१०.४० //
पृष्ठः प्रसारितः पादो वलितो ऽभ्यन्तरीकृतः /
पार्ष्णिप्रपतितश्चैव ह्यलाता सम्प्रकीर्तिता // ना. शा_१०.४१ //
कुञ्चितं पादमुत्क्षिप्य त्र्यश्रमूरुं विवर्तयेत् /
कटिजानुविवर्ताच्च भुजङ्गत्रासिता भवेत् // ना. शा_१०.४२ //
अतिक्रान्तक्रमं कृत्वा समुत्प्लुत्य निपातयेत् /
जङ्घाञ्चितोपरिक्षिप्ता सा ज्ञेया हरिणप्लुता // ना. शा_१०.४३ //
नूपुरं चरणं कृत्वा पुरतः सम्प्रसारयेत् /
क्षिप्रमाविद्धकरणं दण्डपादा तु सा स्मृता // ना. शा_१०.४४ //
अतिक्रान्तक्रमं कृत्वा त्रिकं तु परिवर्तयेत् /
द्वितीयपादभ्रमणात्तलेन भ्रमरी स्मृता // ना. शा_१०.४५ //
आकाशिक्यः स्मृता ह्येता ललिताङ्गक्रियात्मकाः /
धनुर्वज्रासिशस्त्राणां प्रयोक्तव्या प्रयोक्तृभिः // ना. शा_१०.४६ //
अग्रगौ पृष्ठगौ वापि ह्यनुगौ चापि योगतः /
पादयोस्तु द्विजा हस्तौ कर्तव्यौ नाट्ययोक्तृभिः // ना. शा_१०.४७ //
यतः पादस्ततो हस्तो यतो हस्तस्ततस्त्रिकम् /
पादस्य निर्गमं ज्ञात्वा तथोपाङ्गानि योजयेत् // ना. शा_१०.४८ //
पादचार्यां यथा पादो धरणीमेव गच्चति /
एवं हस्तश्चरित्वा तु कटिदेशं समाश्रयेत् // ना. शा_१०.४९ //
एताश्चार्यो मया प्रोक्ता ललिताङ्गक्रियात्मकाः /
स्थानान्यासां प्रवक्ष्यामि सर्वशस्त्रविमोक्षणे // ना. शा_१०.५० //
वैष्णवं समपादं च वैशाखं मण्डलं तथा /
प्रत्यालीढं तथालीढं स्थानान्येतानि षण् नृणां // ना. शा_१०.५१ //
द्वौ तालावर्धतालश्च पादयोरन्तरं भवेत् /
तयोः समस्थितस्त्वेकः त्र्यश्रः पक्षस्थितो ऽपरः // ना. शा_१०.५२ //
किञ्चिदञ्चितजङ्घं च सौष्ठवाङ्गपुरस्कृतम् /
वैष्णवं स्थानमेतद्धि विष्णुरत्राधिदैवतम् // ना. शा_१०.५३ //
स्थानेनानेन कर्तव्यः संल्लापस्तु स्वभावजः /
नानाकार्यान्तरापेतैर्नृभिरुत्तममध्यमैः // ना. शा_१०.५४ //
चक्रस्य मोक्षणे चैव धारणे धनुषस्तथा /

धैर्यदानाङ्गलीलासु तथा क्रोधे प्रयोजयेत् // ना. शा_१०.५५ //
इदमेव विपर्यस्तं प्रणयक्रोध इष्यते /
उपालम्भकृते चैव प्रणयोद्वेगयोस्तथा // ना. शा_१०.५६ //
शङ्कासूयोग्रताचिन्तामतिस्मृतिषु चैव हि /
दैन्ये चपलतायोगे गर्वाभीष्टेषु शक्तिषु // ना. शा_१०.५७ //
शृङ्गाराद्भुतबीभत्सवीरप्राधान्ययोजितम् /
समपादे समौ पादौ तालमात्रान्तरस्थितौ // ना. शा_१०.५८ //
स्वभावसौष्ठवोपेतौ ब्रह्मा चात्राधिदैवतम् /
अनेन कार्यं स्थानेन विप्रमङ्गलधारणम् // ना. शा_१०.५९ //
रूपणे पक्षिणां चैव वरं कौतुकमेव च /
स्वस्थानं स्यन्दनस्थानां विमानस्थायिनामपि // ना. शा_१०.६० //
लिङ्गस्थानां व्रतस्थानां स्थानमेतत्तु कारयेत् /
तालास्त्रयो ऽर्धतालश्च पादयोरन्तरं भवेत् // ना. शा_१०.६१ //
तालांस्त्रीनर्धतालांश्च निषण्णोरुं प्रकल्पयेत् /
त्र्यश्रौ वक्षःस्थितौ चैव तत्र पादो प्रयोजयेत् // ना. शा_१०.६२ //
वैशाखस्थानमेतद्धि स्कन्दश्चात्राधिदैवतम् /
स्थानेनानेन कर्तव्यमश्वानां वाहनं बुधैः // ना. शा_१०.६३ //
व्यायामनिर्गमश्चैव स्थूलपक्षिनिरूपणम् /
शराणां च समुत्क्षेपो व्यायामकरणे तथा // ना. शा_१०.६४ //
रेचकेषु च कर्तव्यमिदमेव प्रयोक्तृभिः /
ऐन्द्रे तु मण्डले पादौ चतुस्तालान्तरस्थितौ // ना. शा_१०.६५ //
त्र्यश्रौ पक्षःस्थितौ चैव कटिजानू समौ तथा /
धनुर्वज्रासिशस्त्राणि मण्डलेन प्रयोजयेत् // ना. शा_१०.६६ //
वाहनं कुञ्जराणां तु स्थूलपक्षिनिरूपणम् /
अस्यैव दक्षिणं पादं पञ्च तालान् प्रसार्य तु // ना. शा_१०.६७ //
आलीढं स्थानकं कुर्याद् रुद्रश्चात्राधिदैवतम् /
अनेन कार्यं स्थानेन वीररौद्रकृतं तु यत् // ना. शा_१०.६८ //
उत्तरोत्तरसञ्जल्पो रोषामर्षकृतस्तु यः /
मल्लानाञ्चैव संफेटः शत्रूणां च निरूपणम् // ना. शा_१०.६९ //
तथाभिद्रवणं चैव शस्त्राणां चैव मोक्षणम् /
कुञ्चितं दक्षिणं कृत्वा वामं पादं प्रसार्य च // ना. शा_१०.७० //
आलीढपरिवर्तस्तु प्रत्यालीढमिति स्मृतम् /
आलीढसंहितं शस्त्रं प्रत्यालीढेन मोक्षयेत् // ना. शा_१०.७१ //
नानाशस्त्रविमोक्षो हि कार्यो ऽनेन प्रयोक्तृभिः /
न्यायाच्चैव हि विज्ञेयाश्चत्वारः शस्त्रमोक्षणे // ना. शा_१०.७२ //
भारतः सात्वतश्चैव वार्षगण्यो ऽथ कैशिकः /
भारते तु कटीच्चेद्यं पादच्चेद्यं तु सात्वते // ना. शा_१०.७३ //
वक्षसो वार्षगण्ये तु शिरश्चेद्यन्तु कैशिके /
एभिः प्रयोक्तृभिर्न्यायैर्नानाचारीसमुत्थितैः // ना. शा_१०.७४ //

प्रविचार्य प्रयोक्तव्यं नानाशस्त्रविमोक्षणे /
न्यायाश्रितैरङ्गहारैर्न्यायाच्चैव समुत्थितैः // ना. शा_१०.७५ //
यस्माद् युद्धानि वर्तन्ते तस्मान्न्यायाः प्रकीर्तिताः /
वामहस्ते विनिक्षिप्य खेटकं शस्त्रफेटकम् // ना. शा_१०.७६ //
शस्त्रमादाय हस्तेन प्रविचारमथाचरेत् /
प्रसार्य च करौ सम्यक् पुनराक्षिप्य चैव हि // ना. शा_१०.७७ //
खेटकं भ्रामयेत् पश्चात् पार्श्वात् पार्श्वमथापि च /
शिरःपरिगमश्चापि कार्यः शस्त्रेण योक्तृभिः // ना. शा_१०.७८ //
कपोलस्यान्तरे वापि शस्त्रस्योद्वेष्टनं तथा /
पुनश्च खड्गहस्तेन ललितोद्वेष्टितेन च // ना. शा_१०.७९ //
खेटकेन च कर्तव्यः शिरःपरिगमो बुधैः /
एवं प्रचारः कर्तव्यो भारते शस्त्रमोक्षणे // ना. शा_१०.८० //
सात्वते च प्रवक्ष्यामि प्रविचारं यथाविधिः /
स एव प्रविचारस्तु खड्गखेटकयोः स्मृतः // ना. शा_१०.८१ //
केवलं पृष्ठतः शस्त्रं कर्तव्यं खलु सात्वते /
गतिश्च वार्षगण्ये ऽपि सात्वतेन क्रमेण तु // ना. शा_१०.८२ //
शस्त्रखेटकयोश्चापि भ्रमणं संविधीयते /
शिरः परिगमस्तद्वच्चस्त्रस्येह भवेत्तथा // ना. शा_१०.८३ //
उरस्युद्वेष्टनं कार्यं शस्त्रस्यांशे ऽथवा पुनः /
भारते प्रविचारो ऽयं कर्तव्यः स तु कैशिके // ना. शा_१०.८४ //
विभ्रमय्य तथा शस्त्रं केवलं मूर्ध्नि पातयेत् /
प्रविचारा प्रयोक्तव्या ह्येवमेते ऽङ्गलीलया // ना. शा_१०.८५ //
धनुर्वज्रासिशस्त्राणां प्रयोक्तव्या विमोक्षणे /
न भेद्यं नापि तु च्चेद्यं न चापि रुधिरस्रुतिः // ना. शा_१०.८६ //
रङ्गे प्रहरणे कार्यो न चापि व्यक्तघातनम् /
संज्ञामात्रेण कर्तव्यं शस्त्राणां मोक्षणं बुधैः // ना. शा_१०.८७ //
अथवाभिनयोपेतं कुर्याच्चेद्यं विधानतः /
अङ्गसौष्ठवसंयुक्तैरङ्गहारैर्विभूषितम् // ना. शा_१०.८८ //
व्यायामं कारयेत् सम्यक् लयतालसमन्वितम् /
सौष्ठवे हि प्रयत्नस्तु कार्यो व्यायामसेविभिः // ना. शा_१०.८९ //
सौष्ठवे लक्षणं प्रोक्तं वर्तनाक्रमयोजितम् /
शोभा सर्वैव नित्यं हि सौष्ठवं समुपाश्रिता // ना. शा_१०.९० //
अचञ्चलमकुब्जं चासन्नगात्रमथापि च /
नात्युच्चं चलपादञ्च सौष्ठवाङ्गं प्रयोजयेत् // ना. शा_१०.९१ //
कटी कर्णसमा यत्र कूर्परांसशिरस्तथा /
समुन्नतमुरश्चैव सौष्ठवं नाम तद्भवेत् // ना. शा_१०.९२ //
नहि सौष्ठवहीनाङ्गः शोभते नाट्यनृत्तयोः /
अत्र नित्यं प्रयत्नो हि विधेयो मध्यमोत्तमैः // ना. शा_१०.९३ //
नाट्यं नृत्तं च सर्वं हि सौष्ठवे संप्रतिष्ठितम् /

कटीनामभिचरौ हस्तौ वक्षश्चैव समुन्नतम् // ना. शा_१०.९४ //
वैष्णवं स्थानमित्यङ्गं चतुरश्रमुदाहृतम् /
परिमार्जनमादानं सन्धानं मोक्षणम् तथा // ना. शा_१०.९५ //
धनुषस्तु प्रयोक्तव्यं करणं तु चतुर्विधम् /
संमार्जनं परामर्षमादानं ग्रहणं क्रिया // ना. शा_१०.९६ //
सन्धानं शरविन्यासो विक्षेपो मोक्षणं भवेत् /
तैलाभ्यक्तेन गात्रेण यवागूमृदितेन च // ना. शा_१०.९७ //
व्यायामं कारयेत् श्रीमान् भित्तावाकालिके तथा /
योग्यायां मातृका भित्तिस्तस्माद्भित्तिं समाश्रयेत् // ना. शा_१०.९८ //
भित्तौ प्रसारिताङ्गन्तु व्यायामं कारयेन्नरम् /
बलार्थं च निषेवेत नस्यं बस्तिविधिं तथा // ना. शा_१०.९९ //
स्निग्धान्यन्यानि च तथा रसकं पानकं तथा /
आहारे ऽधिष्ठिताः प्राणाः प्राणे योग्याः प्रतिष्ठिताः // ना. शा_१०.१०० //
तस्माद्योग्याप्रसिध्यर्थमाहारे यत्नवान् भवेत् /
अशुद्धकायं प्रक्लान्तमतीवक्षुत्पिपासितम् // ना. शा_१०.१०१ //
अतिपीतं तथा भुक्तं व्यायामं नैव कारयेत् /
अचलैर्मधुरैगात्रैश्चतुरश्रेण वक्षसा // ना. शा_१०.१०२ //
व्यायामं कारयेद्धीमान् नरमङ्गक्रियात्मकम् /
एवं व्यायामसंयोगे कार्यश्चारीकृतो विधिः // ना. शा_१०.१०३ //
अत ऊर्ध्वं प्रवक्ष्यामि मण्डलानां विकल्पनम् ।

इति भरतीये नाट्यशास्त्रे चारीविधानो नाम दशमो ऽध्यायः ।

---

अथ एकादशो ऽध्यायः ।
एताश्चार्यो मया प्रोक्ता यथावच्चस्त्रमोक्षणे /
चारीसंयोगजानीह मण्डलानि निबोधत // ना. शा_११.१ //
अतिक्रान्तं विचित्रं च तथा ललितसञ्चरम् /
सूचीविद्धं दण्डपादं विहृतालातके तथा // ना. शा_११.२ //
वामबन्धं सललितं क्रान्तञ्चाकाशगामि च /
मण्डलानि द्विजश्रेष्ठाः ! भूमिगानि निबोधत // ना. शा_११.३ //
भ्रमरास्कन्दिते स्यातामावर्तं च ततः परम् /
समाक्रन्दितमप्याहुरेडकाक्रीडितं तथा // ना. शा_११.४ //
अड्डितं शकटास्यं च तथाऽध्यर्धकमेव च /
पिष्टकुट्टं च विज्ञेयं तथा चाषगतं पुनः // ना. शा_११.५ //
एतान्यपि दशोक्तानि भूमिगानीह नामतः /
आद्यं पादं च जनितं कृत्वोद्वाहितमाचरेत् // ना. शा_११.६ //
अलातं वामकं चैव पार्श्वक्रान्तं च दक्षिणम् /
सूचीवामं पुनश्चैव पार्श्वक्रान्तं च दक्षिणम् // ना. शा_११.७ //

सूचीं वामक्रमं दद्यादपक्रान्तं च दक्षिणम् /
सूचीवामं पुनश्चैव त्रिकं च परिवर्तयेत् // ना. शा_११.८ //
तथा दक्षिणमुद्वृत्तमलातञ्चैव वामकम् /
परिच्छिन्नं तु कर्तव्यं बाह्यभ्रमरकेण हि // ना. शा_११.९ //
अतिक्रान्तं पुनर्वामं दण्डपादञ्च दक्षिणम् /
विज्ञेयमेतद् व्यायामे त्वतिक्रान्तं तु मण्डलम् // ना. शा_११.१० //
आद्यं तु जनितं कृत्वा तेनैव च निकुट्टकम् /
आस्पन्दितं तु वामेन पार्श्वक्रान्तं च दक्षिणम् // ना. शा_११.११ //
वामं सूचीपदं दद्यादपक्रान्तञ्च दक्षिणम् /
भुजङ्गत्रासितं वाममतिक्रान्तं च दक्षिणम् // ना. शा_११.१२ //
उद्वृत्तं दक्षिणं चैवाऽलातं चैवात्र वामकम् /
पार्श्वक्रान्तं पुनः सव्यं सूचीवामक्रमं तथा // ना. शा_११.१३ //
विक्षेपो दक्षिणस्य स्यादपक्रान्तं च वामकम् /
बाह्यभ्रमरकं चैव विक्षेपं चैव योजयेत् // ना. शा_११.१४ //
विज्ञेयमेतद्व्यायामे विचित्रं नाम मण्डलम् /
कृत्वोर्ध्वजानुचरणमाद्यं सूचीं प्रयोजयेत् // ना. शा_११.१५ //
अपक्रान्तः पुनर्वाम आद्यः पार्श्वगतो भवेत् /
वामसूचीं पुनर्दद्यात् त्रिकञ्च परिवर्तयेत् // ना. शा_११.१६ //
पार्श्वक्रान्तं पुनश्चाद्यमतिक्रान्तञ्च वामकम् /
सूचीवामक्रमं कृत्वा ह्यपक्रान्तश्च वामकम् // ना. शा_११.१७ //
पार्श्वक्रान्तं पुनश्चाद्यमतिक्रान्तं च वामकम् /
परिच्छिन्नं च कर्तव्यं बाह्यभ्रमणकेन हि // ना. शा_११.१८ //
एष चारीप्रयोगस्तु कार्यो ललितसञ्चरैः /
सूचीवामपदं दद्यात् त्रिकञ्च परिवर्तयेत् // ना. शा_११.१९ //
पार्श्वक्रान्तः पुनश्चाद्यो वामो ऽतिक्रान्त एव च /
सूचीमाद्यं पुनर्दद्यादतिक्रान्तञ्च वामकम् // ना. शा_११.२० //
पार्श्वक्रान्तं पुनश्चाद्यं सूचीविद्धे तु मण्डले /
आद्यस्तु जनितो भूत्वा स च दण्डक्रमो भवेत् // ना. शा_११.२१ //
वामसूचीं पुनर्दद्यात् त्रिकञ्च परिवर्तयेत् /
उद्वृत्तो दक्षिणश्च स्यादलातश्चैव वामकः // ना. शा_११.२२ //
पार्श्वक्रान्तः पुनश्चाद्यो भुजङ्गत्रासितस्तथा /
अतिक्रान्तः पुनर्वामो दण्डपादश्च दक्षिणः // ना. शा_११.२३ //
वामसूचीत्रिकावर्तो दण्डपादे तु मण्डले /
आद्यं तु जनितं कृत्वा तेनैव च निकुट्टकम् // ना. शा_११.२४ //
आस्पन्दितं च वामेन ह्युद्वृत्तं दक्षिणेन च /
अलातं वामकं पादं सूचीं दद्यात्तु दक्षिणम् // ना. शा_११.२५ //
पार्श्वक्रान्तः पुनर्वाम आक्षिप्तो दक्षिणस्तथा /
समावर्त्य त्रिकं चैव दण्डपादं प्रसारयेत् // ना. शा_११.२६ //
सूचीवामपदं दद्यात् त्रिकं तु परिवर्तयेत् /

भुजङ्गत्रासितश्चाद्यो वामो ऽतिक्रान्त एव च // ना. शा_११.२७ //
एष चारीप्रयोगस्तु विहृते मण्डले भवेत् /
सूचीमाद्यक्रमं कृत्वा चाऽपक्रान्तं च वामकम् // ना. शा_११.२८ //
पार्श्वक्रान्तस्ततश्चाद्यो ऽप्यलातश्चैव वामकः /
भ्रान्त्वा चारीभिरेताभिः पर्यायेणाथ मण्डलम् // ना. शा_११.२९ //
षट्संख्यं सप्तसंख्यं च ललितैः पादविक्रमैः /
अधिकुर्यादपक्रान्तमतिक्रान्तं च वामकम् // ना. शा_११.३० //
अपक्रन्तः पुनश्चाद्यो वामो ऽतिक्रान्त एव च /
पादभ्रमरकश्च स्यादलाते खलु मण्डले // ना. शा_११.३१ //
सूचीमाद्यक्रमं कृत्वा ह्यपक्रान्तं च वामकम् /
आद्यो दण्डक्रमश्चैव सूचीपादस्तु वामकः // ना. शा_११.३२ //
कार्यस्त्रिकविवर्तश्च पार्श्वक्रान्तश्च दक्षिणः /
आक्षिप्तं वामकं कुर्यात् दण्डपार्श्वं च दक्षिणम् // ना. शा_११.३३ //
उरुद्वृत्तं च तेनैव कर्तव्यं दक्षिणेन तु /
सूचीवामक्रमं कृत्वा त्रिकं च परिवर्तयेत् // ना. शा_११.३४ //
अलातश्च भवेद्वामः पार्श्वक्रान्तश्च दक्षिणः /
अतिक्रान्तः पुनर्वामो वामबन्धे तु मण्डले // ना. शा_११.३५ //
सूचीमाद्यक्रमं कृत्वा ह्यपक्रान्तं च वामकम् /
पार्श्वक्रान्तः पुनश्चाद्यो भुजङ्गत्रासितः स च // ना. शा_११.३६ //
अतिक्रान्तः पुनर्वाम आक्षिप्तो दक्षिणस्तथा /
अतिक्रान्तः पुनर्वाम उरुद्वृत्तस्तथैव च // ना. शा_११.३७ //
अलातश्च पुनर्वामः पार्श्वक्रान्तश्च दक्षिणः /
सूचीवामं पुनर्दद्यादपक्रान्तस्तु दक्षिणः // ना. शा_११.३८ //
अतिक्रान्तः पुनर्वामः कार्यो ललितसंज्ञकः /
एष पादप्रसारस्तु ललिते मण्डले भवेत् // ना. शा_११.३९ //
सूचीवामक्रमं कृत्वा ह्यपक्रान्तश्च वामकम् /
पार्श्वक्रान्तं पुनश्चाद्यं वामपार्श्वक्रमं तथा // ना. शा_११.४० //
भ्रान्त्वा चारीभिरेताभिः पर्यायेणाथ मण्डलम् /
वामसूचीं ततो दद्यादपक्रान्तं च दक्षिणम् // ना. शा_११.४१ //
स्वभावगमने ह्येतन्मण्डलं संविधीयते /
क्रान्तमेतत्तु विज्ञेयं नामतो नाट्ययोक्तृभिः // ना. शा_११.४२ //
एतान्याकाशगामीनि ज्ञेयान्येवं दशैव तु /
अतः परं प्रवक्ष्यामि भौमानामिह लक्षणम् // ना. शा_११.४३ //
आद्यस्तु जनितः कार्यो वामश्चास्पन्दितो भवेत् /
शकटास्यः पुनश्चाद्यो वामश्चापि प्रसारितः // ना. शा_११.४४ //
आद्यो भ्रमरकः कार्यस्त्रिकं च परिवर्तयेत् /
आस्कन्दितः पुनर्वामः शकटास्यश्च दक्षिणः // ना. शा_११.४५ //
वामः पृष्ठापसर्पी च दद्याद् भ्रमरकं तथा /
स एवास्पन्दितः कार्यस्त्वेतद् भ्रमरमण्डलम् // ना. शा_११.४६ //

आद्यो भ्रमरकः कार्यो वामश्चैवाड्डितो भवेत् /
कार्यस्त्रिकविवर्तश्च शकटास्यश्च दक्षिणः // ना. शा_११.४७ //
उरुदॄत्तः स एव स्याद्वामश्चैवापसर्पितः /
कार्यस्त्रिकविवर्तश्च दक्षिणः स्पन्दितो भवेत् // ना. शा_११.४८ //
शकटास्यो भवेद्वामस्तदेवास्फोटनं भवेत् /
एतदास्पन्दितं नाम व्यायामे युद्धमण्डलम् // ना. शा_११.४९ //
आद्यस्तु जनितं कृत्वा वामश्चैव निकुट्टकम् /
शकटास्यः पुनश्चाद्य उरुद्वृत्तः स एव तु // ना. शा_११.५० //
पृष्ठापसर्पी वामश्च स च चाषगतिर्भवेत् /
आस्पन्दितः पुनर्दक्षः शकटास्यश्च वामकः // ना. शा_११.५१ //
आद्यो भ्रमरकश्चैव त्रिकं च परिवर्तयेत् /
पृष्ठापसर्पी वामश्चेत्यावर्तं मण्डलं भवेत् // ना. शा_११.५२ //
समपादं बुधः कृत्वा स्थानं हस्तौ प्रसारयेत् /
निरन्तरावूर्ध्वतलावावेष्ट्योद्वेष्ट्य चैव हि // ना. शा_११.५३ //
कटीतटे विनिक्षिप्य चाद्यमावर्त्तयेत् क्रमात् /
यथाक्रमं पुनर्वाममावर्तेन प्रसारयेत् // ना. शा_११.५४ //
चारया चानया भ्रान्त्वा पर्यायेणाथ मण्डलम् /
समोत्सरितमेतत्तु कार्यं व्यायाममण्डलम् // ना. शा_११.५५ //
पादैस्तु भूमिसंयुक्तैः सूचीविद्धैस्तथैव च /
एडकाक्रीडितैश्चैव तूर्णैस्त्रिकविवर्तितैः // ना. शा_११.५६ //
सूचीविद्धापविद्धैश्च क्रमेणावृत्य मण्डलम् /
एडकाक्रीडितं विद्यात् खण्डमण्डलसंज्ञितम् // ना. शा_११.५७ //
सव्यमुद्धट्टितं कृत्वा तेनैवावर्तमाचरेत् /
तेनैवास्कन्दितः कार्यः शकटास्यश्च वामकः // ना. शा_११.५८ //
आद्यः पृष्ठापसर्पी च स च चाषगतिर्भवेत् /
अड्डितश्च पुनर्वाम आद्यश्चैवापसर्पितः // ना. शा_११.५९ //
वामो भ्रमरकः कार्य आद्य आस्कन्दितो भवेत् /
तेनैवास्फोटनं कुर्यादेतदड्डितमण्डलम् // ना. शा_११.६० //
आद्यं तु जनितं कृत्वा तेनैव च निकुट्टकम् /
स एव शकटास्यश्च वामश्चास्कन्दितो भवेत् // ना. शा_११.६१ //
विज्ञेयं शकटास्यं तु व्यायामे युद्धमण्डलम् /
पादैश्च शकटास्यस्थैः पर्यायेणाथ मण्डलम् // ना. शा_११.६२ //
आद्यस्तु जनितो भूत्वा स एवास्कन्दितो भवेत् /
अपसर्पी पुनर्वामः शकटास्यश्च दक्षिणः // ना. शा_११.६३ //
भ्रान्त्वा चारीभिरेताभिः पर्यायेणाथ मण्डलम् /
अध्यर्धमेतद्विज्ञेयं नियुद्धे चापि मण्डलम् // ना. शा_११.६४ //
सूचीमाद्यक्रमं कृत्वा ह्यपक्रान्तं च वामकम् /
भुजङ्गत्रासितश्चाद्य एवमेव तु वामकः // ना. शा_११.६५ //
भुजङ्गत्रासितैर्भ्रान्त्वा पादैरपि च मण्डलम् /

पिष्टकुट्टं च विज्ञेयं चारीभिर्मण्डलं बुधैः // ना. शा_११.६६ //
सर्वैश्चाषगतैः पादैः परिभ्राम्य तु मण्डलम् /
एतच्चाषगतं विद्यान्नियुद्धे चापि मण्डलम् // ना. शा_११.६७ //
नानाचारीसमुत्थानि मण्डलानि समासतः /
उक्तान्यतः परं चैव समचारीणि योजयेत् // ना. शा_११.६८ //
समचारीप्रयोगो यस्तत्समं नाम मण्डलम् /
आचार्यबुद्ध्या तानीह कर्तव्यानि प्रयोक्तृभिः // ना. शा_११.६९ //
एतानि खण्डानि समण्डलानि युद्धे नियुद्धे च परिक्रमे च /
लीलाङ्गमाधुर्यपुरस्कृतानि कार्याणि वाद्यानुगतानि तज्ज्ञैः // ना. शा_११.७० //

इति भरतीये नाट्यशास्त्रे मण्डलविधानं नाम एकादशो ऽध्यायः समाप्तः

---

अथ द्वादशो ऽध्यायः गतिप्रचार

एवं व्यायामसंयोगे कार्यं मण्डलकल्पनम् /
अतः परं प्रवक्ष्यामि गतीस्तु प्रकृतिस्थिताः // ना. शा_१२.१ //
तत्रोपवहनं कृत्वा भाण्डवाद्यपुरस्कृतम् /
यथामार्गरसोपेतं प्रकृतीनां प्रवेशने // ना. शा_१२.२ //
ध्रुवायां संप्रयुक्तायां पटे चैवापकर्षिते /
कार्यः प्रवेशः पात्राणां नानार्थरससम्भवः // ना. शा_१२.३ //
स्थानं तु वैष्णवं कृत्वा ह्युत्तमे मध्यमे तथा /
समुन्नतं समं चैव चतुरस्रमुरस्तथा // ना. शा_१२.४ //
बाहुशीर्षे प्रसन्ने च नात्युत्क्षिप्ते च कारयेत् /
ग्रीवाप्रदेशः कर्तव्यो मयूराञ्चितमस्तकः // ना. शा_१२.५ //
कर्णादष्टाङ्गुलस्थे च बाहुशीर्षे प्रयोजयेत् /
उरसश्चापि चिबुकं चतुरङ्गुलसंस्थितम् // ना. शा_१२.६ //
हस्तौ तथैव कर्तव्यौ कटीनाभितटस्थितौ /
दक्षिणो नाभिसंस्थस्तु वामः कटितटस्थितः // ना. शा_१२.७ //
पादयोरन्तरं कार्यं द्वौ तालावर्धमेव च /
पादोत्क्षेपस्तु कर्तव्यः स्वप्रमाणविनिर्मितः // ना. शा_१२.८ //
चतुस्तालो द्वितालश्चाप्येकतालस्तथैव च /
चतुस्तालस्तु देवानां पार्थिवानां तथैव च // ना. शा_१२.९ //
द्वितालश्चैव मध्यानां तालः स्त्रीनीचलिङ्गिनाम् /
चतुष्कलो ऽथ द्विकलस्तथा ह्येककलः स्मृतः // ना. शा_१२.१० //
चतुष्कलो ह्युत्तमानां मध्यानां द्विकलो भवेत् /
तथा चैककलः पादो नीचानां संप्रकीर्तितः // ना. शा_१२.११ //
स्थितं मध्यं द्रुतं चैव समवेक्ष्य लयत्रयम् /
यथाप्रकृतिनाट्यज्ञो गतिमेवं प्रयोजयेत् // ना. शा_१२.१२ //

धैर्योपपन्ना गतिरुत्तमानां मध्या गतिर्मध्यमसम्मतानाम् /
द्रुता गतिश्च प्रचुराधमानां लयत्रयं सत्त्ववशेन योज्यम् // ना. शा_१२.१३ //
एष एव तु विज्ञेयः कलातालालये विधिः /
पुनर्गतिप्रचारस्य प्रयोगं श्रुणुतानघाः // ना. शा_१२.१४ //
स्वभावात्तूत्तमगतौ कार्यं जानुकटीसमम् /
युद्धचारीप्रयोगेषु जानुस्तनसमं न्यसेत् // ना. शा_१२.१५ //
पार्श्वक्रान्तैः सललितैः पादैर्वाद्यान्वितैरथ /
रङ्गकोणोन्मुखं गच्चेत् सम्यक् पञ्चपदानि च // ना. शा_१२.१६ //
वामवेधं ततः कुर्याद्विक्षेपं दक्षिणेन तु /
परिवृत्य द्वितीयं तु गच्चेत् कोणं ततः परम् // ना. शा_१२.१७ //
तत्रापि वामवेधस्तु विक्षेपो दक्षिणेन च /
ततो भाण्डोन्मुखो गच्चेत् तान्येव तु पदानि च // ना. शा_१२.१८ //
एवं गतागतैः कृत्वा पदानामिह विंशतिम् /
वामवेधं ततः कुर्यात् विक्षेपं दक्षिणस्य च // ना. शा_१२.१९ //
रङ्गे विकृष्टे भरतेन कार्यो गतागतैः पादगतिप्रचारः /
त्र्यश्रस्त्रिकोणे चतुरस्ररङ्गे गतिप्रचारश्चतुरस्र एव // ना. शा_१२.२० //
यः समैः संहितो गच्चेत्तत्र कार्यो लयाश्रयः /
चतुष्कलो ऽथ द्विकलस्तथैवैककलः पुनः // ना. शा_१२.२१ //
अथ मध्यमनीचैस्तु गच्चेद्यः परिवारितः /
चतुष्कलमथार्धं च तथा चैककलं पुनः // ना. शा_१२.२२ //
दैत्यदानवयक्षाणां नृपपन्नगरक्षसाम् /
चतुस्तालप्रमाणेन कर्तव्याथ गतिर्बुधैः // ना. शा_१२.२३ //
दिवौकसां तु सर्वेषां मध्यमा गतिरिष्यते /
तत्रापि चोद्धता ये तु तेषां देवैः समा गतिः // ना. शा_१२.२४ //
ऋषय ऊचुः
यदा मनुष्या राजानस्तेषां देवगतिः कथम् /
अत्रोच्यते कथं नैषा गती राज्ञां भविष्यति // ना. शा_१२.२५ //
इह प्रकृतयो दिव्या दिव्यमानुष्य एव च /
मानुष्य इति विज्ञेया नाट्यनृत्तक्रियां प्रति // ना. शा_१२.२६ //
देवानां प्रकृतिर्दिव्या राज्ञां वै दिव्यमानुषी /
या त्वन्या लोकविदिता मानुषी सा प्रकीर्तिता // ना. शा_१२.२७ //
देवांशजास्तु राजानो वेदाध्यात्मसु कीर्तिताः /
एवं देवानुकरणे दोषो ह्यत्र न विद्यते // ना. शा_१२.२८ //
अयं विधिस्तु कर्तव्यः स्वच्चन्दगमनं प्रति /
संभ्रमोत्पातरोषेषु प्रमाणं न विधीयते // ना. शा_१२.२९ //
सर्वासां प्रकृतीनां तु अवस्थान्तरसंश्रया /
उत्तमाधममध्यानां गतिः कार्या प्रयोक्तृभिः // ना. शा_१२.३० //
चतुरर्धकलं वा स्यात् तदर्धकलमेव च /
अवस्थान्तरमासाद्य कुर्याद् गतिविचेष्टितम् // ना. शा_१२.३१ //

ज्येष्ठे चतुष्कलं ह्यत्र मध्यमे द्विकलं भवेत् /
द्विकला चोत्तमे यत्र मध्ये त्वेककला भवेत् // ना. शा_१२.३२ //
कलिकं मध्यमे यत्र नीचेष्वर्धकलं भवेत् /
एवमर्धार्धहीनं तु जडानां संप्रयोजयेत् // ना. शा_१२.३३ //
ज्वरार्ते च क्षुधार्ते च तपःश्रान्ते भयान्विते /
विस्मिते चावहित्थे च तथौत्सुक्यसमन्विते // ना. शा_१२.३४ //
शृङ्गारे चैव शोके च स्वच्चन्दगमने तथा /
गतिः स्थितलया कार्याधिकलान्तरपातिता // ना. शा_१२.३५ //
पुनश्चिन्तान्विते चैव गतिः कार्या चतुष्कला /
अस्वस्थकामिते चैव भये वित्रासिते तथा // ना. शा_१२.३६ //
आवेगे चैव हर्षे च कार्ये यच्च त्वरान्वितम् /
अनिष्टश्रवणे चैव क्षेपे चाद्भुतदर्शने // ना. शा_१२.३७ //
अपि चात्यायिके कार्ये दुःखिते शत्रुमार्गणे /
अपराद्धानुसरणे श्वापदानुगतौ तथा // ना. शा_१२.३८ //
एतेष्वेवं गतिं प्राज्ञो विकलां संप्रयोजयेत् /
उत्तमानां गतिर्या तु न तां मध्येषु योजयेत् // ना. शा_१२.३९ //
या गतिर्मध्यमानां तु न तां नीचेषु योजयेत् /
गतिः शृङ्गारिणी कार्या स्वस्थकामितसम्भवा // ना. शा_१२.४० //
दूतीदर्शितमार्गस्तु प्रविशेद्रङ्गमण्डलम् /
सूचया चाप्यभिनयं कुर्यादर्थसमाश्रयम् // ना. शा_१२.४१ //
हृद्यैर्गन्धैस्तथा वस्त्रैरलङ्कारैश्च भूषितः /
नानापुष्पसुगन्धाभिर्मालाभिः समलंकृतः // ना. शा_१२.४२ //
गच्चेत् सललितैः पादैरतिक्रान्तस्थितैस्तथा /
तथा सौष्ठवसंयुक्तैर्लयतालवशानुगैः // ना. शा_१२.४३ //
पादयोरनुगौ हस्तौ नित्यं कार्यौ प्रयोक्तृभिः /
उत्क्षिप्य हस्तं पातेन पादयोश्च विपर्ययात् // ना. शा_१२.४४ //
प्रच्चन्नकामिते चैव गतिं भूयो निबोधत /
विसर्जितजनः स्रस्तस्तथा दूतीसहायवान् // ना. शा_१२.४५ //
निर्वाणदीपो नात्यर्थं भूषणैश्च विभूषितः /
वेलासदृशवस्त्रश्च सह दूत्या शनैस्तथा // ना. शा_१२.४६ //
व्रजेत् प्रच्चन्नकामस्तु पादैर्निश्शब्दमन्दगैः /
शब्दशंक्युत्सुकश्च स्यादवलोकनतत्परः // ना. शा_१२.४७ //
वेपमानशरीरश्च शंकितः प्रस्खलन् मुहुः /
रसे रौद्रे तु वक्ष्यामि दैत्यरक्षोगणान् प्रति // ना. शा_१२.४८ //
एक एव रसस्तेषां स्थायी रौद्रो द्विजोत्तमाः /
नेपथ्यरौद्रो विज्ञेयस्त्वङ्गरौद्रस्तथैव च // ना. शा_१२.४९ //
तथा स्वभावजश्चैव त्रिधा रौद्रः प्रकल्पितः /
रुधिरक्लिन्नदेहो यो रुधिरार्द्रमुखस्तथा // ना. शा_१२.५०। //
।

तथा पिशितहस्तश्च रौद्रो नेपथ्यजस्तु सः /
बहुबाहुर्बहुमुखो नानाप्रहरणाकुलः // ना. शा_१२.५१ //
स्थूलकायस्तथा प्रांशुरङ्गरौद्रः प्रकीर्तितः /
रक्ताक्षः पिङ्गकेशश्च असितो विकृतस्वरः // ना. शा_१२.५२ //
रूक्षो निर्भर्त्सनपरो रौद्रः सो ऽयं स्वभावजः /
चतुस्तालान्तरोत्क्षिप्तैः पादैस्त्वन्तरपातितैः // ना. शा_१२.५३ //
गतिरेवं प्रकर्तव्या तेषां ये चापि तद्विधाः /
अहृद्या तु मही यत्र श्मशानरणकश्मला // ना. शा_१२.५४ //
गतिं तत्र प्रयुञ्जीत बीभत्साभिनयं प्रति /
क्वचिदासन्नपतितैः विकृष्टपतितैः क्वचित् // ना. शा_१२.५५ //
एलकाक्रीडितैः पादैरुपर्युपरि पातितैः /
तेषामेवानुगैर्हस्तैर्बीभत्से गतिरिष्यते // ना. शा_१२.५६ //
अथ वीरे च कर्त्तव्या पादविक्षेपसंयुता /
द्रुतप्रचाराधिष्ठाना नानाचारीसमाकुला // ना. शा_१२.५७ //
पार्श्वक्रान्तैर्द्रुताविद्धैः सूचीविद्धैस्तथैव च /
कलाकालगतैः पादैरावेगे योजयेत् गतिम् // ना. शा_१२.५८ //
उत्तमानामयं प्रायः प्रोक्तो गतिपरिक्रमः /
मध्यानामधमानां च गतिं वक्ष्याम्यहं पुनः // ना. शा_१२.५९ //
विस्मये चैव हर्षे च विक्षिप्तपदविक्रमान् /
आसाद्य तु रसं हास्यमेतच्चान्यं च योजयेत् // ना. शा_१२.६० //
पुनश्च करुणे कार्या गतिः स्थिरपदैरथ /
बाष्पाम्बुरुद्धनयनः सन्नगात्रस्तथैव च // ना. शा_१२.६१ //
उत्क्षिप्तपातितकरस्तथा सस्वनरोदनः /
गच्चेत्तथाध्यधिकया प्रत्यग्राप्रियसंश्रये // ना. शा_१२.६२ //
एषा स्त्रीणां प्रयोक्तव्या नीचसत्त्वे तथैव च /
उत्तमानां तु कर्तव्या सधैर्या बाष्पसङ्गता // ना. शा_१२.६३ //
निःश्वासैरायतोत्सृष्टैस्तथैवोर्ध्वनिरीक्षितैः /
न तत्र सौष्ठवं कार्यं न प्रमाणं तथाविधम् // ना. शा_१२.६४ //
मध्यानामपि सत्त्वज्ञा गतिर्योज्या विधानतः /
उरःपातहतोत्साहः शोकव्याकुलचेतनः // ना. शा_१२.६५ //
नात्युत्क्षिप्तैः पदैर्गच्चेत् इष्टबन्धुनिपातने /
गाढप्रहारे कार्या च शिथिलाङ्गभुजाश्रया // ना. शा_१२.६६ //
विघूर्णितशरीरा च गतिश्चूर्णपदैरथ /
शीतेन चाभिभूतस्य वर्षेणाभिद्रुतस्य च // ना. शा_१२.६७ //
गतिः प्रयोक्तृभिः कार्या स्त्रीनीचप्रकृतावथ /
पिण्डीकृत्य तु गात्राणि तेषां चैव प्रकम्पनम् // ना. शा_१२.६८ //
करौ वक्षसि निक्षिप्य कुब्जीभूतस्तथैव च /
दन्तोष्ठस्फुरणं चैव चिबुकस्य प्रकम्पनम् // ना. शा_१२.६९ //
कार्यं शनैश्च कर्तव्यं शीताभिनयने गतौ /

तथा भयानके चैव गतिः कार्या विचक्षणैः // ना. शा_१२.७० //
स्त्रीणां कापुरुषाणां च ये चान्ये सत्त्ववर्जिताः /
विस्फारिते चले नेत्रे विधुतं च शिरस्तथा // ना. शा_१२.७१ //
भयसंयुक्तया दृष्ट्या पार्श्वयोश्च विलोकनैः /
द्रुतैश्चूर्णपदैश्चैव बद्ध्वा हस्तं कपोतकम् // ना. शा_१२.७२ //
प्रवेपितशरीरश्च शुष्कोष्ठस्स्खलितं व्रजेत् /
एषानुकरणे कार्या तर्जने त्रासने तथा // ना. शा_१२.७३ //
सत्त्वं च विकृतं दृष्ट्वा श्रुत्वा च विकृतं स्वरम् /
एषा स्त्रीणां प्रकर्त्तव्या नृणां चाक्षिप्तविक्रमा // ना. शा_१२.७४ //
क्वचिदासन्नपतितैर्विकृष्टपतितैः क्वचित् /
एलकाक्रीडितैः पादैरुपर्युपरि पातितैः // ना. शा_१२.७५ //
एषामेवानुगैर्हस्तैर्गतिं भीतेषु योजयेत् /
वणिजां सचिवानां च गतिः कार्या स्वभावजा // ना. शा_१२.७६ //
कृत्वा नाभितटे हस्तमुत्तानखटकामुखम् /
आद्यं चारालमुत्तानं कुर्यात्पार्श्वे स्तनान्तरे // ना. शा_१२.७७ //
न निषण्णं न च स्तब्धं न चापि परिवाहितम् /
कृत्वा गात्रं तथा गच्चेत्तेन चैव क्रमेण तु // ना. शा_१२.७८ //
अतिक्रान्तैर्पदैर्विप्रा द्वितालान्तरगामिभिः /
यतीनां श्रमणानां च ये चान्ये तपसि स्थिताः // ना. शा_१२.७९ //
तेषां कार्या गतिर्ये तु नैष्ठिकं व्रतमाश्रिताः /
आलोलचक्षुश्च भवेयुगमात्रनिरीक्षणः // ना. शा_१२.८० //
उपस्थितस्मृतिश्चैव गात्रं सर्वं विधाय च /
अचञ्चलमनाश्चैव यथावल्लिङ्गमाश्रितः // ना. शा_१२.८१ //
विनीतवेषश्च भवेत् कषायवसनस्तथा /
प्रथमं समपादेन स्थित्वा स्थानेन वै बुधः // ना. शा_१२.८२ //
हस्तं च चतुरं कृत्वा तथा चैकं प्रसारयेत् /
प्रसन्नं वदनं कृत्वा प्रयोगस्य वशानुगः // ना. शा_१२.८३ //
अनिषण्णेन गात्रेण गतिं गच्चेद् व्यतिक्रमात् /
उत्तमानां भवेदेषा लिङ्गिनां ये महाव्रताः // ना. शा_१२.८४ //
एभिरेव विपर्यस्तैर्गुणैरन्येषु योजयेत् /
तथा व्रतानुगावस्था ह्यन्येषां लिङ्गिनां गतिः // ना. शा_१२.८५ //
विभ्रान्ता वाप्युदात्ता वा विभ्रान्तनिभृतापि वा /
शकटास्यस्थितैः पादैरतिक्रान्तैस्तथैव च // ना. शा_१२.८६ //
कार्या पाशुपतानां च गतिरुद्धतगामिनी /
अन्धकारे ऽथ याने च गतिः कार्या प्रयोक्तृभिः // ना. शा_१२.८७ //
भूमौ विसर्पितैः पादैर्हस्तैर्मार्गप्रदर्शिभिः /
रथस्थस्यापि कर्तव्या गतिश्चूर्णपदैरथ // ना. शा_१२.८८ //
समपादं तथा स्थानं कृत्वा रथगतिं व्रजेत् /
धनुर्गृहीत्वा चैकेन तथा चैकेन कूबरम् // ना. शा_१२.८९ //

सूतश्चास्य भवेदेवं प्रतोदप्रग्रहाकुलः /
वाहनानि विचित्राणि कर्तव्यानि विभागशः // ना. शा_१२.९० //
द्रुतैश्चूर्णपदैश्चैव गन्तव्यं रङ्गमण्डले /
विमानस्थस्य कर्तव्या ह्येषैव स्यन्दिनी गतिः // ना. शा_१२.९१ //
आरोढुमुद्वहेद् गात्रं किञ्चित् स्यादुन्मुखस्थितम् /
अस्यैव वैपरीत्येन कुर्याच्चाप्यवरोहणम् // ना. शा_१२.९२ //
अधो ऽवलोकनैश्चैव मण्डलावर्तनेन च /
आकाशगमने चैव कर्तव्या नाट्ययोक्तृभिः // ना. शा_१२.९३ //
स्थानेन समपादेन तथा चूर्णपदैरपि /
व्योम्नश्चावतरेद्यस्तु तस्यैतां कारयेत् गतिम् // ना. शा_१२.९४ //
ऋज्वायतोन्नतनतैः कुटिलावर्तितैरथ /
भ्रश्यतश्च तथाकाशादपविद्धभुजा गतिः // ना. शा_१२.९५ //
विकीर्णवसना चैव तथा भूगतलोचना /
प्रासादद्रुमशैलेषु नदीनिम्नोन्नतेषु च // ना. शा_१२.९६ //
आरोहणावतरणं च कार्यमर्थवशाद्बुधैः /
प्रासादारोहणं कार्यं अतिक्रान्तैः पदैरथ // ना. शा_१२.९७ //
उद्वाह्य गात्रं पादं च सोपाने निक्षिपेन्नरः /
तथावतरणं चैव गात्रमानम्य रेचयेत् // ना. शा_१२.९८ //
प्रासादे यन्मया प्रोक्तः प्रतारः केवलो भवेत् /
किञ्चिन्नताग्रकाया तु प्रतारे गतिरिष्यते // ना. शा_१२.९९ //
जलप्रमाणापेक्षा तु जलमध्ये गतिर्भवेत् /
तोये ऽल्पे वसनोत्कर्षः प्राज्ये पाणिविकर्षणैः // ना. शा_१२.१०० //
प्रसार्य बाहुमेकैकं मुहुर्बारिविकर्षणैः /
तिर्यक् प्रसारिता चैव हियमाणा च वारिणा // ना. शा_१२.१०१ //
अशेषाङ्गाकुलाधूतवदना गतिरिष्यते /
नौस्थस्यापि प्रयोक्तव्या द्रुतैश्चूर्णपदैर्गतिः // ना. शा_१२.१०२ //
अतिक्रान्तेन पादेन द्वितीयेनाञ्चितेन च /
प्रासादारोहणे यत्तु तदेवाद्रिषु कारयेत् // ना. शा_१२.१०३ //
केवलमूर्ध्वनिक्षेपमद्रिष्वङ्गं भवेदथ /
द्रुमे चारोहणं कार्यमतिक्रान्तैः स्थितैः पदैः // ना. शा_१२.१०४ //
सूचीविद्धैरपक्रान्तैः पार्श्वक्रान्तैस्तथैव च /
एतदेवावतरणं सरित्स्वपि नियोजयेत् // ना. शा_१२.१०५ //
अनेनैव विधानेन कर्तव्यं गतिचेष्टितम् /
संज्ञामात्रेण कर्तव्यान्येतानि विधिपूर्वकम् // ना. शा_१२.१०६ //
कस्मान्मृत इति प्रोक्ते किं कर्तव्यं प्रयोक्तृभिः /
अङ्कुशग्रहणान्नागं खलीनग्रहणाद्धयम् // ना. शा_१२.१०७ //
प्रग्रहग्रहणाद्यानमेवमेवापरेष्वपि /
अश्वयाने गतिः कार्या वैशाखस्थानकेन तु // ना. शा_१२.१०८ //
यथा चूर्णपदैश्चित्रैरुपर्युपरि पातितैः /

पन्नगानां गतिः कार्या पादैः स्वस्तिकसंज्ञितैः // ना. शा_१२.१०९ //
पार्श्वक्रान्तं पदं कुर्यात् स्वस्तिकं रेचयेदिह /
विटस्यापि तु कर्तव्या गतिर्ललितविक्रमा // ना. शा_१२.११० //
पादैराकुञ्चितैः किञ्चित् तालाभ्यन्तरपातितैः /
स्वसौष्ठवसमायुक्तौ तथा हस्तौ पदानुगौ // ना. शा_१२.१११ //
खटकावर्धमानौ तु कृत्वा विटगतिं व्रजेत् /
कञ्चुकीयस्य कर्तव्या वयोवस्थाविशेषतः // ना. शा_१२.११२ //
अवृद्धस्य प्रयोगज्ञो गतिमेवं प्रयोजयेत् /
अर्धतालोत्थितैः पादैर्विष्कम्भैः ऋजुभिस्तथा // ना. शा_१२.११३ //
समुद्वहन्निवाङ्गानि पङ्कलग्न इव व्रजेत् /
अथ वृद्धस्य कर्तव्या गतिः कम्पितदेहिका // ना. शा_१२.११४ //
विष्कम्भनकृतप्राणा मन्दोत्क्षिप्तपदक्रमा /
कृशस्याप्यभिनेया वै गतिर्मन्दपरिक्रमा // ना. शा_१२.११५ //
व्याधिग्रस्ते ज्वरार्ते च तपःश्रान्ते क्षुधान्विते /
विष्कम्भनकृतप्राणः कृशः क्षामोदरस्तथा // ना. शा_१२.११६ //
क्षामस्वरकपोलश्च दीननेत्रस्तथैव च /
शनैरुत्क्षेपणं चैव कर्तव्यं हस्तपादयोः // ना. शा_१२.११७ //
कम्पनं चैव गात्राणां क्लेशनं च तथैव च /
दूराध्वानं गतस्यापि गतिर्मन्दपदक्रमा // ना. शा_१२.११८ //
विकूणनं च गात्रस्य जानुनोश्च विमर्दनम् /
स्थूलस्यापि तु कर्तव्या गतिर्देहानुकर्षिणी // ना. शा_१२.११९ //
समुद्वहनभूयिष्ठा मन्दोत्क्षिप्तपदक्रमा /
विष्कम्भगामी च भवेन्निःश्वासबहुलस्तथा // ना. शा_१२.१२० //
श्रमस्वेदाभिभूतश्च व्रजेच्चूर्णपदैस्तथा /
मत्तानां तु गतिः कार्या मदे तरुणमध्यमे // ना. शा_१२.१२१ //
वामदक्षिणपादाभ्यां घूर्णमानापसर्पणैः /
अवकृष्टे पदे चैव ह्यनवस्थितपादिका // ना. शा_१२.१२२ //
विघूर्णितशरीरा च करैः प्रस्खलितैस्तथा /
उन्मत्तस्यापि कर्तव्या गतिस्त्वनियतक्रमा // ना. शा_१२.१२३ //
बहुचारीसमायुक्ता लोकानुकरणाश्रया /
रूक्षस्फुटितकेशश्च रजोध्वस्ततनुस्तथा // ना. शा_१२.१२४ //
अनिमित्तप्रकथनो बहुभाषी विकारवान् /
गायत्यकस्माद्धसति सङ्गे चापि न सज्जते // ना. शा_१२.१२५ //
नृत्यत्यपि च संहृष्टो वादयत्यपि वा पुनः /
कदाचिद्धावति जवात् कदाचिदवतिष्ठते // ना. शा_१२.१२६ //
कदाचिदुपविष्टस्तु शयानः स्यात् कदाचन /
नानाचीरधरश्चैव रथ्यास्वनियतालयः // ना. शा_१२.१२७ //
उन्मत्तो भवति ह्येवं तस्यैतां कारयेद् गतिम् /
स्थित्वा नूपुरपादेन दण्डपादं प्रसारयेत् // ना. शा_१२.१२८ //

बद्धां चारीं तथा चैव कृत्वा स्वस्तिकमेव च /
अनेन चारीयोगेन परिभ्राम्य तु मण्डलम् // ना. शा_१२.१२९ //
बाह्यभ्रमरकं चैव रङ्गकोणे प्रसारयेत् /
त्रिकं सुललितं कृत्वा लताख्यं हस्तमेव च // ना. शा_१२.१३० //
विपर्ययगतैर्हस्तैः पद्भ्यां सह गतिर्भवेत् /
त्रिविधा तु गतिः कार्या खञ्जपङ्गुकवामनैः // ना. शा_१२.१३१ //
विकलाङ्गप्रयोगेण कुहकाभिनयं प्रति /
एकः खञ्जगतौ नित्यं स्तब्धो वै चरणो भवेत् // ना. शा_१२.१३२ //
तथा द्वितीयः कार्यस्तु पादो ऽग्रतलसञ्चरः /
स्तब्धेनोत्थापनं कार्यमङ्गस्य चरणेन तु // ना. शा_१२.१३३ //
गमनेन निषण्णः स्यादन्येन चरणेन तु /
इतरेण निषीदेच्च क्रमेणानेन वै व्रजेत् // ना. शा_१२.१३४ //
एषा खञ्जगतिः कार्या तलशल्यक्षतेषु च /
पादेनाग्रतलस्थेन ह्यञ्चितेन व्रजेत्तथा // ना. शा_१२.१३५ //
निषण्णदेहा पङ्गोस्तु नतजङ्घा तथैव च /
सर्वसङ्कुचिताङ्गा च वामने गतिरिष्यते // ना. शा_१२.१३६ //
न तस्य विक्रमः कार्यो विक्षेपश्चरणस्य च /
सोद्वाहिता चूर्णपदा सा कार्या कुहनात्मिका // ना. शा_१२.१३७ //
विदूषकस्यापि गतिर्हास्यत्रयसमन्विता /
अङ्गवाक्यकृतं हास्यं हास्यं नेपथ्यजं स्मृतम् // ना. शा_१२.१३८ //
दन्तुरः खलतिः कुब्जः खञ्जश्च विकृताननः /
य ईदृशः प्रवेशः स्यादङ्गहास्यं तु तद्भवेत् // ना. शा_१२.१३९ //
यदा तु बकवद्गच्चेदुल्लोकितविलोकितैः /
अन्यायतपदत्वाच्च अङ्गहास्यो भवेत्स तु // ना. शा_१२.१४० //
कार्यहास्यं तु विज्ञेयमसंबद्धप्रभाषणात् /
अनर्थकैर्विकारैश्च तथा चाश्लीलभाषितैः // ना. शा_१२.१४१ //
चीरचर्ममशीभस्मगैरिकाद्यैस्तु मण्डितः /
यस्तादृशो भवेद्विप्रा हास्यो नेपथ्यजस्तु सः // ना. शा_१२.१४२ //
तस्मात्तु प्रकृतिं ज्ञात्वा भावः कार्यस्तु तत्त्वतः /
गतिप्रचारं विभजेत् नानावस्थान्तरात्मकम् // ना. शा_१२.१४३ //
स्वभावजायां विन्यस्य कुटिलं वामके करे /
तदा दक्षिणहस्ते च कुर्याच्चतुरकं पुनः // ना. शा_१२.१४४ //
पार्श्वमेकं शिरश्चैव हस्तो ऽथ चरणस्तथा /
पर्यायशः सन्नमयेल्लयतालवशानुगः // ना. शा_१२.१४५ //
स्वभावजा तु तस्यैषा गतिरन्या विकारजा /
अलाभलाभात् मुक्तस्य स्तब्धा तस्य गतिर्भवेत् // ना. शा_१२.१४६ //
कार्या चैव हि नीचानां चेटादीनां परिक्रमात् /
अधमा इति ये ख्याता नानाशीलाश्च ते पुनः // ना. शा_१२.१४७ //
पार्श्वसेकं शिरश्चैव करः सचरणस्तथा ।

शकारस्यापि कर्तव्या गतिश्चञ्चलदेहिका /
गतौ नमेत चेटानां दृष्टिश्चार्धविचारिणी // ना. शा_१२.१४८ //
वस्त्राभरणसंस्पर्शैर्मुहुर्मुहुरवेक्षितैः /
गात्रैर्विकारविक्षिप्तैः लम्बवस्त्रस्रजा तथा // ना. शा_१२.१४९ //
सगर्विता चूर्णपदा शकारस्य गतिर्भवेत् /
जात्या नीचेषु योक्तव्या विलोकनपरा गतिः // ना. शा_१२.१५० //
असंस्पर्शाच्च लोकस्य स्वाङ्गानि विनिगूह्य च /
म्लेच्चानां जातयो यास्तु पुलिन्दशबरादयः // ना. शा_१२.१५१ //
तेषां देशानुसारेण कार्यं गतिविचेष्टितम् /
पक्षिणां श्वापदानां च पशूनां च द्विजोत्तमाः // ना. शा_१२.१५२ //
स्वस्वजातिसमुत्थेन स्वभावेन गतिर्भवेत् /
सिंहर्क्षवानराणां च गतिः कार्या प्रयोक्तृभिः // ना. शा_१२.१५३ //
या कृता नरसिंहेन विष्णुना प्रभविष्णुना /
आलीढस्थानकं कृत्वा गात्रं तस्यैव चानुगम् // ना. शा_१२.१५४ //
जानूपरि करं ह्येकमपरं वक्षसि स्थितम् /
अवलोक्य दिशः कृत्वा चिबुकं बाहुमस्तके // ना. शा_१२.१५५ //
गन्तव्यं विक्रमैर्विप्राः पञ्चतालान्तरोत्थितैः /
नियुद्धसमये चैव रङ्गावतरणे तथा // ना. शा_१२.१५६ //
सिंहादीनां प्रयोक्तव्या गतिरेषा प्रयोक्तृभिः /
शेषाणामर्थयोगेन गतिं स्थानं च योजयेत् // ना. शा_१२.१५७ //
वाहनार्थप्रयोगेषु रङ्गावतरणेषु च /
एवमेताः प्रयोक्तव्या नराणां गतयो बुधैः // ना. शा_१२.१५८ //
नोक्ता या या मया ह्यत्र ग्राह्यास्तास्ताश्च लोकतः /
अतः परं प्रवक्ष्यामि स्त्रीणां गतिविचेष्टितम् // ना. शा_१२.१५९ //
स्त्रीणां स्थानानि कार्याणि गतिष्वाभरणेषु च /
आयतं चावहित्थं च अश्वक्रान्तमथापि च // ना. शा_१२.१६० //
स्थानान्येतानि नारीणामथ लक्षणमुच्यते /
वामः स्वभावतो यत्र पादो विरचितः समः // ना. शा_१२.१६१ //
तालमात्रान्तरे न्यस्तस्त्र्यश्रः पक्षस्थितो ऽपरः /
प्रसन्नमाननमुरः समं यत्र समुन्नतम् // ना. शा_१२.१६२ //
लतानितम्बगौ हस्तौ स्थानं ज्ञेयं तदायतम् /
दक्षिणस्तु समः पादः त्र्यश्रः पक्षस्थितो ऽपरः // ना. शा_१२.१६३ //
वामः समुन्नतकटिश्चायते स्थानके भवेत् /
आवाहने विसर्गे च तथा निर्वर्णनेषु च // ना. शा_१२.१६४ //
चिन्तायां चावहित्थे च स्थानमेतत् प्रयोजयेत् /
रङ्गावतरणारम्भः पुष्पाञ्जलिविसर्जनम् // ना. शा_१२.१६५ //
मन्मथेर्ष्योद्भवं कोपं तर्जन्यङ्गुलिमोटनम् /
निषेधगर्वगाम्भीर्यमौनं मानावलम्बनम् // ना. शा_१२.१६६ //
स्थाने ऽस्मिन् संविधातव्यं दिगन्तरनिरूपणम् /

समो यत्र स्थितो वामस्त्र्यश्रः पक्षस्थितो ऽपरः // ना. शा_१२.१६७ //
समुन्नतकटिर्वामस्त्ववहित्थं तु तद्भवेत् /
पुरो विचलितस्त्र्यश्रस्तदन्योपसृतः समः // ना. शा_१२.१६८ //
पादस्तालान्तरन्यस्तस्त्रिकमीषत्समुन्नतम् /
पाणिर्लताख्यो यत्रैकस्तदन्यस्तु नितम्बगः // ना. शा_१२.१६९ //
अवहित्थं समाख्यातं स्थानमागमभूषणैः /
स्त्रीणामेतत् स्मृतं स्थानं संलापे तु स्वभावजे // ना. शा_१२.१७० //
निश्चये परितोषे च वितर्के चिन्तने तथा /
विलासलीलाविब्वोकशृंगारात्मनिरूपणे // ना. शा_१२.१७१ //
स्थानमेतत्प्रयोक्तव्यं भर्तुर्मार्गविलोकने /
पादः समस्थितश्चैक एकश्चाग्रतलाञ्चितः // ना. शा_१२.१७२ //
सूचीविद्धमविद्धं वा तदश्वक्रान्तमुच्यते /
स्खलितं घूर्णितं चैव गलिताम्बरधारणम् // ना. शा_१२.१७३ //
कुसुमस्तबकादानं परिरक्षणमेव च /
वित्रासनं सललितं तरुशाखावलम्बनम् // ना. शा_१२.१७४ //
स्थाने ऽस्मिन् संविधानीयं स्त्रीणामेतत्प्रयोक्तृभिः /
शाखावलम्बने कार्यं स्तबकग्रहणे तथा // ना. शा_१२.१७५ //
विश्रामेष्वथ देवानां नराणां चार्थयोगतः /
स्थानकं तावदेव स्याद्यावच्चेष्टा प्रवर्तते // ना. शा_१२.१७६ //
भग्नं च स्थानकं नृत्ते चारी चेत्समुपस्थिता /
एवं स्थानविधिः कार्यः स्त्रीणां नृणामथापि च // ना. शा_१२.१७७ //
पुनश्चासां प्रवक्ष्यामि गतिं प्रकृतिसंस्थिताम् /
कृत्वावहित्थं स्थानं तु वामं चाधोमुखं करम् // ना. शा_१२.१७८ //
नाभिप्रदेशे विन्यस्य सव्यं च खटकामुखम् /
ततः सललितं पादं तालमात्रसमुत्थितम् // ना. शा_१२.१७९ //
दक्षिणं वामपादस्य बाह्यपार्श्वे विनिक्षिपेत् /
तेनैव समकालं च लताख्यं वामकं भुजम् // ना. शा_१२.१८० //
दक्षिणं विनमेत्पार्श्वं न्यसेन्नाभितटे ततः /
नितम्बे दक्षिणं कृत्वा हस्तं चोद्वेष्ट्य वामकम् // ना. शा_१२.१८१ //
ततो वामपदं दद्यात् लताहस्तं च दक्षिणम् /
लीलयोद्वाहितेनाथ शिरसानुगतेन च // ना. शा_१२.१८२ //
किञ्चिन्नतेन गात्रेण गच्चेत्पञ्चपदीं ततः /
यो विधिः पुरुषाणां तु रङ्गपीठपरिक्रमे // ना. शा_१२.१८३ //
स एव प्रमदानां वै कर्तव्यो नाट्ययोक्तृभिः /
षट्कलं तु न कर्तव्यं तथाष्टकलमेव च // ना. शा_१२.१८४ //
पादस्य पतनं तज्ज्ञैः खेदनं तद्भवेत्स्त्रियाः /
सयौवनानां नारीणामेवं कार्या गतिर्बुधैः // ना. शा_१२.१८५ //
स्थवीयसीनामेतासां सम्प्रवक्ष्याम्यहं गतिम् /
कृत्वापविद्धं स्थानन्तु वामं न्यस्य कटीतटे // ना. शा_१२.१८६ //

आद्यं चारालमुत्तानं कुर्यान्नाभिस्तनान्तरे /
न निषण्णं न च स्तब्धं न चापि परिवाहितम् // ना. शा_१२.१८७ //
कृत्वा गात्रं ततो गच्चेत्तेनैवेह क्रमेण तु /
प्रेष्याणामपि कर्तव्या गतिरुद्भ्रान्तगामिनी // ना. शा_१२.१८८ //
क्वचिदुन्नमितैर्गात्रैः आविद्धभुजविक्रमा /
स्थानं कृत्वावहित्थं च वामं चाधोमुखं भुजम् // ना. शा_१२.१८९ //
नाभिप्रदेशे विन्यस्य सव्यं च खटकामुखम् /
अर्धनारीगतिः कार्या स्त्रीपुंसाभ्यां विमिश्रिता // ना. शा_१२.१९० //
उदात्तललितैर्गात्रैः पादैर्लीलासमन्वितैः /
या पूर्वमेवाभिहिता ह्युत्तमानां गतिर्मया // ना. शा_१२.१९१ //
स्त्रीणां कापुरुषाणां च ततो ऽर्धार्धं तु योजयेत् /
मध्यमोत्तमनीचानां नृणां यद् गतिचेष्टितम् // ना. शा_१२.१९२ //
स्त्रीणां तदेव कर्तव्या ललितैः पदविक्रमैः /
बालानामपि कर्तव्या स्वच्चन्दपदविक्रमा // ना. शा_१२.१९३ //
न तस्याः सौष्ठवं कार्यं न प्रमाणं प्रयोक्तृभिः /
तृतीया प्रकृतिः कार्या नाम्ना चैव नपुंसका // ना. शा_१२.१९४ //
नरस्वभावमुत्सृज्य स्त्रीगतिं तत्र योजयेत् /
विपर्ययः प्रयोक्तव्यः पुरुषस्त्रीनपुंसके // ना. शा_१२.१९५ //
स्वभावमात्मनस्त्यक्त्वा तद्भावगमनादिह /
व्याजेन क्रीडया वापि तथा भूयं च वञ्चनात् // ना. शा_१२.१९६ //
स्त्री पुंसः प्रकृतिं कुर्यात् स्त्रीभावं पुरुषो ऽपि च /
धैर्योदार्येण सत्त्वेन बुद्ध्या तद्वच्च कर्मणा // ना. शा_१२.१९७ //
स्त्री पुमांसं त्वभिनयेत् वेषवाक्यविचेष्टितैः /
स्त्रीवेषभाषितैर्युक्तं प्रेषिताप्रेषितैस्तथा // ना. शा_१२.१९८ //
मृदुसन्नगतिश्चैव पुमान् स्त्रीभावमाचरेत् /
जातिहीनाश्च या नार्यः पुलिन्दशबराङ्गनाः // ना. शा_१२.१९९ //
याश्चापि तासां कर्तव्या तज्जातिसदृशी गतिः /
व्रतस्थानां तपःस्थानां लिङ्गस्थानां तथैव च // ना. शा_१२.२०० //
खस्थानां चैव नारीणां समपादं प्रयोजयेत् /
उद्धता ये ऽङ्गहाराः स्युः याश्चार्यो मण्डलानि च // ना. शा_१२.२०१ //
तानि नाट्यप्रयोगज्ञैर्न कर्तव्यानि योषिताम् /
तथासनविधिः कार्यो नृणां स्त्रीणां विशेषतः // ना. शा_१२.२०२ //
नानाभावसमायुक्तस्तथा च शयनाश्रयः /
विष्कम्भिताञ्चितौ पादौ त्रिकं किञ्चित्समुन्नतम् // ना. शा_१२.२०३ //
हस्तौ कट्यूरुविन्यस्तौ स्वस्थे स्यादुपवेशने /
पादः प्रसारितः किञ्चिदेकश्चैवासनाश्रयः // ना. शा_१२.२०४ //
शिरः पार्श्वनतं चैव सचिन्त उपवेशने /
चिबुकोपाश्रितौ हस्तौ बाहुशीर्षाश्रितं शिरः // ना. शा_१२.२०५ //
सम्प्रणष्टेन्द्रियमनाः शोकौत्सुक्योपवेशने /

प्रसार्य बाहू शिथिलौ तथा श्रोपाश्रयाश्रितः // ना. शा_१२.२०६ //
मोहमूर्च्छामदग्लानिविषादेषूपवेशयेत् /
सर्वपिण्डीकृताङ्गस्तु संयुक्तैः पादजानुभिः // ना. शा_१२.२०७ //
व्याधिव्रीडितनिद्रासु ध्याने चोपविशेन्नरः /
तथा चोत्कटिकं स्थानं स्फिक्पार्ष्णीनां समागमः // ना. शा_१२.२०८ //
पित्र्ये निवापे जप्ये च सन्ध्यास्वाचमने ऽपि च /
विष्कम्भितं पुनश्चैवं जानुं भूमौ निपातयेत् // ना. शा_१२.२०९ //
प्रियाप्रसादने कार्यं होमादिकरणेषु च /
महीगताभ्यां जानुभ्यामधोमुखमवस्थितम् // ना. शा_१२.२१० //
देवाभिगमने चैव रुषितानां प्रसादने /
शोके चाक्रन्दने तीव्रे मृतानां चैव दर्शने // ना. शा_१२.२११ //
त्रासने च कुसत्त्वानां नीचानां चैव याचने /
होमयज्ञक्रियायां च प्रेष्याणां चैव कारयेत् // ना. शा_१२.२१२ //
मुनीनां नियमेष्वेष भवेदासनजो विधिः /
तथासनविधिः कार्यो विविधो नाटकाश्रयः // ना. शा_१२.२१३ //
स्त्रीणां च पुरुषाणां च बाह्यश्चाभ्यन्तरस्तथा /
आभ्यन्तरस्तु नृपतेर्बाह्यो बाह्यगतस्य च // ना. शा_१२.२१४ //
देवानां नृपतीनां च दद्यात् सिंहासनं द्विजः /
पुरोधसाममात्यानां भवेद्वेत्रासनं तथा // ना. शा_१२.२१५ //
मुण्डासनं च दातव्यं सेनानीयुवराजयोः /
काष्ठासनं द्विजातीनां कुमाराणां कुथासनम् // ना. शा_१२.२१६ //
एवं राजसभां प्राप्य कार्यस्त्वासनजो विधिः /
स्त्रीणां चाप्यासनविधिं सम्प्रवक्ष्याम्यहं पुनः // ना. शा_१२.२१७ //
सिंहासनं तु राज्ञीनां देवीनां मुण्डमासनम् /
पुरोधो ऽमात्यपत्नीनां दद्याद्वेत्रासनं तथा // ना. शा_१२.२१८ //
भोगिनीनां तथा चैव वस्त्रं चर्म कुथो ऽपि वा /
ब्राह्मणीतापसीनां च पट्टासनमथापि च // ना. शा_१२.२१९ //
वेश्यानां च प्रदातव्यमासनं च मयूरकम् /
शेषाणां प्रमदानां तु भवेद् भूम्यासनं द्विजाः // ना. शा_१२.२२० //
एवमाभ्यन्तरो ज्ञेयो बाह्यश्चासनजो विधिः /
तथा स्वगृहवार्तासु च्चन्देनासनमिष्यते // ना. शा_१२.२२१ //
नियमस्थमुनीनां च भवेदासनजो विधिः /
लिङ्गिनामासनविधिः कार्यो व्रतसमाश्रयः // ना. शा_१२.२२२ //
ब्रुषीमुण्डासनप्रायं वेत्रासनमथापि च /
होमे यज्ञक्रियायां च पित्र्ये ऽर्थे च प्रयोजयेत् // ना. शा_१२.२२३ //
स्थानीया ये च पुरुषाः कुलविद्यासमन्विताः /
तेषामासनसत्कारः कर्त्तव्य इह पार्थिवैः // ना. शा_१२.२२४ //
समे समासनं दद्यात् मध्ये मध्यममासनम् /
अतिरिक्ते ऽतिरिक्तं च हीने भूम्यासनं भवेत् // ना. शा_१२.२२५ //

उपाध्यायस्य नृपतेर्गुरूणामग्रतो बुधैः /
भूम्यासनं तथा कार्यमथवा काष्ठमासनम् // ना. शा_१२.२२६ //
नौनागरथयानेषु भूमिकाष्ठासनेषु च /
सहासनं न दुष्येत गुरूपाध्यायपार्थिवैः // ना. शा_१२.२२७ //
आकुञ्चितं समं चैव प्रसारितविवर्तने /
उद्वाहितं नतं चैव शयने कर्म कीर्त्यते // ना. शा_१२.२२८ //
सर्वैराकुञ्चितैरङ्गैः शय्याविद्धे तु जानुनी /
स्थानमाकुञ्चितं नाम शीतार्तानां प्रयोजयेत् // ना. शा_१२.२२९ //
उत्तानितमुखं चैव स्रस्तमुक्तकरं तथा /
समं नाम प्रसुप्तस्य स्थानकं संविधीयते // ना. शा_१२.२३० //
एकं भुजमुपाधाय सम्प्रसारितजानुकम् /
स्थानं प्रसारितं नाम सुखसुप्तस्य कारयेत् // ना. शा_१२.२३१ //
अधोमुखस्थितं चैव विवर्तितमिति स्मृतम् /
शस्त्रक्षतमृतोत्क्षिप्तमत्तोन्मत्तेषु कारयेत् // ना. शा_१२.२३२ //
अंसोपरि शिरः कृत्वा कर्पूरक्षोभमेव च /
उद्वाहितं तु विज्ञेयं लीलया वेशने प्रभोः // ना. शा_१२.२३३ //
ईषत्प्रसारिते जङ्घे यत्र स्रस्तौ करावुभौ /
आलस्यश्रमखेदेषु नतं स्थानं विधीयते // ना. शा_१२.२३४ //
गतिप्राचारस्तु मयोदितो ऽयं नोक्तश्च यः सो ऽर्थवशेन साध्यः /
अतः परं रङ्गपरिक्रमस्य वक्ष्यामि कक्ष्यां प्रविभागयुक्ताम् // ना. शा_१२.२३५ //

इति भरतीये नाट्यशास्त्रे गतिप्रचारो नाम द्वादशो ऽध्यायः

---

अथ त्रयोदशो ऽध्यायः

ये तु पूर्वं मया प्रोक्तास्त्रयो वै नाट्यमण्डपाः /
तेषां विभागं विज्ञाय ततः कक्ष्यां प्रयोजयेत् // ना. शा_१३.१ //
ये नेपथ्यगृहद्वारे मया पूर्वं प्रकीर्तिते /
तयोर्भाण्डस्य विन्यासो मध्ये कार्यः प्रयोक्तृभिः // ना. शा_१३.२ //
कक्ष्याविभागो निर्देश्यो रङ्गपीठपरिक्रमात् /
परिक्रमेण रङ्गस्य कक्ष्या ह्यन्या विधीयते // ना. शा_१३.३ //
कक्ष्याविभागे ज्ञेयानि गृहाणि नगराणि च /
उद्यानारामसरितस्त्वाश्रमा अटवी तथा // ना. शा_१३.४ //
पृथिवी सागराश्चैव त्रैलोक्यं सचराचरम् /
वर्षाणि सप्तद्वीपाश्च पर्वता विविधास्तथा // ना. शा_१३.५ //
अलोकश्चैव लोकश्च रसातलमथापि च /
दैत्यनागालयाश्चैव गृहाणि भवनानि च // ना. शा_१३.६ //
नगरे वा वने वापि वर्षे वा पर्वते ऽपि वा /

यत्र वार्ता प्रवर्तेत तत्र कक्ष्यां प्रवर्तयेत् // ना. शा_१३.७ //
बाह्यं वा मध्यमं वापि तथैवाभ्यन्तरं पुनः /
दूरं वा सन्निकृष्टं वा देशं तु परिकल्पयेत् // ना. शा_१३.८ //
पूर्वप्रविष्टा ये रङ्गं ज्ञेयास्ते ऽभ्यन्तरा बुधैः /
पश्चात्प्रविष्टा विज्ञेयाः कक्ष्याभागे तु बाह्यतः // ना. शा_१३.९ //
तेषां तु दर्शनेच्चुर्यः प्रविशेद्रङ्गमण्डपम् /
दक्षिणाभिमुखः सो ऽथ कुर्यादात्मनिवेदनम् // ना. शा_१३.१० //
यतो मुखं भवेद्भाण्डं द्वारं नेपथ्यकस्य च /
सा मन्तव्या तु दिक् पूर्वा नाट्ययोगे न नित्यशः // ना. शा_१३.११ //
निष्क्रामेद्यश्च तस्माद्वै स तेनैव तथा व्रजेत् /
यतस्तस्य कृतं तेन पुरुषेण निवेदनम् // ना. शा_१३.१२ //
निष्क्रान्तो ऽर्थवशाच्चापि प्रविशेद्यदि तद्गृहम् /
यतः प्राप्तः स पुरुषस्तेन मार्गेण निष्क्रमेत् // ना. शा_१३.१३ //
अथवार्थवशाच्चापि तेनैव सह गच्चति /
तथैव प्रविशेत् गेहमेकाकी सहितो ऽपि वा // ना. शा_१३.१४ //
तयोश्चापि प्रविशतोः कक्ष्यामन्यां विनिर्दिशेत् /
परिक्रमेण रङ्गस्य त्वन्या कक्ष्या विधीयते // ना. शा_१३.१५ //
समैश्च सहितो गच्चेन्नीचैश्च परिवाहितः /
अथ प्रेक्षणिकाश्चापि विज्ञेया ह्यग्रतो गतौ // ना. शा_१३.१६ //
सैव भूमिस्तु बहुभिर्विकृष्टा स्यात्परिक्रमैः /
मध्या वा सन्निकृष्टा वा तेषामेवं विकल्पयेत् // ना. शा_१३.१७ //
नगरे वा वने वापि सागरे पर्वते ऽपि वा /
दिव्यानां गमनं कार्यं द्वीपे वर्षेषु वा पुनः // ना. शा_१३.१८ //
आकाशेन विमानेन माययाप्यथ वा पुनः /
विविधाभिः क्रियाभिर्वा नानार्थाभिः प्रयोगतः // ना. शा_१३.१९ //
नाटके च्चन्नवेषाणां दिव्यानां भूमिसञ्चरः /
मानुषे कारणादेषां यथा भवति दर्शनम् // ना. शा_१३.२० //
भारते त्वथ हैमे वा हरिवर्ष इलावृते /
रम्ये किंपुरुषे वापि कुरुषूत्तरकेषु वा // ना. शा_१३.२१ //
दिव्यानां चन्दगमनं सर्ववर्षेषु कीर्तितम् /
भारते मानुषाणाञ्च गमनं संविधीयते // ना. शा_१३.२२ //
गच्चेद्यदि विकृष्टस्तु देशकालवशान्नरः /
अङ्कच्चेदे तमन्यस्मिन् निर्दिशेद्धि प्रवेशके // ना. शा_१३.२३ //
अह्नः प्रमाणं गत्वा तु कार्यलाभं विनिर्दिशेद् /
तथालाभे तु कार्यस्य अङ्कच्चेदो विधीयते // ना. शा_१३.२४ //
क्षणो मुहूर्तो यानो वा दिवसो वापि नाटके /
एकाङ्के स विधातव्यो बीजस्यार्थवशानुगः // ना. शा_१३.२५ //
अङ्कच्चेदे तु निर्वृत्तं मासं वा वर्षमेव वा /
नोर्ध्वं वर्षात्प्रकर्तव्यं कार्यमङ्कसमाश्रयम् // ना. शा_१३.२६ //

एवं तु भारते वर्षे कक्ष्या कार्या प्रयोगतः /
मानुषाणां गतिर्या तु दिव्यानान्तु निबोधत // ना. शा_१३.२७ //
हिमवत्पृष्ठसंस्थे तु कैलासे पर्वतोत्तमे /
यक्षाश्च गुह्यकाश्चैव धनदानुचराश्च ये // ना. शा_१३.२८ //
रक्षःपिशाचभूताश्च सर्वे हैमवताः स्मृताः /
हेमकूटे च गन्धर्वा विज्ञेयाः साप्सरोगणाः // ना. शा_१३.२९ //
सर्वे नागाश्च निषधे शेषवासुकितक्षकाः /
महामेरौ त्रयस्त्रिंशद् ज्ञेया देवगणा बुधैः // ना. शा_१३.३० //
नीले तु वैडूर्यमये सिद्धा ब्रह्मर्षयस्तथा /
दैत्यानां दानवानाञ्च श्वेतपर्वत इष्यते // ना. शा_१३.३१ //
पितरश्चापि विज्ञेया शृङ्गवन्तं समाश्रिताः /
इत्येते पर्वताः श्रेष्ठा दिव्यावासाः प्रकीर्तिताः // ना. शा_१३.३२ //
तेषां कक्ष्याविभागश्च जम्बूद्वीपे भवेदयम् /
तेषां न चेष्टितं कार्यं स्वैः स्वैः कर्मपराक्रमैः // ना. शा_१३.३३ //
परिच्च\(च्चे\)दविशेषस्तु तेषां मानुषलोकवत् /
सर्वे भावाश्च दिव्यानां कार्या मानुषसंश्रयाः // ना. शा_१३.३४ //
तेषान्त्वनिमिषत्वं यत्तन्न कार्यं प्रयोक्तृभिः /
इह भावा रसाश्चैव दृष्टावेव प्रतिष्ठिताः // ना. शा_१३.३५ //
दृष्ट्या हि सूचितो भावः पुनरङ्गैर्विभाव्यते /
एवं कक्ष्याविभागस्तु मया प्रोक्तो द्विजोत्तमाः // ना. शा_१३.३६ //
पुनश्चैव प्रवक्ष्यामि प्रवृत्तीनान्तु लक्षणम् ।
चतुर्विधा प्रवृत्तिश्च प्रोक्ता नाट्यप्रयोगतः /
आवन्ती दाक्षिणात्या च पाञ्चाली चोढ्रमागधी // ना. शा_१३.३७ //
अत्राह प्रवृत्तिरिति कस्मात् \?\ उच्यते पृथिव्यां नानादेशवेषभाषाचारवार्ताः प्रख्यापयतीति वृत्तिः । प्रवृत्तिश्च निवेदने । अत्राह - यथा पृथिव्यां बहवो देशाः सन्ति , कथमासां चतुर्विधत्वम् उपपन्नं, समानलक्षणश्चासां प्रयोग उच्यते \,\ सत्यमेतत् । समानलक्षण आसां प्रयोगः । किन्तु नानादेशवेषभाषाचारो लोक इति कृत्वा लोकानुमतेन वृत्तिसंश्रितस्य नाट्यस्य वृत्तीनां मया चतुर्विधत्वमभिहितं भारती सात्त्वती कैशिक्यारभटी चेति । वृत्तिसंश्रितैश्च प्रयोगैरभिहिता देशाः । यतः प्रवृत्तिचतुष्टयमभिनिर्वृत्तं प्रयोगश्चोत्पादितः । तत्र दाक्षिणात्यास्तावत् बहुनृत्तगीतवाद्या कैशिकीप्रायाः चतुरमधुरललिताङ्गाभिनयाश्च । तद्यथा -
महेन्द्रो मलयः सह्यो मेकलः पालमञ्जरः /
एतेषु ये श्रिता देशाः स ज्ञेयो दक्षिणापथः // ना. शा_१३.३८ //
कोसलाग्ग्स्तोशलाश्चैव कलिङ्गा यवना खसाः /

द्रविडान्ध्रमहाराष्ट्रा वैष्णा वै वानवासजाः // ना. शा_१३.३९ //
दक्षिणस्य समुद्रस्य तथा विन्ध्यस्य चान्तरे /
ये देशास्तेषु युञ्जीत दाक्षिणात्यां तु नित्यशः // ना. शा_१३.४० //
आवन्तिका वैदिशिकाः सौराष्ट्रा मालवास्तथा /
सैन्धवास्त्वथ सौवीरा आवर्ताः सार्बुदेयकाः // ना. शा_१३.४१ //
दाशार्णास्त्रैपुराश्चैव तथा वै मार्तिकावताः /
कुर्वन्त्यावन्तिकीमेते प्रवृत्तिं नित्यमेव तु // ना. शा_१३.४२ //
सात्वतीं कैशिकीं चैव वृत्तिमेषां समाश्रिता /
भवेत् प्र्योगो नाट्ये ऽत्र स तु कार्यः प्रयोक्तृभिः // ना. शा_१३.४३ //
अङ्गा वङ्गाः कलिङ्गाश्च वत्साश्चैवोढ्रमागधाः /
पौण्ड्रा नेपालकाश्चैव अन्तर्गिरिबहिर्गिराः // ना. शा_१३.४४ //
तथा प्लवङ्गमा ज्ञेया मलदा मल्लवर्तकाः /
ब्रह्मोत्तरप्रभृतयो भार्गवा मार्गवास्तथा // ना. शा_१३.४५ //
प्राज्योतिषाः पुलिन्दाश्च वैदेहास्ताम्रलिप्तकाः /
प्राङ्गाः प्रावृतयश्चैव युञ्जन्तीहोढ्रमागधीम् // ना. शा_१३.४६ //
अन्ये ऽपि देशाः प्राच्यां ये पुराणे सम्प्रकीर्तिताः /
तेषु प्रयुज्यते ह्येषा प्रवृत्तिश्चोढ्रमागधी // ना. शा_१३.४७ //
पाञ्चाला सौरसेनाश्च काश्मीरा हस्तिनापुराः /
बाह्लीका शल्यकाश्चैव मद्रकौशीनरास्तथा // ना. शा_१३.४८ //
हिमवत्संश्रिता ये तु गङ्गायाश्चोत्तरां दिशम् /
ये श्रिता वै जनपदास्तेषु पाञ्चालमध्यमाः // ना. शा_१३.४९ //
पाञ्चालमध्यमायां तु सात्त्वत्यारभटी स्मृता /
प्रयोगस्त्वल्पगीतार्थ आविद्धगतिविक्रमः // ना. शा_१३.५० //
द्विधा क्रिया भवत्यासां रङ्गपीठपरिक्रमे /
प्रदक्षिणप्रदेशा च तथा चाप्यप्रदक्षिणा // ना. शा_१३.५१ //
आवन्ती दाक्षिणात्या च प्रदक्षिणपरिक्रमे /
अपसव्यप्रदेशास्तु पाञ्चाली चोढ्रमागधी // ना. शा_१३.५२ //
आवन्त्यां दाक्षिणात्यायां पार्श्वद्वारमथोत्तरम् /
पाञ्चाल्यामोढ्रमागध्यां योज्यं द्वारं तु दक्षिणम् // ना. शा_१३.५३ //
एकीभूताः पुनश्चैताः प्रयोक्तव्याः प्रयोक्तृभिः /
पार्षदं देशकालौ वाप्यर्थयुक्तिमवेक्ष्य च // ना. शा_१३.५४ //
येषु देशेषु या कार्या प्रवृत्तिः परिकीर्तिता /
तद्वृत्तिकानि रूपाणि तेषु तज्ज्ञः प्रयोजयेत् // ना. शा_१३.५५ //
एकीभूताः पुनस्त्वेता नाटकादौ भवन्ति हि /
अवेक्ष्य वृत्तिबाहुल्यं तत्तत्कर्म समाचरेत् // ना. शा_१३.५६ //
सार्थे बाहुल्यमेकस्य शेषाणामथ बुद्धिमान् /
येषामन्यस्य बाहुल्यं प्रवृत्तिं पूरयेत्तदा // ना. शा_१३.५७ //
प्रयोगो द्विविधश्चैव विज्ञेयो नाटकाश्रयः /
सुकुमारस्तथाविद्धो नाट्ययुक्तिसमाश्रयः // ना. शा_१३.५८ //

यत्वाविद्धाङ्गहारन्तु च्चेद्यभेद्याहवात्मकम् /
मायेन्द्रजालबहुलं पुस्तनेपथ्यसंयुतम् // ना. शा_१३.५९ //
पुरुषैर्बहुभिर्युक्तमल्पस्त्रीकं तथैव च /
सात्त्वत्यारभटीयुक्तं नाट्यमाविद्धसंज्ञितम् // ना. शा_१३.६० //
डिमः समवकारश्च व्यायोगेहामृगौ तथा /
एतान्याविद्धसंज्ञानि विज्ञेयानि प्रयोक्तृभिः // ना. शा_१३.६१ //
एषां प्रयोगः कर्तव्यो दैत्यदानवराक्षसैः /
उद्धता ये च पुरुषाः शौर्यवीर्यबलान्विताः // ना. शा_१३.६२ //
नाटकं सप्रकरणं भाणो वीथ्यङ्कनाटिके /
सुकुमारप्रयोगाणि मानुषेष्वाश्रितास्तु ये // ना. शा_१३.६३ //
अथ बाह्यप्रयोगेषु प्रेक्षागृहविवर्जिते /
विदिक्ष्वपि भवेद्रङ्गः कदाचिद् भर्तुराज्ञया // ना. शा_१३.६४ //
पृष्ठ कुतपं नाट्ये युक्ता यतो मुखं भरताः /
सा पूर्वा मन्तव्या प्रयोगकाले तु नाट्यज्ञैः // ना. शा_१३.६५ //
द्वाराणि षट् चैव भवन्ति चास्य
रङ्गस्य दिग्भागविनिश्चितानि ।
नाट्यप्रयोगेण खलु प्रवेशे
प्राच्यां प्रतीच्यां च दिशि प्रवेशः // ना. शा_१३.६६ //
विधानमुत्क्रम्य यथा च रङ्गे
विना प्रमाणाद्विदिशः प्रयोगे ।
द्वारन्तु यस्मात्समृदङ्गभाण्डं
प्राचीं दिशं तां मनसाऽध्यवस्येत् // ना. शा_१३.६७ //
वयो ऽनुरूपः प्रथमन्तु वेशो वेशो ऽनुरूपश्च गतिप्रचारः ।
गतिप्रचारानुगतश्च पाठ्यं
पाठ्यानुरूपाभिनयश्च कार्यः // ना. शा_१३.६८ //
धर्मी या द्विविधा प्रोक्ता मया पूर्वं द्विजोत्तमाः /
लौकिकी नाट्यधर्मी च तयोर्वक्ष्यामि लक्षणम् // ना. शा_१३.६९ //
स्वभावभावोपगतं शुद्धं त्वविकृतं तथा /
लोकवार्ताक्रियोपेतमङ्गलीलाविवर्जितम् // ना. शा_१३.७० //
स्वभावाभिनयोपेतं नानास्त्रीपुरुषाश्रयम् /
यदीदृशं भवेन्नाट्यं लोकधर्मी तु सा स्मृता // ना. शा_१३.७१ //
अतिवाक्यक्रियोपेतमतिसत्त्वातिभावकम् /
लीलाङ्गहाराभिनयं नाट्यलक्षणलक्षितम् // ना. शा_१३.७२ //
स्वरालङ्कारसंयुक्तमस्वस्थपुरुषाश्रयम् /
यदीदृशं भवेन्नाट्यं नाट्यधर्मी तु सा स्मृता // ना. शा_१३.७३ //
लोकप्रसिद्धं द्रव्यन्तु यदा नाट्ये प्रयुज्यते /
मूर्तिमत् साभिलाषञ्च नाट्यधर्मी तु सा स्मृता // ना. शा_१३.७४ //
आसन्नोक्तन्तु यद्वाक्यं न शृण्वन्ति परस्परम् /
अनुक्तं श्रूयते वाक्यं नाट्यधर्मी तु सा स्मृता // ना. शा_१३.७५ //

शैलयानविमानानि चर्मवर्मायुधध्वजाः /
मूर्तिमन्तः प्रयुज्यन्ते नाट्यधर्मी तु सा स्मृता // ना. शा_१३.७६ //
य एकां भूमिकां कृत्वा कुर्वीतैकान्तरे ऽपराम् /
कौशल्यादेककत्वाद्वा नाट्यधर्मी तु सा स्मृता // ना. शा_१३.७७ //
या गम्या प्रमदा भूत्वा गम्या भूमिषु युज्यते /
गम्या भूमिष्वगम्या च नाट्यधर्मी तु सा स्मृता // ना. शा_१३.७८ //
ललितैरङ्गविन्यासैस्तथोत्क्षिप्तपदक्रमैः /
नृत्यते गम्यते यच्च नाट्यधर्मी तु सा स्मृता // ना. शा_१३.७९ //
यो ऽयं स्वभावो लोकस्य सुखदुःखक्रियात्मकः /
सो ऽङ्गाभिनयसंयुक्तो नाट्यधर्मी तु सा स्मृता // ना. शा_१३.८० //
यश्चेतिहासवेदार्थो ब्रह्मणा समुदाहृतः /
दिव्यमानुषरत्यर्थं नाट्यधर्मी तु सा स्मृता // ना. शा_१३.८१ //
यश्च कक्ष्याविभागो ऽयं नानाविधिसमाश्रितः /
रङ्गपीठगतः प्रोक्तो नाट्यधर्मी तु सा भवेत् // ना. शा_१३.८२ //
नाट्यधर्मीप्रवृत्तं हि सदा नाट्यं प्रयोजयेत् /
न ह्यङ्गाभिनयात्किञ्चिद्दते राग प्रवर्तते // ना. शा_१३.८३ //
सर्वस्य सहजो भावः सर्वो ह्यभिनयो ऽर्थतः /
अङ्गालङ्कारचेष्टाभिर्नाट्यधर्मी प्रकीर्तिता // ना. शा_१३.८४ //
एवं कक्ष्याविभागस्तु धर्मी युक्तय एव च /
विज्ञेया नाट्यतत्त्वज्ञैः प्रयोक्तव्याश्च तत्त्वतः // ना. शा_१३.८५ //
उक्तो मयेहाभिनयो यथावत् शाखाकृतो यश्च कृतो ऽङ्गहारैः /
पुनश्च वाक्याभिनयं यथावद्वक्ष्ये स्वरव्यञ्जनवर्णयुक्तम् // ना. शा_१३.८६ //

इति भरतीये नाट्यशास्त्रे करयुक्तिधर्मीव्यञ्जको नाम त्रयोदशो ऽध्यायः

---

अथ चतुर्दशो ऽध्यायः
यो वागभिनयः प्रोक्तो मया पूर्वं द्विजोत्तमाः /
लक्षणं तस्य वक्ष्यामि स्वरव्यञ्जनसम्भवम् // ना. शा_१४.१ //
वाचि यत्नस्तु कर्तव्यो नाट्यस्येयं तनुः स्मृता /
अङ्गनेपथ्यसत्त्वानि वाक्यार्थं व्यञ्जयन्ति हि // ना. शा_१४.२ //
वाङ्मयानीह शास्त्राणि वाङ्निष्ठानि तथैव च /
तस्माद्वाचः परं नास्ति वाग् हि सर्वस्य कारणम् // ना. शा_१४.३ //
आगमनामाख्यातनिपातोपसर्गसमासतद्धितैर्युक्तः /
सन्धिवचनविभक्त्युपग्रहनियुक्तो वाचिकाभिनयः // ना. शा_१४.४ //
द्विविधं हि स्मृतं पाठ्यं संस्कृतं प्राकृतं तथा /
तयोर्विभागं वक्ष्यामि यथावदनुपूर्वशः // ना. शा_१४.५ //
व्यञ्जनानि स्वराश्चैव सन्धयो ऽथ विभक्तयः /
नामाख्यातोपसर्गाश्च निपातास्तद्धितास्तथा // ना. शा_१४.६ //

एतैरङ्गैः समासैश्च नानाधातुसमाश्रयम् /
विज्ञेयं संस्कृतं पाठ्यं प्रयोगञ्च निबोधत // ना. शा_१४.७ //
अकाराद्याः स्वरा ज्ञेया औकारान्ताश्चतुर्दश /
हकारान्तानि कादीनि व्यञ्जनानि विदुर्बुधाः // ना. शा_१४.८ //
तत्र स्वराश्चतुर्दश - अ आ इ ई उ ऊ ऋ ? ? ? ए ऐ
ओ औ इति स्वरा ज्ञेयाः ॥
कादीनि व्यञ्जनानि यथा - क ख ग घ ङ च च ज झ
ञ ट ठ ड ढ ण त थ द ध न प फ ब भ म य र ल व
श ष स ह इति व्यञ्जनवर्गः ।
वर्गे वर्गे समाख्यातौ द्वौ वर्णौ प्रागवस्थितौ /
अघोषा इति ये त्वन्ये सघोषाः संप्रकीर्तिताः // ना. शा_१४.९ //
अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा /
जिह्वामूलञ्च दन्ताश्च नासिकोष्ठौ च तालु च // ना. शा_१४.१० //
अ कु ह विसर्जनीयाः कण्ठ्याः । इ चु य शास्तालव्याः ।
ऋ टु र षा मूर्धन्याः । ? तु ल सा दन्त्याः । उ
पूपध्मानीया ओष्ठ्याः । -प -फ इति पफाभ्यां प्राक्
अर्धविसर्गसदृशः उपध्मानीयः । -क -ख इति कखाभ्यां
प्राक् अर्धविसर्गसदृशो जिह्वमूलीयः । ए ऐ कण्ठ्यतालव्यौ ।
ओ औ कण्ठ्योष्ठ्यौ । वकारो दन्त्योष्ठ्यः । ङ ञ ण न मा
अनुनासिकाः । विसर्जनीयः औरस्यः इत्येके ।
सर्ववर्णानां मुखं स्थानमित्यपरे ।
द्वौ द्वौ वर्णौ तु वर्गाद्यौ शषसाश्च त्रयो ऽपरे /
अघोषा घोषवन्तस्तु ततो ऽन्ये परिकीर्तिताः // ना. शा_१४.११ //
एते घोषाघोषाः कण्ठ्योष्ठ्या दन्त्यजिह्वानुनासिक्याः /
ऊष्माणस्तालव्याः विसर्जनीयाश्च बोद्धव्याः // ना. शा_१४.१२ //
गघङ जझञ डढण दधन बभम तथैव यरलवा मता घोषाः /
कख चच टठ तथ पफ इति वर्गेष्वघोषाः स्युः // ना. शा_१४.१३ //
कखगघङाः कण्ठस्थास्तालुस्थानास्तु चचजझञाः /
टठडढणा मूर्धन्यास्तथदधनाश्चैव दन्तस्थाः // ना. शा_१४.१४ //
पफबभमास्त्वोष्ठ्याः स्युः दन्त्या ?लसा अहौ च कण्ठस्थौ /
तालव्या इचुयशा स्युरृटुरषा मूर्धस्थिता ज्ञेयाः // ना. शा_१४.१५ //
?? दन्त्यौ ओऔ कण्ठोष्ठ्यौ एऐकारौ च कण्ठतालव्यौ /
कण्ठ्यो विसर्जनीयो जिह्वामूलमुद्भवः कखयोः // ना. शा_१४.१६ //
पफयोरोष्ठस्थानं भवेदुकारः स्वरो विवृतः /
स्पृष्टाः काद्या मान्ताः शषसहकारास्तथा विवृताः // ना. शा_१४.१७ //
अन्तस्थाः संवृतजाः ङञणनमा नासिकोद्भवा ज्ञेयाः /
ऊष्माणश्च शषसहाः यरलववर्णास्तथैव चान्तःस्थाः // ना. शा_१४.१८ //
जिह्वामूलीयः -कः -प उपध्मानीयसंज्ञया ज्ञेयः /
कचटतपा स्वरिताः स्युः खचठथफा स्युः सदा क्रम्याः // ना. शा_१४.१९ //

कण्ठ्योरस्यान् विद्यात् घझढधभान् पाठ्यसंप्रयोगे तु /
वेद्यो विसर्जनीयो जिह्वास्थाने स्थितो वर्णः // ना. शा_१४.२० //
एते व्यञ्जनवर्णाः समासतः संज्ञया मया कथिताः /
शब्दविषयप्रयोगे स्वरा.ण्स्तु भूयः प्रवक्ष्यामि // ना. शा_१४.२१ //
यस्मिन् स्थाने स समो विज्ञेयो यः सवर्णसंज्ञो ऽसौ ।
य इमे स्वराश्चतुर्दश निर्दिष्टास्तत्र वै दश समानाः /
पूर्वो ह्रस्वः तेषां परश्च दीर्घो ऽवगन्तव्यः // ना. शा_१४.२२ //
इत्थं व्यञ्जनयोगैः स्वरैश्च साख्यातनामपदविहितैः /
काव्यनिबन्धाश्च स्युर्धातुनिपातोपसर्गास्तु // ना. शा_१४.२३ //
एभिर्व्यञ्जनवर्गैर्नामाख्यातोपसर्गनिपातैः /
तद्धितसन्धिविभक्तिभिरधिष्ठितः शब्द इत्युक्तः // ना. शा_१४.२४ //
पूर्वाचार्यैरुक्तं शब्दानां लक्षणं समासयोगेन /
विस्तरशः पुनरेव प्रकरणवशात् संप्रवक्ष्यामि // ना. शा_१४.२५ //
अर्थप्रधानं नाम स्यादाख्यातं तु क्रियाकृतम् /
द्योतयन्त्युपसर्गास्तु विशेषं भावसंश्रयम् // ना. शा_१४.२६ //
तत्प्राहुः सप्तविधं षट्कारकसंयुतं प्रथितसाध्यम् /
निर्देशसंप्रदानापदानप्रभृतिसंज्ञाभिः // ना. शा_१४.२७ //
नामाख्यातार्थविषयं विशेषं द्योतयन्ति ते /
पृथक्तत्रोपसर्गेभ्यो निपाता नियमे ऽच्युते // ना. शा_१४.२८ //
संप्रत्यतीतकालक्रियादिसंयोजितं प्रथितसाध्यम् /
वचनं नागतयुक्तं सुसदृशसंयोजनविभक्तम् // ना. शा_१४.२९ //
पञ्चशतधातुयुक्तं पञ्चगुणं पञ्चविधमिदं वापि ।
स्वाद्यधिकारगुणैरर्थविशेषैर्विभूषितन्यासम् /
प्रातिपदिकार्थलिङ्गैर्युक्तं पञ्चविधमिदं ज्ञेयम् // ना. शा_१४.३० //
आख्यातं पाठ्यकृतं ज्ञेयं नानार्थाश्रयविशेषम् /
वचनं नामसमेतं पुरुषविभक्तं तदाख्यातम् // ना. शा_१४.३१ //
प्रातिपदिकार्थयुक्तान्धात्वर्थानुपसृजन्ति ये स्वार्थैः /
उपसर्गा ह्युपदिष्टास्तस्मात् संस्कारशास्त्रे ऽस्मिन् // ना. शा_१४.३२ //
प्रातिपदिकार्थयोगाद्धातुच्चन्दोनिरुक्तयुक्त्या च /
यस्मान्निपतन्ति पदे तस्मात्प्रोक्ता निपातास्तु // ना. शा_१४.३३ //
प्रत्ययविभागजनिताः प्रकर्षसंयोगसत्ववचनैश्च /
यस्मात्पूरयते ऽर्थान् प्रत्यय उक्तस्ततस्तस्मात् // ना. शा_१४.३४ //
लोके प्रकृतिप्रत्ययविभागसंयोगसत्ववचनैश्च /
तांस्तान् पूरयते ऽर्थांस्तेषु यस्तद्धितस्तस्मात् // ना. शा_१४.३५ //
एकस्य बहूनां वा धातोर्लिङ्गस्य वा पदानां वा /
विभजन्त्यर्थं यस्मात् विभक्तयस्तेन ताः प्रोक्ताः // ना. शा_१४.३६ //
विशिष्टास्तु स्वरा यत्र व्यञ्जनं वापि योगतः /
सन्धीयते पदे यस्मात्तस्मात् सन्धिः प्रकीर्तितः // ना. शा_१४.३७ //
वर्णपदक्रमसिद्धः पदैकयोगाच्च वर्णयोगाच्च /

सन्धीयते च यस्मात्तस्मात् सन्धिः समुद्दिष्टः // ना. शा_१४.३८ //
लुप्तविभक्तिर्नाम्नामेकार्थं संहरत्समासो ऽपि /
तत्पुरुषादिकसंज्ञैर्निर्दिष्टः षड्विधो विप्राः // ना. शा_१४.३९ //
एभिः शब्दविधानैर्विस्तारव्यञ्जनार्थसंयुक्तैः /
पदबन्धाः कर्तव्या निबद्धबन्धास्तु चूर्णा वा // ना. शा_१४.४० //
विभक्त्यन्तं पदं ज्ञेयं निबद्धं चूर्णमेव च /
तत्र चूर्णपदस्येह सन्निबोधत लक्षणम् // ना. शा_१४.४१ //
अनिबद्धपदं चन्दोविधानानियताक्षरम् /
अर्थापेक्ष्यक्षरस्यूतं ज्ञेयं चूर्णपदं बुधैः // ना. शा_१४.४२ //
निबद्धाक्षरसंयुक्तं यतिच्चेदसमन्वितम् /
निबद्धं तु पदं ज्ञेयं प्रमाणनियतात्मकम् // ना. शा_१४.४३ //
एवं नानार्थसंयुक्तैः पादैर्वर्णविभूषितैः /
चतुर्भिस्तु भवेद्युक्तं चन्दो वृत्ताभिधानवत् // ना. शा_१४.४४ //
षड्विंशतिः स्मृतान्येभिः पादैश्चन्दसि संख्यया /
समञ्चार्धसमञ्चैव तथा विषममेव च // ना. शा_१४.४५ //
चन्दोयुक्तं समासेन त्रिविधं वृत्तमिष्यते /
नानावृत्तिविनिष्पन्ना शब्दस्यैषा तनूस्स्मृता // ना. शा_१४.४६ //
चन्दोहीनो न शब्दो ऽस्ति न च्चन्दश्शब्दवर्जितम् /
तस्मात्तूभ्यसंयोगो नाट्यस्योद्योतकः स्मृतः // ना. शा_१४.४७ //
एकाक्षरं भवेदुक्तमत्युक्तं द्व्यक्षरं भवेत् /
मध्यं त्र्यक्षरमित्याहुः प्रतिष्ठा चतुरक्षरा // ना. शा_१४.४८ //
सुप्रतिष्ठा भवेत् पञ्च गायत्री षड् भवेदिह /
सप्ताक्षरा भवेदुष्णिगष्टाक्षरानुष्टुबुच्यते // ना. शा_१४.४९ //
नवाक्षरा तु बृहती पङ्क्तिश्चैव दशाक्षरा /
एकादशाक्षरा त्रिष्टुब् जगती द्वादशाक्षरा // ना. शा_१४.५० //
त्रयोदशाऽतिजगती शक्वरी तु चतुर्दशा /
अतिशक्वरी पञ्चदशा षोडशाष्टिः प्रकीर्तिता // ना. शा_१४.५१ //
अत्यष्टिः स्यात्सप्तदशा धृतिरष्टादशाक्षरा /
एकोनविंशतिर्धृतिः कृतिर्विंशतिरेव च // ना. शा_१४.५२ //
प्रकृतिश्चैकविंशत्या द्वाविंशत्याकृतिस्तथा /
विकृतिः स्यात् त्रयोविंशा चतुर्विंशा च संकृतिः // ना. शा_१४.५३ //
पञ्चविंशत्यतिकृतिः षड्विंशत्युत्कृतिर्भवेत् /
अतो ऽधिकाक्षरं चन्दो मालावृत्तं तदिष्यते // ना. शा_१४.५४ //
चन्दसां तु तथा ह्येते भेदाः प्रस्तारयोगतः /
असंख्येयप्रमाणानि वृत्तान्याहुरतो बुधाः // ना. शा_१४.५५ //
गायत्रीप्रभृतित्वेषां प्रमाणं संविधीयते /
प्रयोगजानि सर्वाणि प्रायशो न भवन्ति हि // ना. शा_१४.५६ //
वृत्तानि च चतुष्षष्टिर्गायत्र्यां कीर्तितानि तु /
शतं विंशतिरष्टौ च वृत्तान्युष्णिह्यथोच्यते // ना. शा_१४.५७ //

षट्पञ्चाशच्चते द्वे च वृत्तानामप्यनुष्टुभि /
शतानि पञ्च वृत्तानां बृहत्यां द्वादशैव च // ना. शा_१४.५८ //
पङ्क्त्यां सहस्रं वृत्तानां चतुर्विंशतिरेव च /
त्रैष्टुभे द्वे सहस्रे च चत्वारिंशत्तथाष्ट च // ना. शा_१४.५९ //
सहस्राण्यपि चत्वारि नवतिश्च षडुत्तरा /
जगत्यां समवर्णानां वृत्तानामिह सर्वशः // ना. शा_१४.६० //
अष्टौ सहस्राणि शतं द्व्यधिका नवतिः पुनः /
जगत्यामतिपूर्वायां वृत्तानां परिमाणतः // ना. शा_१४.६१ //
शतानि त्रीण्यशीतिश्च सहस्राण्यपि षोडश /
वृत्तानि चैव चत्वारि शक्वर्याः परिसंख्यया // ना. शा_१४.६२ //
द्वात्रिंशच्च सहस्राणि सप्त चैव शतानि च /
अष्टौ षष्टिश्च वृत्तानि ह्याश्रयन्त्यतिशक्वरीम् // ना. शा_१४.६३ //
पञ्चषष्टिसहस्राणि सहस्रार्धञ्च संख्यया /
षट्त्रिंशच्चैव वृत्तानि ह्यष्ट्यां निगदितानि च // ना. शा_१४.६४ //
एकत्रिंशत्सहस्राणि वृत्तानाञ्च द्विसप्ततिः /
तथा शतसहस्रञ्च चन्दांस्यत्यष्टिसंज्ञिते // ना. शा_१४.६५ //
धृत्यामपि हि पिण्डेन वृत्तान्याकल्पितानि तु /
तज्ज्ञैः शतसहस्रे द्वे शतमेकं तथैव च // ना. शा_१४.६६ //
द्विषष्टिश्च सहस्राणि चत्वारिंशच्च योगतः /
चत्वारि चैव वृत्तानि समसंख्याश्रयाणि तु // ना. शा_१४.६७ //
अतिधृत्यां सहस्राणि चतुर्विंशतिरेव च /
तथा शतसहस्राणि पञ्च वृत्तशतद्वयम् // ना. शा_१४.६८ //
अष्टाशीतिश्च वृत्तानि वृत्तज्ञैः कथितानि च /
कृतौ शतसहस्राणि दश प्रोक्तानि संख्यया // ना. शा_१४.६९ //
चत्वारिंशत्तथा चाष्टौ सहस्राणि शतानि च /
पञ्चषट्सप्ततिश्चैव वृत्तानां परिमाणतः // ना. शा_१४.७० //
तथा शतसहस्राणां प्रकृतौ विंशतिर्भवेत् /
सप्त वै गदितास्त्वत्र नवतिश्चैव संख्यया // ना. शा_१४.७१ //
सहस्राणि शतं चैकं द्विपञ्चाशत्तथैव च /
वृत्तानि परिमाणेन वृत्तज्ञैर्गदितानि तु // ना. शा_१४.७२ //
चत्वारिंशत्तथैकञ्च लक्षाणामथ संख्यया /
तथा चेह सहस्राणि नवतिश्चतुरुत्तरा // ना. शा_१४.७३ //
शतत्रयं समाख्यातं ह्याकृत्यां चतुरुत्तरम् /
ज्ञेया शतसहस्राणामशीतिस्त्र्यधिका बुधैः // ना. शा_१४.७४ //
अष्टाशीति सहस्राणि वृत्तानां षट् शतानि च /
अष्टौ चैव तु वृत्तानि विकृत्यां गदितानि तु // ना. शा_१४.७५ //
तथा शतसहस्राणि सप्तषष्टिश्च सप्ततिः /
सप्त चैव सहस्राणि षोडशे द्वे शते तथा // ना. शा_१४.७६ //
कोटिश्चैवेह वृत्तानि संकृतौ कथितानि वै /

कोटित्रयञ्चाभिकृत्यां पञ्चत्रिंशद्भिरन्वितम् // ना. शा_१४.७७ //
पञ्चाशद्भिः सहस्रैश्च चतुर्भिरधिकैस्तथा /
चतुष्टयं शतानाम् च द्वात्रिंशद्भिः समन्वितम् // ना. शा_१४.७८ //
षट् कोटयस्तथोत्कृत्यां लक्षाणामेकसप्ततिः /
चतुष्षष्टिशतान्यष्टौ सहस्राण्यष्ट चैव हि // ना. शा_१४.७९ //
उक्तादुत्कृतिपर्यन्तवृत्तसंख्यां विचक्षणः /
एतेन च विकल्पेन वृत्तेष्वेतेषु निर्दिशेत् // ना. शा_१४.८० //
सर्वेषां चन्दसामेवं वृत्तानि कथितानि वै /
तिस्रः कोटयो दश तथा सहस्राणां शतानि तु // ना. शा_१४.८१ //
चत्वारिंशत्तथा द्वे च सहस्राणि दशैव तु /
सप्तभिः सहितान्येव सप्त चैव शतानि च // ना. शा_१४.८२ //
षड्विंशतिरिहान्यानि व्याख्यातानि समासतः /
समानि गणनायुक्तिमाश्रित्य कथितानि वै // ना. शा_१४.८३ //
सर्वेषां चन्दसामेवं त्रिकैर्वृत्तं प्रयोजयेत् /
ज्ञेयाश्चाष्टौ त्रिकास्तत्र संज्ञाभिः स्थानमच्चरम् // ना. शा_१४.८४ //
त्रीण्यक्षराणि विज्ञेयस्त्रिको ऽंशः परिकल्पितः /
गुरुलघ्वक्षरकृतः सर्ववृत्तेषु नित्यशः // ना. शा_१४.८५ //
गुरुपूर्वो भकारः स्यान्मकारे तु गुरुत्रयम् /
जकारो गुरुमध्यस्थः सकारो ऽन्त्यगुरुस्तथा // ना. शा_१४.८६ //
लघुमध्यस्थितो रेफस्तकारो ऽन्त्यलघुः परः /
लघुपूर्वो यकारस्तु नकारे तु लघुत्रयम् // ना. शा_१४.८७ //
एते ह्यष्टौ त्रिकाः प्राज्ञैर्विज्ञेया ब्रह्मसम्भवाः /
लाघवार्थं पुनरमी चन्दोज्ञानमवेक्ष्य च // ना. शा_१४.८८ //
एभिर्विनिर्गताश्चान्या जातयो ऽथ समादयः /
अस्वराः सस्वराश्चैव प्रोच्यन्ते वृत्तलक्षणैः // ना. शा_१४.८९ //
गुर्वेकं गिति विज्ञेयं तथा लघु लिति स्मृतम् /
नियतः पदविच्चेदो यतिरित्यभिधीयते // ना. शा_१४.९० //
गुरु दीर्घं प्लुतञ्चैव संयोगपरमेव च /
सानुस्वारविसर्गं च तथान्त्यञ्च लघु क्वचित् // ना. शा_१४.९१ //
गायत्र्यां द्वौ त्रिकौ ज्ञेयौ उष्णिक् चैकाधिकाक्षरा /
अनुष्टुप् द्व्यधिका चैव बृहत्यां च त्रिकास्त्रयः // ना. शा_१४.९२ //
एकाक्षराधिका पङ्क्तिस्त्रिष्टुप् च द्व्यधिकाक्षरा /
चतुस्त्रिका तु जगती सैकातिजगती पुनः // ना. शा_१४.९३ //
शक्वरी द्व्यधिका पञ्चत्रिका ज्ञेयातिशक्वरी /
एकाधिकाक्षराष्टिश्च द्व्यधिकात्यष्टिरुच्यते // ना. शा_१४.९४ //
षट्त्रिकास्तु धृतिः प्रोक्ता सैका चातिधृतिस्तथा /
कृतिश्च द्व्यधिका प्रोक्ता प्रकृत्यां सप्त वै त्रिकाः // ना. शा_१४.९५ //
आकृतिस्त्वधिकैकेन द्व्यधिका विकृतिस्तथा /
अष्टत्रिकाः संकृतौ स्यात् सैका चाभिकृतिः पुनः // ना. शा_१४.९६ //

उत्कृतिर्द्व्यधिका चैव विज्ञेया गणमानतः ।
गुर्वेकं ग इति प्रोक्तं गुरुणी गाविति स्मृतौ /
लघ्वेकं ल इति ज्ञेयं लघुनी लाविति स्मृतौ // ना. शा_१४.९७ //
संपद्विरामपादाश्च दैवतस्थानमक्षरम् /
वर्णः स्वरो विधिर्वृत्तमिति चन्दोगतो विधिः // ना. शा_१४.९८ //
नैवातिरिक्तं हीनं वा यत्र संपद्यते क्रमः /
विधाने च्चन्दसामेष संपदित्यभिसंज्ञितः // ना. शा_१४.९९ //
यत्रार्थस्य समाप्तिः स्यात् स विराम इति स्मृतः /
पादश्च पद्यतेर्धातोश्चतुर्भाग इति स्मृतः // ना. शा_१४.१०० //
अग्न्यादिदैवतं प्रोक्तं स्थानं द्विविधमुच्यते /
शरीराश्रयसंभूतं दिगाश्रयमथापि च // ना. शा_१४.१०१ //
शारीरं मन्त्रसंभूतं चन्दो गायत्रसंज्ञितम् /
क्रुष्टे मध्यं दिनं प्रोक्तं त्रैष्टुभं परिकीर्त्यते // ना. शा_१४.१०२ //
तृतीयसवनञ्चापि शीर्षण्यं जागतं हि यत् /
ह्रस्वं दीर्घं प्लुतञ्चैव त्रिविधञ्चाक्षरं स्मृतम् // ना. शा_१४.१०३ //
श्वेतादयस्तथा वर्णा विज्ञेयाश्चन्दसामिह /
तारश्चैव हि मन्द्रश्च मध्यमस्त्रिविधः स्वरः // ना. शा_१४.१०४ //
ध्रुवाविधाने चैवास्य संप्रवक्ष्यामि लक्षणम् /
विधिर्गणकृतश्चैव तथैवार्थकृतो भवेत् // ना. शा_१४.१०५ //
चन्दतो यस्य पादे स्याद्धीनं वाऽधिकमेव वा /
अक्षरं निचृदिति प्रोक्तं भूरिक् चेति द्विजोत्तमाः // ना. शा_१४.१०६ //
अक्षराभ्यां सदा द्वाभ्यामधिकं हीनमेव वा /
तच्चन्दो नामतो ज्ञेयं स्वराडिति विराडपि // ना. शा_१४.१०७ //
सर्वेषामेव वृत्तानां तज्ज्ञैर्ज्ञेया गणास्त्रयः /
दिव्यो दिव्येतरश्चैव दिव्यमानुष एव च // ना. शा_१४.१०८ //
गायत्र्युष्णिगनुष्टुप् च बृहती पङ्क्तिरेव च /
त्रिष्टुप् च जगती चैव दिव्यो ऽयं प्रथमो गणः // ना. शा_१४.१०९ //
तथातिजगती चैव शक्वरी चातिशक्वरी /
अष्टिरत्यष्टिरपि च धृतिश्चातिधृतिर्गणः // ना. शा_१४.११० //
कृतिश्च प्रकृतिश्चैव ह्याकृतिर्विकृतिस्तथा /
संकृत्यभिकृती चैव उत्कृतिर्दिव्यमानुषा // ना. शा_१४.१११ //
एतेषां चन्दसां भूयः प्रस्तारविधिसंश्रयम् /
लक्षणं संप्रवक्ष्यामि नष्टमुद्दिष्टमेव च // ना. शा_१४.११२ //
प्रस्तारो ऽक्षरनिर्दिष्टो मात्रोक्तश्च तथैव हि /
द्विकौ ग्लाविति वर्णोक्तौ मिश्रौ चेत्यपि मात्रिकौ // ना. शा_१४.११३ //
गुरोरधस्तादाद्यस्य प्रस्तारे लघु विन्यसेत् /
अग्रतस्तु समादेया गुरवः पृष्ठतस्तथा // ना. शा_१४.११४ //
प्रथमं गुरुभिर्वर्णैर्लघुभिस्त्ववसानजम् /
वृत्तन्तु सर्वचन्दस्सु प्रस्तारविधिरेव तु // ना. शा_१४.११५ //

गुर्वधस्ताल्लघुं न्यस्य तथा द्विद्वि यथोदितम् /
न्यस्येत् प्रस्तारमार्गो ऽयमक्षरोक्तस्तु नित्यशः // ना. शा_१४.११६ //
मात्रासंख्याविनिर्दिष्टो गणो मात्राविकल्पितः /
मिश्रौ ग्लाविति विज्ञेयौ पृथक् लक्ष्यविभागतः // ना. शा_१४.११७ //
मात्रागणो गुरुश्चैव लघुनी चैव लक्षिते /
आर्याणां तु चतुर्मात्राप्रस्तारः परिकल्पितः // ना. शा_१४.११८ //
गीतकप्रभृतीनान्तु पञ्चमात्रो गणः स्मृतः /
वैतालीयं पुरस्कृत्य षण्मात्राद्यास्तथैव च // ना. शा_१४.११९ //
त्र्यक्षरास्तु त्रिका ज्ञेया लघुगुर्वक्षरान्विताः /
मात्रागणविभागस्तु गुरुलघ्वक्षराश्रयः // ना. शा_१४.१२० //
अन्त्याद् द्विगुणिताद्रूपाद् द्विद्विरेकं गुरोर्भवेत् /
द्विगुणाञ्च लघोः कृत्वा संख्यां पिण्डेन योजयेत् // ना. शा_१४.१२१ //
आद्यं सर्वगुरु ज्ञेयं वृत्तन्तु समसंज्ञितम् /
कोशं तु सर्वलघ्वन्त्यं मिश्ररूपाणि सर्वतः // ना. शा_१४.१२२ //
वृत्तानां तु समानानां संख्यां संयोज्य तावतीम् /
राश्यूनामर्धविषमां समासादभिनिर्दिशेत् // ना. शा_१४.१२३ //
एकादिकां तथा संख्यां चन्दसो विनिवेश्य तु /
यावत् पूर्णन्तु पूर्वेण पूरयेदुत्तरं गणम् // ना. शा_१४.१२४ //
समानां विषमाणां च संगुणय्य तथा स्फुटम् /
राश्यूनामभिजानीयाद्विषमाणां समासतः // ना. शा_१४.१२५ //
एवं कृत्वा तु सर्वेषां परेषां पूर्वपूरणम् /
क्रमान्नैधनमेकैकं प्रतिलोमं विसर्जयेत् // ना. शा_१४.१२६ //
सर्वेषां चन्दसामेवं लघ्वक्षरविनिश्चयम् /
जानीत समवृत्तानां संख्यां संक्षेपतस्तथा // ना. शा_१४.१२७ //
वृत्तस्य परिमाणन्तु चित्वार्धेन यथाक्रमम् /
न्यसेल्लघु यथा सैकमक्षरं गुरु चाप्यथ // ना. शा_१४.१२८ //
एवं विन्यस्य वृत्तानां नष्टोद्दिष्टविभागतः /
गुरुलघ्वक्षराणीह सर्वचन्दस्सु दर्शयेत् // ना. शा_१४.१२९ //
इति चन्दांसि यानीह मयोक्तानि द्विजोत्तमाः /
वृत्तान्येतेषु नाट्ये ऽस्मिन् प्रयोज्यानि निबोधत // ना. शा_१४.१३० //

इति भरतीये नाट्यशास्त्रे वाचिकाभिनये चन्दोविधानं नाम चतुर्दशो ऽध्यायः

---

अथ पञ्चदशो ऽध्यायः

चन्दांस्येवं हि यानीह मयोक्तानि द्विजोत्तमाः /
वृत्तानि तेषु नाट्ये ऽस्मिन् प्रयोज्यानि निबोधत // ना. शा_१५.१ //
आद्ये पुनरन्त्ये द्वे द्वे गुरुणी चेत् /

सा स्यात्तनुमध्या गायत्रसमुत्था // ना. शा_१५.२ //
यथा:
संत्यक्तविभूषा भ्रष्टाञ्जननेत्रा /
हस्तार्पितगण्डा किं त्वं तनुमध्या // ना. शा_१५.३ //
लघुगण आदौ भवति चतुष्कः /
गुरुयुगमन्त्ये मकरकशीर्षा // ना. शा_१५.४ //
यथा:
स्वयमुपयान्तं भजसि न कान्तम् /
भयकरि किं त्वं मकरकशीर्षा // ना. शा_१५.५ //
एकमात्रं षट्के स्याद् द्वितीयं पादे /
ख्यातरूपा वृत्ते सा मालिनी नाम्ना // ना. शा_१५.६ //
षडक्षरकृते पादे लघु यत्र द्वितीयकम् /
शेषाणि तु गुरूणि स्युर्मालिनी सा मता यथा // ना. शा_१५.७ //
स्नानगन्धाधिक्यैर्वस्त्रभूषायोगैः /
व्यक्तमेवासौ त्वं मालिनी प्रख्याता // ना. शा_१५.८ //
द्वितीयं पञ्चमं चैव लघु यत्र प्रतिष्ठितम् /
शेषाणि च गुरूणि स्युर्मालती नाम सा यथा // ना. शा_१५.९ //
शोभते बद्धया षट्पदाविद्धया /
मालतीमालया मानिनी लीलया // ना. शा_१५.१० //
द्वितीयं च चतुर्थं च पञ्चमं च यदा लघु /
यस्याः सप्ताक्षरे पादे ज्ञेया सा तूद्धता यथा // ना. शा_१५.११ //
सौ त्रिकौ यदि पादे ह्यन्तिमश्च गकारः /
उष्णिगुत्थितपादा उद्धता खलु नाम्ना // ना. शा_१५.१२ //
दन्तकृन्तकृतास्त्रं व्याकुलालकशोभम् /
शंसतीव तवास्यं निर्दयं रतयुद्धम् // ना. शा_१५.१३ //
आदौ द्वे निधने चैव गुरुणी यत्र वै सदा /
पादे सप्ताक्षरे ज्ञेया नाम्ना भ्रमरमालिका // ना. शा_१५.१४ //
पादे पादे निविष्टौ सम्यग्विरचितौ त्सौ /
अन्त्ये यदि गकारः सा तु भ्रमरमाला // ना. शा_१५.१५ //
यथा:
नानाकुसुमचित्रे प्राप्ते सुरभिमासे /
एषा भ्रमति मत्ता कान्ते भ्रमरमाला // ना. शा_१५.१६ //
आद्यं तृतीयमन्त्यं च पञ्चमं सप्तमं तथा /
गुरूण्यष्टाक्षरे पादे सिंहलेखेति सा यथा // ना. शा_१५.१७ //
जातु यस्य गौ न , पादे संस्थितः समस्वरूपे /
तामनुष्टुबाश्रयस्थां वावदन्ति सिंहलेखाम् // ना. शा_१५.१८ //
यत्त्वया ह्यनेकभावैश्चेष्टितं रहः सुगात्रि /
तन्मनो मम प्रविष्टं वृत्तमद्य सिंहलेखम् // ना. शा_१५.१९ //
चतुर्थं च द्वितीयं च षष्ठमष्टममेव च /

गुरूण्यष्टाक्षरे पादे यत्र तन्मत्तचेष्टितम् // ना. शा_१५.२० //
यदा तु जात्परौ रलौ गकार एव च स्थितः /
अनुष्टुबुद्भवं तदा वदन्ति मत्तचेष्टितम् // ना. शा_१५.२१ //
यथा:
चरावघूर्णितेक्षणं विलम्बिताकुलालकम् /
असंस्थितैः पदैः प्रिया करोति मत्तचेष्टितम् // ना. शा_१५.२२ //
अष्टाक्षरकृते पादे सर्वाण्येव भवन्ति हि /
गुरूणि यस्मिन्सा नाम्ना विद्युन्मालेति कीर्तिता // ना. शा_१५.२३ //
मौ गौ चान्त्यौ यस्याः पादे पादस्यान्ते विच्चेदश्च /
सा चानुष्टुप्चन्दस्युक्ता नित्यं सद्भिर्विद्युन्माला // ना. शा_१५.२४ //
साम्भोभारैरानानद्भिः श्यामाम्भोदैर्व्याप्ते व्योम्नि /
आदित्यांशुस्पर्धिन्येषा दिक्षु भ्रान्ता विद्युन्माला // ना. शा_१५.२५ //
पञ्चमं सप्तमं चान्त्यं गुरु पादे ऽष्टके तथा /
चन्दोज्ञैर्ज्ञेयमेतत्तु वृत्तं चित्तविलासितम् // ना. शा_१५.२६ //
स्मितवशविप्रकाशैर्दशनपदैरमीभिः /
वरतनु पूर्णचन्द्रं तव मुखमावृणोति // ना. शा_१५.२७ //
नवाक्षरकृते पादे त्रीणि स्युर्नैधनानि च /
गुरूणि यस्याः सा नाम्ना ज्ञेया मधुकरी यथा // ना. शा_१५.२८ //
षडिह यदि लघूनि स्युर्निधनगतमकारश्चेत् /
बुधजनबृहतीसंस्था भवति मधुकरी नाम्ना // ना. शा_१५.२९ //
कुसुमितमभिपश्यन्ती विविधतरुगणैश्चन्नम् /
वनमतिशयगन्धाढ्यं भ्रमति मधुकरी हृष्टा // ना. शा_१५.३० //
दशाक्षरकृते पादे त्रीण्यादौ त्रीणि नैधने /
यस्या गुरूणि सा ज्ञेया पङ्क्तिरुत्पलमालिका // ना. शा_१५.३१ //
त्रीण्यादौ यदि हि गुरूणि स्युश्चत्वारो यदि लघवो मध्ये /
पङ्क्तावन्तगतमकारः स्याद्विज्ञेया कुवलयमालाख्या // ना. शा_१५.३२ //
यथा:
अस्मिंस्ते शिरसि तदा कान्ते वैडूर्यस्फटिकसुवर्णाढ्ये /
शोभां स्वां न वहति तां बद्धा सुश्लिष्टा कुवलयमालेयम् // ना. शा_१५.३३ //
द्वितीयं च चतुर्थं च षष्टमष्टममेव च /
ह्रस्वं दशाक्षरे पादे यत्र सा शिखिसारिणी // ना. शा_१५.३४ //
जौ त्रिकौ हि पादगौ तु यस्य गौ च संश्रितौ तथा समौ स्तौ /
पङ्क्तियोगसुप्रतिष्ठिताङ्गी सा मयूरसारिणीति नाम्ना // ना. शा_१५.३५ //
यथा:
नैव ते ऽस्ति संगमो मनुष्यैर्नापि कामभोगचिह्नमन्यत् /
गर्भिणीव दृश्यसे ह्यनार्ये किं मयूरसारिणी त्वमेवम् // ना. शा_१५.३६ //
आद्यं चतुर्थमन्त्यं च सप्तमं दशमं तथा /
गुरूणि त्रैष्टुभे पादे यत्र स्युर्दोधकं तु तत् // ना. शा_१५.३७ //
भौ तु भगाविति यस्य गणाः स्युः स्याच्च यतिस्त्रिचतुर्भिरथाऽस्मिन् /

त्रैष्टुभमेव हि तत्खलु नाम्ना दोधकवृत्तमिति प्रवदन्ति // ना. शा_१५.३८ //
यथा:
प्रस्खलिताप्रपदप्रविचायं मत्तविघूर्णितगात्रविलासम् /
पश्य विलासिनि कुञ्जरमेतं दोधकवृत्तमयं प्रकरोति // ना. शा_१५.३९ //
आदौ द्वौ पञ्चमं चैवाप्यष्टमं नैधनं तथा /
गुरुण्येकादशे पादे यत्र तन्मोटकं यथा // ना. शा_१५.४० //
एषो ऽम्बुदतुल्यनिस्वनरवः क्षीवः स्खलमानविलम्बगतिः /
श्रुत्वा घनगर्जितमद्रितटे वृक्षान् प्रतिमोटयति द्विरदः // ना. शा_१५.४१ //
नवमं सप्तमं षष्ठं तृतीयं च भवेल्लघु /
सर्वास्ववस्थासु च कामतन्त्रे योग्यासि किं वा बहुनेन्द्रवज्रा // ना. शा_१५.४३ //
एभिरेव तु संयुक्ता लघुभिस्त्रैष्टुभी यदा /
उपेन्द्रवज्रा विज्ञेया लघ्वादाविह केवलम् // ना. शा_१५.४४ //
प्रिये श्रिया वर्णविशेषणेन स्मितेन कान्त्या सुकुमारभावैः /
अमी गुणा रूपगुणानुरूपा भवन्ति ते किं त्वमुपेन्द्रवज्रा // ना. शा_१५.४५ //
आद्यं तृतीयमन्त्यं च सप्तमं नवमं तथा /
गुरूण्येकादशे पादे यत्र सा तु रथोद्धता // ना. शा_१५.४६ //
किं त्वया सुभट दूरवर्जितं नात्मनो न सुहृदां प्रियं कृतम् /
यत्पलायनपरायणस्य ते याति धूलिरधुना रथोद्धता // ना. शा_१५.४७ //
यथा:
किं त्वया कुमतिसङ्गया सदा नाज्ञयेव सुहृदां प्रियं कृतम् /
यद् गृहाद्वचनरोषकम्पिता याति तूर्णमबला रथोद्धता // ना. शा_१५.४८ //
आद्यं तृतीयमन्त्यं च सप्तमं दशमं गुरु /
यस्यास्तु त्रैष्टुभे पादे विज्ञेया स्वागता हि सा // ना. शा_१५.४९ //
यथा:
अद्य मे सफलमायतनेत्रे जीवितं मदनसंश्रयभावम् /
आगतासि भवनं मम यस्मात्स्वागतं तव वरोरु निषीद // ना. शा_१५.५० //
षष्ठं च नवमं चैव लघुनी त्रैष्टुभे यदि /
गुरूण्यन्यानि पादे तु सा ज्ञेया शालिनी यथा // ना. शा_१५.५१ //
दुःशीलं वा निर्गुणं वापरं वा लोके धैर्यादप्रियं न ब्रवीषि /
तस्माच्चीलं साधुहेतोः सुवृत्तं माधुर्यात्स्यात्सर्वथा शालिनी त्वम् // ना. शा_१५.५२ //
तृतीयं चैव षष्ठं च नवमं द्वादशं तथा /
गुरूणि जागते पादे यत्र तत्तोटकं भवेत् // ना. शा_१५.५३ //
यदि सो ऽत्र भवेत्तु समुद्रसमस्त्रिषु चापि तथा नियमेन यतिः /
सततं जगतीविहितं हि ततं गदितं खलु तोटकवृत्तमिदम् // ना. शा_१५.५४ //
यथा:
किमिदं कपटाश्रयदुर्विषहं बहुशाठ्यमथोल्बणरूक्षकथम् /
स्वजनप्रियसज्जनभेदकरं ननु तोटकवृत्तमिदं कुरुषे // ना. शा_१५.५५ //
आद्यं तृतीयमन्त्यं च पञ्चमं षष्ठमेव च /

तथोपान्त्यं जगत्यां च गुरु चेत्कुमुदप्रभा // ना. शा_१५.५६ //
यौ त्रिकौ तथा न्यौ यदि खलु पादे षड्भिरेव वर्णैर्यदि च यतिः स्यात् ।
नित्यसंनिविष्टा जगतिविधाने नामतः प्रसिद्धा कुमुदनिभा सा // ना. शा_१५.५७ //
यथा:
मन्मथेन विद्धा सललितभावा नृत्तगीतयोगा प्रविकसिताक्षी /
निन्द्यमद्य किं त्वं विगलितशोभा चन्द्रपादयुक्ता कुमुदवती च // ना. शा_१५.५८ //
मतान्तरे:
यदि खलु पादे न्यौ त्रिकौ यथा यौ यतिरपि वर्णैः षड्भिरेव चेत्स्यात् /
जगतिविधाने नित्यसंनिविष्टा कुमुदनिभा सा नामतः प्रसिद्धा // ना. शा_१५.५९ //
यथा:
कुमुदनिभा त्वं कामबाणविद्धा किमसि नतभ्रूः शीतवातदग्धा /
मृदुनलिनीवापाण्डुवक्त्रशोभा कथमपि जाता ह्यग्रतः सखीनाम् // ना. शा_१५.६० //
द्वादशाक्षरके पादे सप्तमं दशमं लघु /
आदौ पञ्चाक्षरच्चेदश्चन्द्रलेखा तु सा यथा // ना. शा_१५.६१ //
वक्त्रं सौम्यं ते पद्मपत्रायताक्षं कामस्यावासं सुनासोच्चप्रहासम् /
कामस्यापीदं काममाहर्तुकामं कान्ते कान्त्या त्वं चन्द्रलेखेव भासि // ना. शा_१५.६२ //
तृतीयमन्त्यं नवमं पञ्चमं च यदा गुरु /
द्वादशाक्षरके पादे यत्र सा प्रमिताक्षरा // ना. शा_१५.६३ //
यथा:
स्मितभाषिणी ह्यचपलापरुषा निभृतापवादविमुखी सततम् /
अपि कस्यचिद्युवतिरस्ति सुखा प्रमिताक्षरा स हि पुमाञ्जयति // ना. शा_१५.६४ //
द्वितीयमन्त्यं दशमं चतुर्थं पञ्चमाष्टमे /
गुरूणि द्वादशे पादे वंशस्था जगती तु सा // ना. शा_१५.६५ //
यदि त्रिकौ ज्तौ भवतस्तु पादतस्तथैव च ज्रावसानसंस्थितौ /
तदा हि वृत्तं जगतीप्रतिष्ठितं वदन्ति वंशस्थमितीह नामतः // ना. शा_१५.६६ //
न मे प्रिया त्वं बहुमानवर्जितां प्रियं प्रिया ते परुषाभिभाषिणी /
तथा च पश्याम्यहमद्य विग्रहं ध्रुवं हि वंशस्थगतिं करिष्यति //
ना. शा_१५.६७ //
चतुर्थमन्त्यं दशमं सप्तमं च यदा गुरु /
भवेद्धि जागते पादे तदा स्याद्धरिणप्लुता // ना. शा_१५.६८ //
परुषवाक्यकशाभिहिता त्वया भयविलोकनपार्श्वनिरीक्षणा /
वरतनुः प्रततप्लुतसर्पणैरनुकरोति गतैर्हरिणप्लुतम् // ना. शा_१५.६९ //
सप्तमं नवमं चान्त्यमुपान्त्यं च यदा गुरु /
द्वादशाक्षरके पादे कामदत्तेति सा यथा // ना. शा_१५.७० //
करजपदविभूषिता यथा त्वं सुदति दशनविक्षताधरा च /
गतिरपि चरणावलग्नमन्दा त्वमसि मृगनिभाक्षि कामदत्ता // ना. शा_१५.७१ //
आद्यं चतुर्थं दशमं सप्तमं च यदा लघु /
पादे तु जागते यस्या अप्रमेया तु सा यथा // ना. शा_१५.७२ //

न ते काचिदन्या समा दृश्यते स्त्री नृलोके विशिष्टा गुणैरद्वितीयैः /
त्रिलोक्यां गुणज्ज्ञान् समाहृत्य सर्वान् जगत्यप्रमेयासि सृष्टा विधात्रा //
ना. शा_१५.७३ //
द्वितीयं पञ्चमं चैव ह्यष्टमेकादशे यथा /
पादे यत्र लघूनि स्युः पद्मिनी नाम सा यथा // ना. शा_१५.७४ //
रास्त्रिकाः सागराख्या निविष्टा यदा स्यात् त्रिके च त्रिके युक्तरूपा यतिः /
सन्निविष्टा जगत्यास्ततस्सा बुधैर् नामतश्चापि संकीर्त्यते पद्मिनी // ना. शा_१५.७५
//
देहतोयाशया वक्त्रपद्मोज्ज्वला नेत्रभृङ्गाकुला दन्तहंसस्मिता /
केशपाशच्चदा चक्रवाकस्तनी पद्मिनीव प्रिये भासि मे सर्वदा // ना. शा_१५.७६ //
फुल्लपद्मानना त्वं द्विरेफेक्षणा केशपत्रच्चदा चक्रवाकस्तनी /
पीततोयावली बद्धकाञ्चीगुणा पद्मिनीव प्रिये भासि नीरे स्थिता // ना. शा_१५.७७ //
आदौ षट् दशमं चैव पादे यत्र लघून्यथ /
शेषाणि तु गुरूणि स्युर्जागते पुटसंज्ञिता // ना. शा_१५.७८ //
यदि चरणनिविष्टौ नौ तथा म्यौ यतिविधिरपि युक्त्याष्टाभिरिष्टः /
भवति च जगतीस्थः सर्वदासौ य इह हि पुटवृत्तं नामतस्तु // ना. शा_१५.७९ //
उपवनसलिलानां बालपद्मैर्भ्रमरपरभृतानां कण्ठनादैः /
मदनमदविलासैः कामिनीनां कथयति पुटवृत्तं पुष्पमासः // ना. शा_१५.८० //
द्वितीयान्त्ये चतुर्थं च नवमैकादशे गुरु /
विच्चेदो ऽतिजगत्यां तु चतुर्भिः सा प्रभावती // ना. शा_१५.८१ //
कथं न्विदं कमलविशाललोचने गृहं धनैः पिहितकरे दिवाकरे /
अचिन्तयन्त्यभिनववर्षविद्युतस्त्वमागता सुतनु यथा प्रभावती // ना. शा_१५.८२
//
त्रीण्यादावष्टमं चैव दशमं नैधनद्वयम् /
गुरूण्यतिजगत्यां तु त्रिभिश्चेदैः प्रहर्षिणी // ना. शा_१५.८३ //
भावस्थैर्मधुरकथैः सुभाषितैस्त्वं साटोपस्खलितविलम्बितैर्गतैश्च /
शोभाढ्यैर्हरसि मनांसि कामुकानां सुव्यक्तं ह्यतिजगती प्रहर्षिणी च //
ना. शा_१५.८४ //
षष्ठं च सप्तमं चैव दशमैकादशे लघु /
त्रयोदशाक्षरे पादे ज्ञेयं मत्तमयूरकम् // ना. शा_१५.८५ //
विद्युन्नद्धाः सेन्द्रधनुरञ्जितदेहा वातोद्धूताः श्वेतवलाकाकृतशोभाः /
एते मेघा गर्जितनादोज्ज्वलचिह्नाः प्रावृट्कालं मत्तमयूराः कथयन्ति //
ना. शा_१५.८६ //
आदौ द्वे चतुर्थं चैव चाष्टमैकादशे गुरु /
अन्त्योपान्त्ये च शक्वर्या वसन्ततिलका यथा // ना. शा_१५.८७ //
चित्रैर्वसन्तकुसुमैः कृतकेशहस्ता स्रग्दाममाल्यरचना सुविभूषिताङ्गी /
नानावसन्तकविभूषितकर्णपाशा साक्षाद्वसन्ततिलकेव विभाति नारी // ना. शा_१५.८८
//
पञ्चादौ शक्वरी पादे गुरूणि त्रीणि नैधने /
पञ्चाक्षरादौ च यतिरसंबाधा तु सा यथा // ना. शा_१५.८९ //

यथा:
मानालोकज्ञः सुतबलकुलशीलाढ्यो यस्मिन्सम्मानं न सदृशमनु पश्येद्धि /
गच्चेत्तं त्यक्त्वा द्रुतगतिरपरं देशं कीर्णा नानार्थैरवनिरियमसंबाधा //
ना. शा_१५.९० //
चत्वार्यादौ गुरूणि स्युर्दशमैकादशे तथा /
अन्त्योपान्त्ये च शक्वर्याः पादे तु शरभा यथा // ना. शा_१५.९१ //
एषा कान्ता व्रजति ललिता वेपमाना गुल्मैश्चन्नं वनमभिनवैः संप्रविद्धम्
/
हा हा कष्टं किमिदमिति नो वेद्मि मूढो व्यक्तं कान्ते शरभललितान्त्वं करोषि
// ना. शा_१५.९२ //
अदौ षट् दशमं चैव लघु चैव त्रयोदशम् /
यत्रातिशक्वरे पादे ज्ञेया नान्दीमुखी तु सा // ना. शा_१५.९३ //
यथा:
न खलु तव कदाचित्क्रोधताम्रायताक्षं भ्रुकुटिवलितभङ्गं दृष्टपूर्वं
मयास्यम् /
किमिह बहुभिरुक्तैर्या ममेच्चा हृदिस्था त्वमसि मधुरवाक्या देवि नान्दीमुखीव
// ना. शा_१५.९४ //
आद्यं चतुर्थं षष्ठं च नैधनं च यदा गुरु /
षोडशाक्षरके पादे यत्रेभललितं तु तत् // ना. शा_१५.९५ //
भ्रौ यदि नाश्च नित्यमिह विरचितचरणः गश्च तथा वै भवति
निधनमुपगतः /
स्यादपि चाष्टिमेव यदि सततमनुगतं तत्खलु वृत्तमग्रवृषभगजविलसितम्
// ना. शा_१५.९६ //
कालतोयधरैः सुधीरधनपटुपटहरवैः
सर्जकदम्बनीपकुटजकुसुमसुरभिः /
कन्दलसेन्द्रगोपकरचितमवनितलं वीक्ष्य करोत्यसौ वृषभगजविलसितम् //
ना. शा_१५.९७ //
आद्यात्पराणि वै पञ्च द्वादशं सत्रयोदशः /
अन्त्योपान्त्ये च दीर्घाणि ललितप्रवरं हि तत् // ना. शा_१५.९८ //
यदा य्मौ पादस्थौ भवत इह चेत्स्तौ तथा गौ तथा षड्भिश्चान्यैर्यतिरपि
च वर्णैर्यथा स्यात् /
तदप्यष्टौ नित्यं समनुगतमेवोक्तमन्यैः प्रयोगज्ञैर्वृत्तं प्रवरललितं
नामतस्तु // ना. शा_१५.९९ //
यथा:
नखालीढं गात्रं दशनखचितं चोष्ठगण्डं शिरः पुष्पोन्मिश्रं
प्रविलुलितकेशालकान्तम् /
गतिः खिन्ना चेयं वदनमपि संभ्रान्तनेत्रम् अहो श्लाघ्यं वृत्तं
प्रवरललितं कामचेष्टम् // ना. शा_१५.१०० //
आद्यात्पराणि पञ्चाथ द्वादशं सत्रयोदशम् /

अन्त्यं सप्तदशे पादे शिखरिण्यां गुरूणि च // ना. शा_१५.१०१ //
चतुर्भिस्तस्यैव प्रवरललितस्य त्रिकगणैर् यदा लौ गश्चान्ते भवति चरणे
ऽत्यष्टिगदिते /
यदा षड्भिश्चेदो भवति यदि मार्गेण विहितस् तदा वृत्तेष्वेषा खलु शिखरिणी
नाम गदिता // ना. शा_१५.१०२ //
यथाः
महानद्या भोगं पुलिनमिव भाति ते जघनं तथास्यं नेत्राढ्यं
भ्रमरसहितं पङ्कजमिव /
गतिर्मन्दा चेयं सुतनु तव चेष्टा सुललिता स्तनाभ्यां ताभ्यां त्वं शिखरिणि
सुपीनासि वनिते // ना. शा_१५.१०३ //
यत्र पञ्च लघून्यादौ त्रयोदशचतुर्दशे /
षोडशैकादशे चैव तत्स्याद्वृषभचेष्टितम् // ना. शा_१५.१०४ //
यदि हि चरणे न्सौ स्लौ गः क्रमाद्विनिवेशितार् यदि खलु यतिः
षड्भिर्वर्णैस्तथा दशभिः पुनः /
यदि विहितं स्यादत्यष्टिः प्रयोगसुखाश्रयं वृषभललितं वृत्तं ज्ञेयं तथा
हरिणीति वा // ना. शा_१५.१०५ //
यथाः
जलधररवं श्रुत्वा श्रुत्वा मदोच्चयदर्पितो विलिखितमहीशृङ्गाक्षेपैर्वृषैः
प्रतिनर्द्य च /
स्वयुवतिवृतो गोष्ठाद्गोष्ठं प्रयाति च निर्भयो वृषभललितं चित्रं वृत्तं
करोति च शाद्वले // ना. शा_१५.१०६ //
चत्वार्यादौ च दशमं गुरु यत्र त्रयोदशं चतुर्दशं तथान्त्ये द्वे
चैकादशमथापि च // ना. शा_१५.१०७ //
यदा सप्तदशे पादे शेषाणि च लघून्यथ /
भवन्ति यस्मिन्सा ज्ञेया श्रीधरी नामतो यथा // ना. शा_१५.१०८ //
मो भ्नौ च स्युश्चरणरचितास्तौ गुरू च प्रविष्टाश्चेदः शिष्टो यदि च दशभिः
स्यात्तथान्यैश्चतुर्भिः /
अत्यष्टौ च प्रतिनियमिता वर्णतः स्पष्टरूपा सा विज्ञेया द्विजमुनिगणैः
श्रीधरी नामतस्तु // ना. शा_१५.१०९ //
स्नानैश्चूर्णैः सुखसुरभिभिर्गन्धवासैश्च धूपैः पुष्पैश्चान्यैः शिरसि
रचितैर्वस्त्रयोगैश्च तैस्तैः /
नानारत्नैः कनकखचितैरङ्गसंभोगसंस्थैर्व्यक्तं कान्ते कमलनिलया
श्रीधरीवातिभासि // ना. शा_१५.११० //
आद्यं चतुर्थं षष्ठं च दशमं नैधनं गुरु /
तद्वंशपत्रपतितं दशभिः सप्तभिर्यतिः // ना. शा_१५.१११ //
यथा एष गजो ऽद्रिमस्तकतटे कलभपरिवृतः क्रीडति वृक्षगुल्मगहने
कुसुमभिरनते /
मेघरवं निशम्य मुदितः पवनजवसमः सुन्दरि वंशपत्रपतितं पुनरपि
कुरुते // ना. शा_१५.११२ //

द्वितीयमन्त्यं षष्ठं चाप्यष्टमं द्वादशं तथा /
चतुर्दशं पञ्चदशं पादे सप्तदशाक्षरे // ना. शा_१५.११३ //
भवन्ति यत्र दीर्घाणि शेषाणि च लघून्यथ /
विलम्बितगतिः सा तु विज्ञेया नामतो यथा // ना. शा_१५.११४ //
यदा द्विरुदितौ हि पादमभिसंश्रितौ ज्सौ त्रिकौ तथैव च
पुनस्तयोर्निधनमाश्रितौ यौ लगौ /
तदष्टिरतिपूर्विका यतिरपि स्वभावाद्यथा विलम्बितगतिस्तदा निगदिता
द्विजैर्नामतः // ना. शा_१५.११५ //
यथा:
विघूर्णितविलोचना पृथुविकीर्णहारा पुनः प्रलम्बरशना
चलत्स्खलितपादमन्दक्लमा /
न मे प्रियमिदं जनस्य बहुमानरागेण यन्मदेन विवशा विलम्बितगतिः कृता
त्वं प्रिये // ना. शा_१५.११६ //
पञ्चादौ पञ्चदशकं द्वादशैकादशे गुरु /
चतुर्दशं तथान्त्ये द्वे चित्रलेखा धृतौ स्मृता // ना. शा_१५.११७ //
यथा नानारत्नाढ्यैर्बहुभिरधिकं भूषणैरङ्गसंस्थैर्नाना
गन्धाढ्यैर्मदनजनकैरङ्गरागैर्विचित्रैः /
केशैः स्नानाढ्यैः कुसुमभरितैर्वस्त्ररागैश्च तैस्तैः कान्ते संक्षेपात् किमिह
बहुना चित्रलेखेव भासि // ना. शा_१५.११८ //
अन्त्यं सप्तदशं चैव षोडशं सचतुर्दशम् /
त्रयोदशं द्वादशं च षष्ठमष्टममेव च // ना. शा_१५.११९ //
त्रीण्यादौ च गुरूणि स्युर्यस्मिंस्त्वेकोनविंशके /
पादे लघूनि शेषाणि शार्दूलक्रीडितं तु तत् // ना. शा_१५.१२० //
म्सौ ज्सौ तौ गुरु च प्रयोगनियता यस्मिन्निविष्टास्त्रिका आद्या
चान्त्ययतिश्चतुस्त्रिकयुता ज्ञेया परा सप्तभिः /
नित्यं यत्पदमाश्रिता ह्यतिधृतिर्नित्यं कवीनां प्रियं तज्ज्ञेयं खलु
वृत्तजातिनिपुणैः शार्दूलविक्रीडितम् // ना. शा_१५.१२१ //
यथा:
नानाशस्त्रशतघ्नितोमरहताः प्रभ्रष्टसर्वायुधाः निर्भिन्नोदरपादबाहुवदना
निर्णाशिताः शत्रवः /
धैर्योत्साहपराक्रमप्रभृतिभिस्तैस्तैर्विचित्रैर्गुणैर् वृत्तं ते रिपुघाति
भाति समरे शार्दूलविक्रीडितम् // ना. शा_१५.१२२ //
तावत्त्वं विजितेन्द्रियः शुभमते सर्वात्मना प्रत्यहं दाने शीलविधौ च योजय
मनः स्वर्गापवर्गापहम् /
यावद् व्याधिजराप्रचण्डनखरो व्यायत्सटाभिर्भृशं मृत्युस्ते न करोति
जीवितमृगैः शार्दूलविक्रीडितम् // ना. शा_१५.१२३ //
चत्वार्यादौ च षष्ठं च सप्तमं सचतुर्दशम् /
तथा पञ्चदशं चैव षिडशं नैधनं तथा // ना. शा_१५.१२४ //
एतानि च गुरूणि स्युः शेषाणि तु लघून्यथ /

पादे यत्र कृतौ ज्ञेया नाम्ना सुवदना तु सा // ना. शा_१५.१२५ //
म्रौ म्नौ य्भौ ल्गौ च सम्यग्यदि च विरचिताः पादे क्रमवशाद् विच्चेदः सप्तभिः स्यात्पुनरपि च यतिः सप्ताक्षरकृता /
यद्येषा संश्रिता स्यात्कृतिमपि च पुनः श्लिष्टाक्षरपदा विद्वद्भिर्वृत्तजातौ तत इह गदिता नाम्ना सुवदना // ना. शा_१५.१२६ //
यथाः
नेत्रे लीलालसान्ते कमलदलनिभे भ्रूचापविनते रक्तोष्ठं पीनमध्यं समसहितघनाः स्निग्धाश्च दशनाः /
कर्णावंसप्रलम्बौ चिबुकमपि नतं घोणा सुरुचिरा व्यक्तं त्वं मर्त्यलोके वरतनु विहितास्येका सुवदना // ना. शा_१५.१२७ //
चत्वार्यादौ तथा षष्ठं सप्तमं च चतुर्दशम् /
अष्टादशं सप्तदशं तथा पञ्चदशं पुनः // ना. शा_१५.१२८ //
अन्त्योपान्त्ये गुरूण्यत्र लघून्यन्यानि सर्वदा /
एकविंशतिके पादे स्रग्धरा नाम सा यथा // ना. शा_१५.१२९ //
म्रौ म्नौ यौ यश्च सम्यग्यदि हि विरचिताः स्युस्त्रिकाः पादयोगे वर्णैः पूर्वोपदिष्टैर्यतिरपि च पुनः सप्तभिः सप्तभिः स्यात् /
वृत्तं सम्यग्यदि स्यात्प्रकृतिमनुगतं तत्वविद्भिः प्रदिष्टं विज्ञेयं वृत्तजातौ कविजनदयिता स्रग्धरा नामतस्तु // ना. शा_१५.१३० //
यथाः
चूताशोकारविन्दैः कुरवकतिलकैः कर्णिकारैः शिरीषैः पुन्नागैः पारिजातैर्वकुलकुवलयैः किंशुकैः सातिमुक्तैः /
एतैर्नानाप्रकारैः बहुलसुरभिभिर्विप्रकीर्णैश्च तैस्तैर् वासन्तैः पुष्पवृन्दैर्नरवर वसुधा स्रग्धरेवाद्य भाति // ना. शा_१५.१३१ //
चतुर्थमाद्यं षष्ठं च दशमं द्वादशं तथा /
षोडशाष्टादशे चैव नैधनं च गुरूण्यथ // ना. शा_१५.१३२ //
द्वाविंशत्यक्षरे पादे शेषाणि च लघून्यथ /
भवन्ति यत्र तज्ज्ञेयं भद्रकं नामतो यथा // ना. शा_१५.१३३ //
भ्रौ चरणे यदा विनियतौ त्रिकौ क्रमवशादथातिकृतिविधौ न्रौ च ततः परं च रुचिरावनन्तरकृतौ नगावपि पुनः /
तच्च दशाष्टवर्णरचिता चतुर्ष्वपि तथा यतिश्च सततं भद्रकवृत्तमेव खलु नाट्ययोगकुशलैर्बुधैर्निगदितम् // ना. शा_१५.१३४ //
उत्प्लुतमेकहस्तचरणं द्वितीयकररेचितं वंशमृदङ्गवाद्यमधुरं विचित्रकरणानुगं बहुविधम् /
भद्रकमेतदद्य सुभगे विदग्धगतिचेष्टितैः सुललितैर् नृत्यसि विभ्रमाकुलपदं विविक्तरसभावितं शशिमुखि // ना. शा_१५.१३५ //
अन्त्यमेकोनविंशं च सप्तमं सत्रयोदशम् /
एकादशं सप्तदशं पञ्चमं च गुरूण्यथ // ना. शा_१५.१३६ //
शेषाणि च लघूनि स्युर्विकृत्याश्चरणे बुधैः /
वृत्तं तदश्वललितं विज्ञेयं नामतो यथा // ना. शा_१५.१३७ //

यदि च नकार आदिरचितः पदे विरचितो ऽन्त एव लगौ यदि च नभौ त्रिधा च निहितौ क्रमेण खलु मध्यावपि तथा /
यदि च समाश्रितं हि विकृतिं यतिश्च दशभिस्तथैकसहितैस् तत इह कीर्तितं मुनिगणैर्विशुद्धचरितैस्तदश्वललितम् // ना. शा_१५.१३८ //
विविधतुरङ्गनागरथयोधसङ्कुलमलं बलं समुदितं
शरशतशक्तिकुन्तपरिधासियष्टिविततं बहुप्रहरणम् /
रिपुशतमुक्तशस्त्ररवभीतशङ्कितभटं भयाकुलदिशं कृतमभिवीक्ष्य
संयुगमुखे समर्पितगुणं त्वयाश्वललितम् // ना. शा_१५.१३९ //
षडादावष्टमं चैव ह्येकादशचतुर्दशे /
विंशं सप्तदशं चैव त्रयोविंशं तथैव च // ना. शा_१५.१४० //
एतानि च लघूनि स्युः शेषाण्यथ गुरूणि च /
चतुर्विंशतिके पादे मेघमालेति सा यथा // ना. शा_१५.१४१ //
यदि खलु चरणस्थितौ नौ त्रिकौ कृतिकारव्यास्तथा राः स्युः क्रमात् /
भवति यदि यतिस्तथा सप्तभिः सप्तभिस्त्रिष्वतो ऽन्या यतिः पञ्च विद्यात्तथा // ना. शा_१५.१४२ //
पवनबलसमाहृता तीव्रगम्भीरनादा बलाकावलीमेखला क्षितिधरसदृशोच्चरूपा महानीलधूमाञ्जनाभाम्बुगर्भोद्भवा /
सुरपतिधनुरुज्ज्वलाबद्धकक्ष्या तडिद्द्योतसन्नाहपट्टीज्वला गगनतलविसारिणी प्रावृषण्या दृढं मेघमालाधिकं शोभते // ना. शा_१५.१४३ //
आद्यं चैव चतुर्थं च पञ्चमं षष्ठमेव च /
नवमं दशमं चैव नैधनं च भवेद्गुरु // ना. शा_१५.१४४ //
लघून्यन्यानि शेषाणि पादे स्युः पञ्चविंशके /
वृत्तज्ञैः सा तु विज्ञेया क्रौञ्चपादीति नामतः // ना. शा_१५.१४५ //
भ्मौ यदि पादे स्भावपि चेष्टावभिकृतिरपि च हि यदि खलु विहिता नाश्च समुद्राः स्युर्विनिविष्टा यदि च खलु गुरु भवति निधनगतम् /
पञ्चभिरादौ चेदमुपेता पुनरपि यतिरिह यदि खलु दशभिः क्रौञ्चपदेयं वृत्तविधाने सुरगणपितृगणमुनिगणविहिता // ना. शा_१५.१४६ //
यः किल दाक्षं विद्रुतसोमं क्रतुवरमचमसमपगतकलशं पातितयूपं
क्षिप्तचषालं विचयनमसमिधमपशुकचरुकम् /
कार्मुकमुक्तेनाशु चकार व्यपगतसुरगणपितृगणमिषुणा नित्यमसौ ते
दैत्यगणारिः प्रदहतु मखमिव रिपुगणमखिलम् // ना. शा_१५.१४७ //
या कपिलाक्षी पिङ्गलकेशी कलिरुचिरनुदिनमनुनयकठिना दीर्घतराभिः
स्थूलसिराभिः परिवृतवपुरतिशयकुटिलगतिः /
आयतजङ्घा निम्नकपोला लघुतरकुचयुगपरिगतहृदया सा परिहार्या क्रौञ्चपदा
स्त्री ध्रुवमिह निरवधिसुखमभिलषता // ना. शा_१५.१४८ //
अष्टावादौ गुरूणि स्युस्तथा चैकोनविंशकम् /
एकविंशं च विज्ञेयं चतुर्विंशं सनैधनम् // ना. शा_१५.१४९ //
एतानि गुरु संख्यानि शेषाणि च लघून्यथ /
षड्विंशत्यक्षरे पादे तद्भुजङ्गविजृम्भितम् // ना. शा_१५.१५० //

यस्यां मौ तो नाः स्त्रौ नित्यं प्रतिचरणमथ
गदितकास्त्रिका ह्यनुपूर्वशः
षड्विंशत्यामेकोनायां च यदि हि
खलु यतिरभिधा चतुर्भिरथाष्टाभिः /
पश्चादन्त्यौ ल्गौ संयोज्यौ यदि भवति
मनुजदयितां समाश्रितमुत्कृतिं
नाम्ना वृत्तं लोके ख्यातं कविवदन
विकसनपरं भुजङ्गविजृम्भितम् // ना. शा_१५.१५१ //
यथा:
रूपोपेतां देवैः सृष्टां समदगज
विलसितगतिं निरीक्ष्य तिलोत्तमां
प्रादक्षिण्यात्प्राप्तां द्रष्टुं बहुवदन
मचलनयनं शिरः कृतवान् हरिः /
दीर्घं निश्वस्यान्तर्गूढं स्तनवदन
जघनरुचिरां निरीक्ष्य तथा पुनः
पृष्ठे न्यस्तं देवेन्द्रेण प्रवरमणि
कनकवलयं भुजङ्गविजृम्भितम् // ना. शा_१५.१५२ //
दण्डकं नाम विज्ञेयमुत्कृतेरधिकतरम् /
मेघमालादिकं तत्स्यान्नौ चादौ कागुहा त्रिकाः // ना. शा_१५.१५३ //
यथा:
मुदितजनपदाकुला स्फीतसस्याकरा भूतधात्री भवन्तं समभ्यर्चति
द्विरदकरविलुप्तहिन्तालतालीवनास्त्वां नमस्यन्ति विन्ध्यादयः पर्वताः /
स्फुटितकलशाशुक्तिनिगीर्णमुक्ता फलैरूर्मिहस्तैर्नमस्यन्ति वः सागराः
मुदितजलचराकुलाः संप्रकीर्णमलाः कीर्तयन्तीव कीर्तिं महानिम्नगाः //
ना. शा_१५.१५४ //
एतानि समवृत्तानि मयोक्तानि द्विजोत्तमाः /
विषमार्धसमानां तु पुनर्वक्ष्यामि लक्षणम् // ना. शा_१५.१५५ //
यत्र पादास्तु विषमा नानावृत्तसमुद्भवाः /
ग्रथिताः पादयोगेन तद् वृत्तं विषमं स्मृतम् // ना. शा_१५.१५६ //
द्वौ समं द्वौ च विषमौ वृत्ते ऽर्धविषमे तथा /
सर्वपादैश्च विषमैर्वृत्तं विषममुच्यते // ना. शा_१५.१५७ //
ह्रस्वाद्यमथ दीर्घाद्यं दीर्घं ह्रस्वमथापि वा /
युग्मोजविषमैः पादैः वृत्तमर्धसमं भवेत् // ना. शा_१५.१५८ //
पादे सिद्धे समं सिद्धं विषमं सार्वपादिकम् /
द्वयोरर्धसमं विद्यादेष चेदस्तु पादतः // ना. शा_१५.१५९ //
चेदास्तु ये मया प्रोक्ता समवृत्तविकल्पितः /
त्रिकैर्विषमवृत्तानां संप्रवक्ष्यामि लक्षणम् // ना. शा_१५.१६० //
नैधने ऽन्यतरस्यां वै प्रथमे पाद इष्यते /
द्वितीये चरणे च स्यादित्यनुष्टुप् समासतः // ना. शा_१५.१६१ //

सौ गौ तु प्रथमे पादे स्नौ ल्गौ चापि द्वितीयके /
युग्मे ऽर्धविषमे पादे ज्ञेया पथ्या तु सा त्रिकैः // ना. शा_१५.१६२ //
प्रियदैवतमित्रासि प्रियसंबन्धिबान्धवा /
प्रियदानरता पथ्या दयिते त्वं प्रियासि मे // ना. शा_१५.१६३ //
म्रौ गौ तु प्रथमे पादे य्सौ ल्गौ च द्वितीयके /
पादे भौ ल्गौ तृतीये च चतुर्थे तु तसौ लगौ // ना. शा_१५.१६४ //
नैवाचारो न ते मित्रं न संबन्धिगुणप्रिया /
सर्वथा सर्वविषमा पथ्या न भवसि प्रिये // ना. शा_१५.१६५ //
अयुजोर्लक्षणं ह्येतद्विपरीतं तु यत्र च /
पथ्या हि विपरीता सा विज्ञेया नामतो यथा // ना. शा_१५.१६६ //
कृतेन रमणस्य किं सखि रोषेण ते ऽप्यर्थम् /
विपरीता न पथ्यासि त्वं जडे केन मोहिता // ना. शा_१५.१६७ //
चतुर्थादक्षराद्यत्र त्रिलघु स्यादयुक्ततः /
अनुष्टुप्चपला सा तु विज्ञेया नामतो यथा // ना. शा_१५.१६८ //
न खल्वस्याः प्रियतमः श्रोतव्यं व्याहृतं सख्या /
नारदस्य प्रतिकृतिः कथ्यते चपला हीयम् // ना. शा_१५.१६९ //
विपुला तु युजि ज्ञेया लघुत्वात्सप्तमस्य तु /
सर्वत्र सप्तमस्यैव केषांचिद्विपुला यथा // ना. शा_१५.१७० //
संक्षिप्ता वज्रमध्ये हि हेमकुम्भनिभस्तनी /
विपुलासि प्रिये श्रोण्यां पूर्णचन्द्रनिभानने // ना. शा_१५.१७१ //
गङ्गेव मेघोपगमे आप्लावितवसुन्धरा /
कूलवृक्षानारुजन्ती स्रवन्ती विपुला बलात् // ना. शा_१५.१७२ //
आगता मेघसमये भीरु भीरुकुलोद्गते /
एकरात्रौ परगृहं चोरी बन्धनमर्हसि // ना. शा_१५.१७३ //
एवं विविधयोगास्तु पथ्यापादा भवन्ति हि /
युग्मोजविषमैः पादैः शेषैरन्यैस्त्रिकैर्यथा // ना. शा_१५.१७४ //
गुर्वन्तकः सर्वलघुस्त्रिको नित्यं हि नेष्यते /
प्रथमादक्षराद्यत्र चतुर्थात्प्राग्लघुः स्मृतः // ना. शा_१५.१७५ //
पथ्यापादं समास्थाप्य त्रीण्यन्ते तु गुरूण्यथ /
भवन्ति पादे सततं बुधैस्तद्वक्रमिष्यते // ना. शा_१५.१७६ //
दन्तक्षताधरं सुभ्रु जागरग्लाननेत्रं च /
रतिसंभोगखिन्नं ते दर्शनीयतरं वक्त्रम् // ना. शा_१५.१७७ //
इत्येषा सर्वविषमा नामतो ऽनुष्टुबुच्यते /
तद्विदां मतवैषम्यं त्रिकादक्षरतस्तथा // ना. शा_१५.१७८ //
पादे षोडशमात्रास्तु गाथांशकविकल्पिताः /
चतुर्भिरंशकैर्ज्ञेया वृत्तज्ञैर्वानवासिका // ना. शा_१५.१७९ //
असंस्थितपदा सुविह्वलाङ्गी मदस्खलितचेष्टितैर्मनोज्ञा /
क्व यास्यसि वरोरु सुरतकाले विषमा किं वानवासिका त्वम् // ना. शा_१५.१८० //
स्जौ स्गौ च प्रथमे पादे तथा चैव तृतीयके /

केतुमत्यां गणाः प्रोक्ताः भ्रौ न्गौ गश्च सदा बुधैः // ना. शा_१५.१८१ //
स्फुरिताधरं चकितनेत्रं रक्तकपोलमम्बुजदलाक्षम् /
किमिदं रुषापहृतशोभं केतुमतीसमं वद मुखं ते // ना. शा_१५.१८२ //
वक्त्रस्यापरपूर्वस्य चादौ नौ रो लगौ त्रिकाः /
नजौ रजौ द्वितीये च शेषाग्रं पुनरेव तु // ना. शा_१५.१८३ //
प्रथमे च तृतीये नौ रलौ गश्च प्रकीर्तितः /
गणाश्चापरवक्त्रे तु नजौ ज्रौ द्विचतुर्थयोः // ना. शा_१५.१८४ //
सुतनु जलपरीतलोचनं जलदनिरुद्धमिवेन्दुमण्डलम् /
किमिदमपरवक्त्रमेव ते शशिवदने ऽद्य मुखं पराङ्मुखम् // ना. शा_१५.१८५ //
नौ यौ तु प्रथमे पादे न्जौ ज्रौ गश्च तथापरे /
यत्र तत्पुष्पिताग्रा स्याद्यदि शेषं तु पूर्ववत् // ना. शा_१५.१८६ //
पवनबलविधूतचारुशाखं प्रमुदितकोकिलकण्ठनादरम्यम् /
मधुकरपरिगीयमानशब्दं वरतनु पश्य वनं सुपुष्पिताग्रम् // ना. शा_१५.१८७ //
स्जौ स्लौ चादौ यथा न्सौ ज्गौ भ्नौ ज्लौ गश्च तथा पुनः /
स्जौ स्जौ गश्च त्रिका ह्येते उद्गतायाः प्रकीर्तिताः // ना. शा_१५.१८८ //
तव रोमराजिरतिभाति सुतनु मदनस्य मञ्जरी /
नाभिकमलविवरोत्पतिता भ्रमरावलीव कुसुमात्समुद्गता // ना. शा_१५.१८९ //
स्जौ स्लौ च ततो न्सौ ज्गौ नौ सौ चेति तृतीयके /
स्जौ स्जौ गश्च चतुर्थे तु ललिताया गणाः स्मृताः // ना. शा_१५.१९० //
ललिताकुलभ्रमितचारु वसनकरचारुपल्लवा /
प्रविकसितकमलकान्तिमुखी प्रविभासि देवी सुरतश्रमातुरा // ना. शा_१५.१९१ //
एवमेतानि वृत्तानि समानि विषमाणि च /
नाटकाद्येषु काव्येषु प्रयोक्तव्यानि सूरिभिः // ना. शा_१५.१९२ //
सन्त्यन्यान्यपि वृत्तानि यान्युक्तानीह पिण्डशः /
न च तानि प्रयोज्यानि न शोभां जनयन्ति हि // ना. शा_१५.१९३ //
यान्यतः प्रतिषिद्धानि गीतके तानि योजयेत् /
ध्रुवायोगे तु वक्ष्यामि तेषां चैव विकल्पनम् // ना. शा_१५.१९४ //
वृत्तलक्षणमेवं तु समासेन मयोदितम् /
अत ऊर्ध्वं प्रवक्ष्यामि ह्यार्याणामपि लक्षणम् // ना. शा_१५.१९५ //
पथ्या च विपुला चैव चषला मुखतो ऽपरा /
जघने चपला चैव आर्याः पञ्च प्रकीर्तिताः // ना. शा_१५.१९६ //
आसां तु संप्रवक्ष्यामि यतिमात्राविकल्पनम् /
लक्षणं नियमं चैव विकल्पगुणसंश्रयम् // ना. शा_१५.१९७ //
यतिश्छेदस्तु विज्ञेयश्चतुर्मात्रो गणः स्मृतः /
द्वितीयान्त्यौ युजौ पादावयुजौ त्वपरौ स्मृतौ // ना. शा_१५.१९८ //
गुरुमध्यविहीनस्तु चतुर्गणसमन्वितः /
अयुग्गणो विधातव्यो युग्गणस्तु यथेप्सितः // ना. शा_१५.१९९ //
षष्ठो वै द्विविकल्पस्तु नैधनो ह्येकसंस्थितः /
पश्चादर्धे तु षष्ठः स्यादेकमात्रस्तु केवलः // ना. शा_१५.२०० //

द्विविकल्पस्तु षष्ठो यो गुरुमध्यो भवेत्तु सः /
तथा सर्वलघुश्चैव यतिसंज्ञासमाश्रिता // ना. शा_१५.२०१ //
द्वितीयादिलघुर्ज्ञेयः सप्तमे पञ्चमे यतिः /
प्रथमादिरथान्त्ये च पञ्चमे वा विधीयते // ना. शा_१५.२०२ //
गणेषु त्रिषु पादस्य यस्याः पथ्या तु सा भवेत् /
अतश्च विपुलान्या तु विज्ञेया यतिलक्षणा // ना. शा_१५.२०३ //
अयुजः सर्वगुरवो गुरुमध्या गणा युजः /
यस्याः स्युः पादयोगे तु विज्ञेया चपला हि सा // ना. शा_१५.२०४ //
त्रिंशदाद्ये तु विज्ञेयाः सप्तविंशतिश्चापरे /
उभयोरर्धयोर्ज्ञेयो मात्रापिण्डो विभागशः // ना. शा_१५.२०५ //
त्रिंशत्तस्याश्च यदि स्युरेतानि द्विगुणानि तु /
त्रीण्यक्षराणि चान्यानि न्यस्य संख्याविभागशः // ना. शा_१५.२०६ //
एतानि लघुसंज्ञानि निर्दिष्टानि समासतः /
सर्वेषां चैवमार्याणामक्षराणां यथाक्रमम् // ना. शा_१५.२०७ //
अर्धाष्टमगणार्धा च सववार्या प्रकीर्तिता /
षष्ठश्च द्विविकल्पस्तु नैधने ह्येकसंस्थितः // ना. शा_१५.२०८ //
पश्चाद्वा यो गणः षष्ठ एकमात्रः स उच्यते /
द्विविकल्पस्तु यः षष्ठो गुरुमध्यो भवेत्तु सः // ना. शा_१५.२०९ //
यथा सर्वलघुश्चैव यतिः संख्यासमाश्रिता /
सा द्वितीया द्विलघुका सप्तमे प्रथमे यतिः // ना. शा_१५.२१० //
गुरुमध्यविहीनस्तु चतुर्गणसमन्वितः /
अयुग्गणो विधातव्यः युग्गणस्तु स एव च // ना. शा_१५.२११ //
प्रथमतृतीयौ पादौ द्वादशमात्रौ भवेत्तु सा पथ्या /
विपुलान्या खलु गदिता पूर्वोदितलक्षणोपेता // ना. शा_१५.२१२ //
पथ्या यथा:
रक्तमृदुपद्मनेत्रा सितदीर्घबहुलमृदुकेशी /
कस्य तु पृथुमृदुजघना तनुबाह्वं सोदरी पथ्या // ना. शा_१५.२१३ //
विपुला यथा:
विपुलजघनवदनस्तननयनैस्ताम्राधरोष्ठकरचरणैः /
आयतनासागण्डैर्ललाटकर्णैः शुभा कन्या // ना. शा_१५.२१४ //
द्वितीयश्च चतुर्थश्च गुरुमध्यगतो भवेत् /
उभयोरर्धयोर्यत्र विज्ञेया चपला यथा // ना. शा_१५.२१५ //
उद्धटगामिनी परुषभाषिणी कामचिह्नकृतवेषा /
जानाति मांसयुक्ता सुराप्रिया सर्वतश्चपला // ना. शा_१५.२१६ //
पूर्वार्धे लक्षणं ह्येतदस्याः स च मुखेन तु /
पश्चिमार्धे तु चपला यस्याः सा जघनेन तु // ना. शा_१५.२१७ //
मुखचपला यथा:
आर्यामुखे तु चपला तथापि चार्या न मे यतः सा किम् /
दक्षा गृहकृत्येषु तथा दुःखे भवति दुःखार्ता // ना. शा_१५.२१८ //

जघनचपला यथा:
वरमृगनयने चपलासि वरोरु शशाङ्कदर्पणनिभास्ये /
कामस्य सारभूते न पूर्वमदचारुजघनेन // ना. शा_१५.२१९ //
उभयोरर्धयोरेतल्लक्षणं दृश्यते यदि /
वृत्तज्ञैः सा तु विज्ञेया सर्वतश्चपला सखि // ना. शा_१५.२२० //
कार्यौ द्वादशमात्रौ च पादावाद्यौ तृतीयकौ /
अष्टादश द्वितीयं च तथा पञ्चदशोत्तमा // ना. शा_१५.२२१ //
चतुःपञ्चप्रकाराणां चतुष्काणां विशेषतः /
प्रस्तारयोगमासाद्य बाहुल्यं संप्रदर्शयेत् // ना. शा_१५.२२२ //
पञ्चपञ्चाशदाद्या तु त्रिंशदाद्या तथैव च /
आर्या त्वक्षरपिण्डेन विज्ञेयात्र प्रयोक्तृभिः // ना. शा_१५.२२३ //
त्रिंशतस्त्वथ वर्णेभ्यो लघुवर्णत्रयं भवेत् /
शेषाणि गुरुसंख्यानि ह्येवं सर्वत्र निर्दिशेत् // ना. शा_१५.२२४ //
सर्वेषामेव चार्याणामक्षराणां यथाक्रमम् /
सर्वेषां जातिवृत्तानां पूर्वमुत्तरसंख्यया // ना. शा_१५.२२५ //
विकल्पगणनां कृत्वा संख्यापिण्डेन निर्दिशेत् /
आर्यागीतिरथार्यैव केवलं त्वष्टभिर्गणैः // ना. शा_१५.२२६ //
इतरार्थे जः षष्ठस्तु नलघुगण इष्यते ।
वृत्तैरेवं तु विविधैर्नानाचन्दस्समुद्भवैः /
काव्यबन्धास्तु कर्तव्याः षट्त्रिंशल्लक्षणान्विताः // ना. शा_१५.२२७ //

इति भरतीये नाट्यशास्त्रे चन्दोविचितिर्नाम पञ्चदशो ऽध्यायः

---

अथ षोडशो ऽध्यायः

विभूषणं चाक्षरसंहतिश्च शोभाभिमानौ गुणकीर्तनं च /
प्रोत्साहनोदाहरणे निरुक्तं गुणानुवादो ऽतिशयश्च हेतुः // ना. शा_१६.१ //
सारूप्यमिथ्याध्यवसायसिद्धि पदोच्चयाक्रन्दमनोरथाश्च /
आख्यानयाञ्चाप्रतिषेधपृच्चा दृष्टान्तनिर्भासनसंशयाश्च // ना. शा_१६.२ //
आशीः प्रियोक्तिः कपटः क्षमा च प्राप्तिश्च पश्चात्तपनं तथैव /
अर्थानुवृत्तिर्ह्युपपत्तियुक्ती कार्यो ऽनुनीतिः परिदेवनं च // ना. शा_१६.३ //
षट्त्रिंशदेतानि हि लक्षणानि प्रोक्तानि वै भूषणसंमितानि /
काव्येषु भावार्थगतानि तज्ज्ञैः सम्यग् प्रयोज्यानि यथारसं तु // ना. शा_१६.४ //
अलङ्कारैर्गुणैश्चैव बहुभिः समलङ्कृतम् /
भूषणैरिव विन्यस्तैस्तद् भूषणमिति स्मृतम् // ना. शा_१६.५ //
यत्राल्पैरक्षरैः श्लिष्टैर्विचित्रमुपवर्ण्यते /
तमप्यक्षरसङ्घातं विद्याल्लक्षणसंज्ञितम् // ना. शा_१६.६ //
सिद्धैरर्थैस्समं कृत्वा ह्यसिद्धो ऽर्थः प्रसाध्यते /

यत्र श्लक्ष्णविचित्रार्था सा शोभेत्यभिधीयते // ना. शा_१६.७ //
धार्यमाणस्तु बहुभिर्वचनैः कार्ययुक्तिभिः /
न यः पर्यवतिष्ठेत सो ऽभिमानस्तु संज्ञितः // ना. शा_१६.८ //
कीर्त्यमानैर्गुणैर्यत्र विविधार्थसमुद्भवैः /
दोषा न परिकथ्यन्ते तज्ज्ञेयं गुणकीर्तनम् // ना. शा_१६.९ //
लोके गुणातिरिक्तानां बहूनां यत्र नामभिः /
एको ऽभिशब्द्यते यस्तु विज्ञेयं गुणकीर्तनम् // ना. शा_१६.१० //
उत्साहजननैः स्पष्टैरर्थैरोपम्यसंश्रयैः /
प्रसिद्धैरुपगूढं च ज्ञेयं प्रोत्साहनं बुधैः // ना. शा_१६.११ //
यत्रैकस्यापि शब्दस्य दर्शनात्सुबहून्यपि /
यान्ति सिद्धिमनुक्तानि तदुदाहरणं स्मृतम् // ना. शा_१६.१२ //
निरुक्तं द्विविधं प्रोक्तं तथ्यं चातथ्यमेव वा /
सिद्धिप्रसाधितं तथ्यमतथ्यं चाप्रसाधितम् // ना. शा_१६.१३ //
गुणानुवादो हीनानामुत्तमैरुपमाकृतः /
उत्तमार्थविशेषो यः स चाप्यतिशयः स्मृतः // ना. शा_१६.१४ //
बहूनां भाषमाणानामेकस्यार्थविनिर्णयात् /
सिद्धोपमानवचनं हेतुरित्यभिसंज्ञितः // ना. शा_१६.१५ //
अपदेशस्तु परोक्षो यस्मादुत्पद्यते ऽनुकरणेन /
लक्षणसमानकरणात् सारूप्यं तत्तु निर्देश्यम् // ना. शा_१६.१६ //
अभूतपूर्वैर्यत्रार्थैस्तुल्यस्यार्थस्य निर्णयः /
स मिथ्याध्यवसायस्तु प्रोच्यते काव्यलक्षणे // ना. शा_१६.१७ //
बहूनां तु प्रधानानां मध्ये यन्नाम कीर्त्यते /
एकार्थसाधनकृतं सा सिद्धिरिति कीर्त्यते // ना. शा_१६.१८ //
गुणैर्बहुभिरेकार्थैः पदैर्यः संप्रशस्यते /
पदोच्चयं तु तद्विद्यान्नानार्थग्रथनात्मकम् // ना. शा_१६.१९ //
आत्मभावमुपन्यस्य परसादृश्ययुक्तिभिः /
तीव्रार्थभाषणं यत्स्यादाक्रन्दः स तु कीर्तितः // ना. शा_१६.२० //
हृदयस्थस्य भावस्य सुस्पष्टार्थप्रदर्शनम् /
अन्यापदेशकथनैर्मनोरथ इति स्मृतः // ना. शा_१६.२१ //
अपृष्टैरथवा पृष्टैर्निर्णयः क्रियते तु यः /
आख्यानमिति तज्ज्ञेयं लक्षणं नाटकाश्रयम् // ना. शा_१६.२२ //
आदौ यत्क्रोधजननमन्ते हर्षप्रवर्धनम् /
यत्तु प्रियं पुनर्वाक्यं सा याञ्चा परिकीर्तिता // ना. शा_१६.२३ //
कार्येषु विपरीतेषु यदि किञ्चित् प्रवर्तते /
निवार्यते च कार्यज्ञैः प्रतिषेधः प्रकीर्तितः // ना. शा_१६.२४ //
यत्राकारोद्भवैर्वाक्यैरात्मानमथवा परम् /
पृच्छन्निवाभिधत्ते ऽर्थं सा पृच्छेत्यभिसंज्ञिता // ना. शा_१६.२५ //
विद्वान् पूर्वोपलब्धौ यत्समत्वमुपपादयेत् /
निदर्शनकृतस्तज्ज्ञैः स दृष्टान्त इति स्मृतः // ना. शा_१६.२६ //

अनेकयुक्तिमद्वाक्यमनेकार्थप्रसाधकम् /
अनेकवाक्यसंयुक्तं तन्निर्भासनमुच्यते // ना. शा_१६.२७ //
अपरिज्ञाततत्त्वार्थं यत्र वाक्यं समाप्यते /
सो ऽनेकत्वाद्विचाराणां संशयः परिकीर्तितः // ना. शा_१६.२८ //
यत्र शास्त्रार्थसम्पन्नां मनोरथसमुद्भवाम् /
अप्रार्थनीयामन्यां वा विदुस्तामाशिषं बुधाः // ना. शा_१६.२९ //
आदौ यत् क्रोधजननमन्ते हर्षप्रवर्धनम् /
तत् प्रियं वचनं ज्ञेयमाशीर्वादसमन्वितम् // ना. शा_१६.३० //
चलयुक्त्या त्वन्येषामभिसन्धानाभिभावकंकपटम् /
द्वित्रिप्रयोगयुक्तो विज्ञेयः कपटसङ्घातः // ना. शा_१६.३१ //
दुर्जनोदाहृतै रूक्षैः सभामध्ये ऽतिताडितः /
अक्रोधः क्रोधजननैर्वाक्यैर्यः सा क्षमा भवेत् // ना. शा_१६.३२ //
दृष्ट्वैवावयवं कञ्चिद्भावो यत्रानुमीयते /
प्राप्तिं तामभिजानीयाल्लक्षणं नाटकाश्रयम् // ना. शा_१६.३३ //
अकार्यं सहसा कृत्वाऽकृत्वा कार्यमथापि वा /
सन्तापो मनसो यस्तु पश्चातापः प्रकीर्तितः // ना. शा_१६.३४ //
प्रश्रयेणार्थसंयुक्तं यत्परस्यानुवर्तनम् /
स्नेहाद्दाक्षिण्ययोगाद्वा सानुवृत्तिस्तु संज्ञिता // ना. शा_१६.३५ //
प्राप्तानां यत्र दोषाणां क्रियते शमनं पुनः /
सा ज्ञेया ह्युपपत्तिस्तु लक्षणं नाटकाश्रयम् // ना. शा_१६.३६ //
साध्यते यो ऽर्थसम्बन्धो महद्भिः समवायतः /
परस्परानुकूल्येन सा युक्तिः परिकीर्तिता // ना. शा_१६.३७ //
यत्रापसारयन् दोषं गुणमर्थेन योजयेत् /
गुणाभिवादं दोषान् वा कार्यं तल्लक्षणं विदुः // ना. शा_१६.३८ //
अपूर्वक्रोधजनितमपराधं प्रमृज्य यत् /
सेवार्थं मधुरं वाक्यमनुनीतिः प्रकीर्तिता // ना. शा_१६.३९ //
दोषैर्यदन्यनामोक्तैः प्रसिद्धार्थैः प्रयोजयेत् /
अन्यत्रार्थेन सम्बद्धं ज्ञेयं तत् परिदेवनम् // ना. शा_१६.४० //
उपमा रूपकं चैव दीपकं यमकं तथा /
अलङ्कारास्तु विज्ञेया चत्वारो नाटकाश्रयाः // ना. शा_१६.४१ //
यत्किञ्चित् काव्यबन्धेषु सादृश्येनोपमीयते /
उपमा नाम सा ज्ञेया गुणाकृतिसमाश्रया // ना. शा_१६.४२ //
एकस्यैकेन सा कार्या ह्यनेकेनाथवा पुनः /
अनेकस्य तथैकेन बहूनां बहुभिस्तथा // ना. शा_१६.४३ //
तुल्यं ते शशिना वक्त्रमित्येकेनैकसंश्रया /
शशाङ्कवत् प्रकाशन्ते ज्योतींषीति भवेत्तु या // ना. शा_१६.४४ //
एकस्यानेकविषया सोपमा परिकीर्तिता /
श्येनबर्हिणभासानां तुल्यार्थमिति या भवेत् // ना. शा_१६.४५ //
एकस्य बहुभिः साम्यादुपमा नाटकाश्रया /

बहूनां बहुभिर्ज्ञेया घना इव गजा इति // ना. शा_१६.४६ //
प्रशंसा चैव निन्दा च कल्पिता सदृशी तथा /
या किञ्चित्सदृशी ज्ञेया सोपमा पञ्चधा बुधैः // ना. शा_१६.४७ //
प्रशंसा यथा:
दृष्ट्वा तु तां विशालाक्षीं तुतोष मनुजाधिपः /
मुनिभिः साधितां कृच्छ्रात् सिद्धिं मूर्तिमतीमिव // ना. शा_१६.४८ //
निन्दा यथा:
सा तं सर्वगुणैर्हीनं सस्वजे कर्कशच्चविम् /
वने कण्टकिनं वल्ली दावदग्धमिव द्रुमम् // ना. शा_१६.४९ //
कल्पिता यथा:
क्षरन्तो दानसलिलं लालामन्थरगामिनः /
मतङ्गजा विराजन्ते जङ्गमा इव पर्वताः // ना. शा_१६.५० //
सदृशी यथा:
यत्त्वयाद्य कृतं कर्म परिचित्तानुरोधिना /
सदृशं तत्तवैव स्यादतिमानुषकर्मणः // ना. शा_१६.५१ //
किञ्चित्सदृशी यथा:
सम्पूर्णचन्द्रवदना नीलोत्पलदलेक्षणा /
मत्तमातङ्गगमना सम्प्राप्तेयं सखी मम // ना. शा_१६.५२ //
उपमाया बुधैरेते भेदा ज्ञेयाः समासतः /
शेषा ये लक्षणैर्नोक्तास्ते ग्राह्याः काव्यलोकतः // ना. शा_१६.५३ //
नानाधिकरणार्थानां शब्दानां संप्रदीपकम् /
एकवाक्येन संयुक्तं तद्दीपकमुच्यते // ना. शा_१६.५४ //
प्रसृतं मधुरं चापि गुणैः सर्वैरलङ्कृतम् /
काव्ये यन्नाटके विप्रास्तद्दीपकमिति स्मृतम् // ना. शा_१६.५५ //
यथा:
सरांसि हंसैः कुसुमैश्च वृक्षा मत्तैर्द्विरेफैश्च सरोरुहाणि /
गोष्ठीभिरुद्यानवनानि चैव तस्मिन्नशून्यानि सदा क्रियन्ते // ना. शा_१६.५६ //
स्वविकल्पेन रचितं तुल्यावयवलक्षणम् /
किञ्चित्सादृश्यसम्पन्नं यद्रूपं रूपकं तु तत् // ना. शा_१६.५७ //
नानाद्रव्यानुरागाद्यैर्यदौपम्यगुणाश्रयम् /
रूपनिर्वर्णनायुक्तं तद्रूपकमिति स्मृतम् // ना. शा_१६.५८ //
यथा:
पद्माननास्ताः कुमुदप्रहासा विकासिनीलोत्पलचारुनेत्राः /
वापीस्त्रियो हंसकुलैर्नः स्वनद्भिर्विरेजुरन्योन्यमिवाह्वयन्त्यः // ना. शा_१६.५९ //
शब्दाभ्यासस्तु यमकं पदादिषु विकल्पितम् /
विशेषदर्शनञ्चास्य गदतो मे निबोधत // ना. शा_१६.६० //
पादान्तयमकं चैव काञ्चीयमकमेव च /
समुद्गयमकं चैव विक्रान्तयमकं तथा // ना. शा_१६.६१ //
यमकं चक्रवालं च सन्दष्टयमकं तथा /

पदादियमकञ्चैव ह्याम्रेडितमथापि च // ना. शा_१६.६२ //
चतुर्व्यवसितञ्चैव मालायमकमेव च /
एतादृशविधं ज्ञेयं यमकं नाटकाश्रयम् // ना. शा_१६.६३ //
चतुर्णां यत्र पादानामन्ते स्यात्सममक्षरम् /
तद्वै पादान्तयमकं विज्ञेयं नामतो यथा // ना. शा_१६.६४ //
दिनक्षयात् संहृतरश्मिमण्डलं
दिवीव लग्नं तपनीयमण्डलम् ।
विभाति ताम्रं दिवि सूर्यमण्डलं
यथा तरुण्याः स्तनभारमण्डलम् // ना. शा_१६.६५ //
लोकानां प्रभविष्णुर्दैत्येन्द्रगदानिपातनसहिष्णुः /
जयति सुरदैत्यजिष्णुर्भगवानसुरवरमथनकारी विष्णुः // ना. शा_१६.६६ //
पादस्यान्ते तथा चादौ स्यातां यत्र समे पदे /
तत्काञ्चीयमकं चैव विज्ञेयं सूरिभिर्यथा // ना. शा_१६.६७ //
यामं यामं चन्द्रवतीनां द्रवतीनां
व्यक्ताव्यक्ता सारजनीनां रजनीनाम् ।
फुल्ले फुल्ले सम्भ्रमरे वाभ्रमरे वा
रामा रामा विस्मयते च स्मयते च // ना. शा_१६.६८ //
अर्धेनैकेन यद्वृत्तं सर्वमेव समाप्यते /
समुद्गयमकं नाम तज्ज्ञेयं पण्डितैर्यथा // ना. शा_१६.६९ //
केतकीकुसुमपाण्डुरदन्तः
शोभते प्रवरकाननहस्ती ।
केतकीकुसुमपाण्डुरदन्तः
शोभते प्रवरकाननहस्ती // ना. शा_१६.७० //
एकैकं पादमुत्क्रम्य द्वौ पादौ सदृशौ यदि /
विक्रान्तयमकं नाम तद्विज्ञेयमिदं यथा // ना. शा_१६.७१ //
स पूर्वं वारणो भूत्वा द्विशृङ्ग इव पर्वतः /
अभवद्दन्तवैकल्याद्विशृङ्ग इव पर्वतः // ना. शा_१६.७२ //
पूर्वस्यान्तेन पादस्य परस्यादिर्यदा समः /
चक्रवच्चक्रवालं तु विज्ञेयं नामतो यथा // ना. शा_१६.७३ //
तुल्यात्पादद्वयादन्त्यादेकेनादिर्यदा समः /
सर्वत्र चक्रवालन्तु तद्विज्ञेयं बुधैर्यथा // ना. शा_१६.७४ //
शैला यथा शत्रुभिराहता हता हताश्च भूयस्त्वनुपुङ्खपुङ्खगैः /
खगैश्च सर्वैर्युधि सञ्चिताश्चिताश्चिताधिरूढा निहितास्तलैस्तलैः //
ना. शा_१६.७५ //
आदौ द्वौ यत्र पादौ तु भवेतामक्षरे समौ /
सन्दष्टयमकं नाम विज्ञेयं तद्बुधैर्यथा // ना. शा_१६.७६ //
पश्य पश्य रमणस्य मे गुणान् येन येन वशगां करोति माम् /
येन येन हि समेति दर्शनं तेन तेन वशगां करोति माम् // ना. शा_१६.७७ //
आदौ पादस्य तु यत्र स्यात् समावेशः समाक्षरः /

पादादियमकं नाम तद्विज्ञेयं बुधैर्यथा // ना. शा_१६.७८ //
विष्णुः सृजति भूतानि विष्णुः संहरते प्रजाः /
विष्णुः प्रसूते त्रैलोक्यं विष्णुर्लोकाधिदैवतम् // ना. शा_१६.७९ //
पादस्यान्तं पदं यत्र द्विर्द्विरेकमिहोच्यते /
ज्ञेयमाम्रेडितं नाम यमकं तत्र सूरिभिः // ना. शा_१६.८० //
विजृम्भितं निःश्वसितं मुहुर्मुहुः कथं विधेयं स्मरणं पदे पदे /
यथा च ते ध्यानमिदं पुनः पुनर्ध्रुवंगता ते रजनी विना विना // ना. शा_१६.८१ //
सर्वे पादाः समा यत्र भवन्ति नियताक्षराः /
चतुर्व्यवसितं नाम तद्विज्ञेयं बुधैर्यथा // ना. शा_१६.८२ //
वारणानामयमेव कालो वारणानामयमेव कालः /
वारणानामयमेव कालो वारणानामयमेव कालः // ना. शा_१६.८३ //
नानारूपैः स्वरैर्युक्तं यत्रैकं व्यञ्जनं भवेत् /
तन्मालायमकं नाम विज्ञेयं पण्डितैर्यथा // ना. शा_१६.८४ //
लली बली हली माली खेली माली सली जली /
खलो बलो ऽबलो माली मुसली त्वाभिरक्षतु // ना. शा_१६.८५ //
असौ हि रामा रतिविग्रहप्रिया रहःप्रगल्भा रमणं मनोगतम् /
रतेन रात्रिं रमयेत् परेण वा न चेदुदेष्यत्तरुणः परो रिपुः // ना. शा_१६.८६ //
न पुष्कराक्षः क्षतजोक्षिताक्षः क्षरत्क्षतेव्यः क्षतजंदुरीक्षः /
क्षतैर्गवाक्षैरिव संवृताज्ञः साक्षात् सहस्राक्ष इवावभाति // ना. शा_१६.८७ //
एभिरर्थक्रियापेक्षैः कार्यं काव्यं तु लक्षणैः /
अतः परं प्रवक्ष्यामि काव्ये दोषान् गुणांस्तथा // ना. शा_१६.८८ //
गूढार्थमर्थान्तरमर्थहीनं भिन्नार्थमेकार्थमभिप्लुतार्थम् /
न्यायावपेतं विषमं विसन्धि शब्दच्युतं वै दश काव्यदोषाः // ना. शा_१६.८९ //
पर्यायशब्दाभिहतं गूढार्थमभिसंज्ञितम् /
अवर्ण्यं वर्ण्यते यत्र तदर्थान्तरमिष्यते // ना. शा_१६.९० //
अर्थहीनं त्वसम्बद्धं सावशेषार्थमेव च /
भिन्नार्थमभिविज्ञेयमसभ्यं ग्राम्यमेव च // ना. शा_१६.९१ //
विवक्षितो ऽन्य एवार्थो यत्रान्यार्थेन भिद्यते /
भिन्नार्थं तदपि प्राहुः काव्यं काव्यविचक्षणाः // ना. शा_१६.९२ //
अविशेषाभिधानं यत् तदेकार्थमिति स्मृतम् /
अभिप्लुतार्थं विज्ञेयं यत् पदेन समस्यते // ना. शा_१६.९३ //
न्यायादपेतं विज्ञेयं प्रमाणपरिवर्जितम् /
वृत्तभेदो भवेद्यत्र विषमं नाम तद्भवेत् // ना. शा_१६.९४ //
अनुपशिष्टशब्दं यत् तद्विसन्धीति कीर्तितम् /
शब्दच्युतञ्च विज्ञेयमशब्दस्वरयोजनात् // ना. शा_१६.९५ //
एते दोषास्तु विज्ञेयाः सूरिभिर्नाटकाश्रयाः /
गुणा विपर्ययादेषां माधुर्यौदार्यलक्षणाः // ना. शा_१६.९६ //
श्लेषः प्रसादः समतासमाधिर्माधुर्यमोजः पदसौकुमार्यम् /

अर्थस्य च व्यक्तिरुदारता च कान्तिश्च काव्यस्य गुणा दशैते // ना. शा_१६.९७ //
ईप्सितेनार्थजातेन सम्बद्धानां परस्परम् /
श्लिष्टता या पदानां हि श्लेष इत्यभिधीयते // ना. शा_१६.९८ //
विचारगहनं यत्स्यात् स्फुटञ्चैव स्वभावतः /
स्वतः सुप्रतिबद्धञ्च श्लिष्टं तत् परिकीर्त्यते // ना. शा_१६.९९ //
अप्यनुक्तो बुधैर्यत्र शब्दो ऽर्थो वा प्रतीयते /
सुखशब्दार्थसंयोगात् प्रसादः परिकीर्त्यते // ना. शा_१६.१०० //
नातिचूर्णपदैर्युक्ता न च व्यर्थाभिदायिभिः /
दुर्बोधनैश्च न कृता समत्वात् समता मता // ना. शा_१६.१०१ //
अन्योन्यसदृशा यत्र तथा ह्यन्योन्यभूषणाः /
अलङ्कारा गुणाश्चैव समाः स्युः समतां मताः // ना. शा_१६.१०२ //
अभियुक्तैर्विशेषस्तु यो ऽर्थस्येहोपलक्ष्यते /
तेन चार्थेन सम्पन्नः समाधिः परिकीर्त्यते // ना. शा_१६.१०३ //
उपमास्विह दृष्टानामर्थानां यत्नतस्तथा /
प्राप्तानां चातिसंक्षेपात् समाधिर्निर्णयो यतः // ना. शा_१६.१०४ //
बहुशो यच्छ्रुतं वाक्यमुक्तं वापि पुनः पुनः /
नोद्वेजयति यस्माद्धि तन्माधुर्यमिति स्मृतम् // ना. शा_१६.१०५ //
समासवद्भिर्विविधैर्विचित्रैश्च पदैर्युतम् /
सानुस्वारैरुदारैश्च तदोजः परिकीर्त्यते // ना. शा_१६.१०६ //
अवगीतो ऽपि हीनो ऽपि स्यादुदात्तावभासकः /
यत्र शब्दार्थसम्पत्तिस्तदोजः परिकीर्तितम् // ना. शा_१६.१०७ //
सुखप्रयोज्यैर्यच्चब्दैर्युक्तं सुश्लिष्टसन्धिभिः /
सुकुमारार्थसंयुक्तं सौकुमार्यं तदुच्यते // ना. शा_१६.१०८ //
सुप्रसिद्धाभिधाना तु लोककर्मव्यवस्थिता /
या क्रिया क्रियते काव्ये सार्थव्यक्तिः प्रतीयते // ना. शा_१६.१०९ //
यस्यार्थानुप्रवेशेन मनसा परिकल्प्यते /
अनन्तरं प्रयोगस्तु साऽर्थव्यक्तिरुदाहृता // ना. शा_१६.११० //
दिव्यभावपरीतं यच्चृङ्गाराद्भुतयोजितम् /
अनेकभावसंयुक्तमुदारत्वं प्रकीर्तितम् // ना. शा_१६.१११ //
अनेकार्थविशेषैर्यत् सूक्तैः सौष्ठवसंयुतैः /
उपेतमतिचित्रार्थैः उदात्तं तच्च कीर्त्यते // ना. शा_१६.११२ //
यन्मनश्श्रोत्रविषयमाह्लादयति हीन्दुवत् /
लीलाद्यर्थोपपन्नां वा तां कान्तिं कवयो विदुः // ना. शा_१६.११३ //
यो मनश्श्रोत्रविषयः प्रसादजनको भवेत् /
शब्दबन्धः प्रयोगेण स कान्त इति भण्यते // ना. शा_१६.११४ //
एवमेते ह्यलङ्कारा गुणा दोषाश्च कीर्तिताः /
प्रयोगमेषां च पुनर्वक्ष्यामि रससंश्रयम् // ना. शा_१६.११५ //
लघ्वक्षरप्रायकृतमुपमारूपकाश्रयम् /
काव्यं कार्यं तु नाट्यज्ञैः वीररौद्राद्भुताश्रयम् // ना. शा_१६.११६ //

गुर्वक्षरप्रायकृतं बीभत्से करुणे तथा /
कदाचिद्रौद्रवीराभ्यां यदाघर्षणजं भवेत् // ना. शा_१६.११७ //
रूपदीपकसंयुक्तमार्यावृत्तसमाश्रयम् /
शृङ्गारे च रसे वीरे काव्यं स्यान्नाटकाश्रयम् // ना. शा_१६.११८ //
उत्तरोत्तरसंयुक्तं वीरे काव्यं तु यद्भवेत् /
जगत्यतिजगत्यां वा संकृत्यां वापि तद्भवेत् // ना. शा_१६.११९ //
तथैव युद्धसम्फेटा उत्कृत्यां संप्रकीर्तितौ /
करुणे शक्वरी ज्ञेया तथैवातिधृतिर्भवेत् // ना. शा_१६.१२० //
यद्वीरे कीर्तितं च्चन्दः तद्रौद्रे ऽपि प्रयोजयेत् /
शेषाणामर्थयोगेन च्चन्दः कार्यः प्रयोक्तृभिः // ना. शा_१६.१२१ //
यच्चन्दः पूर्वमुद्दिष्टं विषमार्धसमे समम् /
उदारमधुरैः शब्दैस्तत्कार्यं तु रसानुगम् // ना. शा_१६.१२२ //
शब्दानुदारमधुरान् प्रमदाभिधेयान् नाट्याश्रयेषु कृतिषु प्रययेत कर्तुम् /
तैर्भूषिता बहु विभान्ति हि काव्यबन्धाः पद्माकरा विकसिता इव राजहंसैः //
ना. शा_१६.१२३ //
त्रिविधं ह्यक्षरं कार्यं कविभिर्नाटकाश्रयम् /
ह्रस्वं दीर्घं प्लुतञ्चैव रसभावविभावकम् // ना. शा_१६.१२४ //
एकमात्रं भवेद् ह्रस्वं द्विमात्रं दीर्घमिष्यते /
प्लुतं चैव त्रिमात्रं स्यादक्षरं स्वरयोजनात् // ना. शा_१६.१२५ //
स्मृते चासूयिते चैव तथा च परिदेविते /
पठतां ब्राह्मणानाञ्च प्लुतमक्षरमिष्यते // ना. शा_१६.१२६ //
अकारस्तु स्मृते कार्यं ऊकारश्चाप्यसूयिते /
परिदेविते तु हाकार ऑंकारो ऽध्ययने तथा // ना. शा_१६.१२७ //
ह्रस्वदीर्घप्लुतानीह यथाभावं यथारसम् /
काव्ययोगेषु सर्वेषु ह्यक्षराणि प्रयोजयेत् // ना. शा_१६.१२८ //
चेक्रीडितप्रभृतिभिर्विकृतैस्तु शब्दैः युक्ता न भान्ति ललिता भरतप्रयोगाः /
यज्ञक्रियेव रुरुचर्मधुरैः कृताकैः वेश्या द्विजैरिव कमण्डलुदण्डहस्तैः
// ना. शा_१६.१२९ //
मृदुललितपदार्थं गूढशब्दार्थहीनं बुधजनसुखभोग्यं
युक्तिमन्नृत्तयोग्यम् /
बहुरसकृतमार्गं सन्धिसन्धानयुक्तं भवति जगति योग्यं नाटकं
प्रेक्षकाणाम् // ना. शा_१६.१३० //

अनुबन्धः
भूषणाक्षरसङ्घातौ शोभोदाहरणे तथा /
हेतुसंशयदृष्टान्ताः प्राप्ताभिप्राय एव च // ना. शा_१६.१३१ //
निदर्शनं निरुक्तं च सिद्धिश्चाथ विशेषणम् /
गुणातिपातातिशयौ तुल्यतर्कः पदोच्चयः // ना. शा_१६.१३२ //
दृष्टं चैवोपदिष्टं च विचारस्तद्विपर्ययः /

भ्रंशश्चानुनयो माला दाक्षिण्यं गर्हणं तथा // ना. शा_१६.१३३ //
अर्थापत्तिः प्रसिद्धिश्च पृच्चा सारूप्यमेव च /
मनोरथश्च लेशश्च क्षोभो ऽथ गुणकीर्तनम् // ना. शा_१६.१३४ //
ज्ञेयान्यनुक्तसिद्धिश्च प्रियं वचनमेव च /
षट्त्रिंशल्लक्षणान्येव काव्यबन्धेषु निर्दिशेत् // ना. शा_१६.१३५ //
अलङ्कारैर्गुणैश्चैव बहुभिः समलंकृतम् /
भूषणैरिव चित्रार्थैस्तद् भूषणमिति स्मृतम् // ना. शा_१६.१३६ //
यत्राल्पैरक्षरैः श्लिष्टैर्विचित्रमुपवर्ण्यते /
तमप्यक्षरसङ्घातं विद्याल्लक्षणसंज्ञितम् // ना. शा_१६.१३७ //
सिद्धैरर्थैः समं कृत्वा ह्यसिद्धो ऽर्थः प्रयुज्यते /
यत्र श्लिष्टा विचित्रार्था सा शोभेत्यभिधीयते // ना. शा_१६.१३८ //
यत्र तुल्यार्थयुक्तेन वाक्येनाभिप्रदर्शनात् /
साध्यन्ते निपुणैरर्थास्तदुदाहरणं स्मृतम् // ना. शा_१६.१३९ //
यत् प्रयोजनसामर्थ्यात् वाक्यमिष्टार्थसाधकम् /
समासोक्तं मनोग्राहि स हेतुरिति संज्ञितः // ना. शा_१६.१४० //
अपरिज्ञाततत्त्वार्थं वाक्यं यत्र समाप्यते /
अनेकत्वाद्विचाराणां स संशय इति स्मृतः // ना. शा_१६.१४१ //
सर्वलोकमनोग्राहि यस्तु पक्षार्थसाधकः /
हेतोर्निदर्शनकृतः स दृष्टान्त इति स्मृतः // ना. शा_१६.१४२ //
दृष्ट्वैवावयवान् कांश्चिद् भावो यत्रानुमीयते /
प्राप्तिं तामपि जानीयाल्लक्षणं नाटकाश्रयम् // ना. शा_१६.१४३ //
अभूतपूर्वो यो ऽप्यर्थः सादृश्यात्परिकल्पितः /
लोकस्य हृदयग्राही सो ऽभिप्राय इति स्मृतः // ना. शा_१६.१४४ //
यत्रार्थानां प्रसिद्धानां क्रियते परिकीर्तनम् /
परापेक्षाव्युदासार्थं तन्निदर्शनमुच्यते // ना. शा_१६.१४५ //
निरवद्यस्य वाक्यस्य पूर्वोक्तार्थप्रसिद्धये /
यदुच्यते तु वचनं निरुक्तं तदुदाहृतम् // ना. शा_१६.१४६ //
बहूनां च प्रधानानां नाम यत्राभिकीर्त्यते /
अभिप्रेतार्थसिद्ध्यर्थं सा सिद्धिरभिधीयते // ना. शा_१६.१४७ //
सिद्धान् बहून् प्रधानार्थान् उक्त्वा यत्र प्रयुज्यते /
विशेषयुक्तं वचनं विज्ञेयं तद्विशेषणम् // ना. शा_१६.१४८ //
गुणाभिधानैर्विविधैर्विपरीतार्थयोजितैः /
गुणातिपातो मधुरैर्निष्ठुरार्थैर्भवेदथ // ना. शा_१६.१४९ //
बहून् गुणान् कीर्तयित्वा सामान्यजनसम्भवान् /
विशेषः कीर्त्यते यस्तु ज्ञेयः सो ऽतिशयो बुधैः // ना. शा_१६.१५० //
रूपकैरुपसाभिर्वा तुल्यार्थैः सुप्रयोजितैः /
अप्रत्यक्षार्थसंस्पर्शस्तुल्यतर्कः प्रकीर्तितः // ना. शा_१६.१५१ //
बहूनां च प्रयुक्तानां पदानां बहुभिः पदैः /
उच्चयः सदृशार्थो यः स विज्ञेयः पदोच्चयः // ना. शा_१६.१५२ //

यथादेशं यथाकालं यथारूपं च वर्ण्यते /
यत्प्रत्यक्षं परोक्षं वा दृष्टं तद्वर्णतो ऽपि वा // ना. शा_१६.१५३ //
परिगृह्य तु शास्त्रार्थं यद्वाक्यमभिधीयते /
विद्वन्मनोहरं स्वन्तमुपदिष्टं तदुच्यते // ना. शा_१६.१५४ //
पूर्वाशयसमानार्थैरप्रत्यक्षार्थसाधनैः /
अनेकोपाधिसंयुक्तो विचारः परिकीर्तितः // ना. शा_१६.१५५ //
विचारस्यान्यथाभावस्तथा दृष्टोपदिष्टयोः /
सन्देहात्कल्प्यते यस्तु स विज्ञेयो विपर्ययः // ना. शा_१६.१५६ //
वाच्यमर्थं परित्यज्य दृष्टादिभिरनेकधा /
अन्यस्मिन्नेव पतनादिह भ्रंशः स इष्यते // ना. शा_१६.१५७ //
उभयोः प्रीतिजननो विरुद्धाभिनिविष्टयोः /
अर्थस्य साधकश्चैव विज्ञेयो ऽनुनयो बुधैः // ना. शा_१६.१५८ //
ईप्सितार्थप्रसिद्ध्यर्थं कीर्त्यते यत्र सूरिभिः /
प्रयोजनान्यनेकानि सा मालेत्यभिसंज्ञिता // ना. शा_१६.१५९ //
हृष्टैः प्रसन्नवदनैर्यत्परस्यानुवर्तनम् /
क्रियते वाक्यचेष्टाभिस्तद्दाक्षिण्यमिति स्मृतम् // ना. शा_१६.१६० //
यत्र संकीर्तयन् दोषं गुणमर्थेन दर्शयेत् /
गुणातिपाताद् दोषाद्वा गर्हणं नाम तद्भवेत् // ना. शा_१६.१६१ //
अर्थान्तरस्य कथने यत्रान्यो ऽर्थः प्रतीयते /
वाक्यमाधुर्यसम्पन्ना सार्थापत्तिरुदाहृता // ना. शा_१६.१६२ //
वाक्यैः सातिशयैरुक्ता वाक्यार्थस्य प्रसाधकैः /
लोकप्रसिद्धैर्बहुभिः प्रसिद्धिरिति कीर्तिता // ना. शा_१६.१६३ //
यत्राकारोद्भवैर्वाक्यैरात्मानमथवा परम् /
पृच्छ्यते चाभिधत्ते ऽर्थं सा पृच्छेत्यभिसंज्ञिता // ना. शा_१६.१६४ //
दृष्टश्रुतानुभूतार्थकथनादिसमुद्भवम् /
सादृश्यं क्षोभजननं सारूप्यमिति संज्ञितम् // ना. शा_१६.१६५ //
हृदयस्थस्य वाक्यस्य गूढार्थस्य विभावकम् /
अन्यापदेशैः कथनं मनोरथ इति स्मृतः // ना. शा_१६.१६६ //
यद्वाक्यं वाक्यकुशलैरुपायेनाभिधीयते /
सदृशार्थाभिनिष्पत्त्याः स लेश इति कीर्तितः // ना. शा_१६.१६७ //
परदोषैर्विचित्रार्थैर्यत्रात्मा परिकीर्त्यते /
अदृष्टो ऽप्यन्यो ऽपि वा कश्चित् स तु क्षोभ इति स्मृतः // ना. शा_१६.१६८ //
लोके गुणातिरिक्तानां गुणानां यत्र नामभिः /
एको ऽपि शब्द्यते तत्तु विज्ञेयं गुणकीर्तनम् // ना. शा_१६.१६९ //
प्रस्तावेनैव शेषो ऽर्थः कृत्स्नो यत्र प्रतीयते /
वचनेन विनानुक्तसिद्धिः सा परिकीर्तिता // ना. शा_१६.१७० //
यत्प्रसन्नेन मनसा पूज्यं पूजयितुं वचः /
हृष्टप्रकाशनार्थं तु सा प्रियोक्तिरुदाहृता // ना. शा_१६.१७१ //
एतानि काव्यस्य च लक्षणानि षट्त्रिंशदुद्देशनिदर्शनानि /

प्रबन्धशोभाकरणानि तज्ज्ञैः सम्यक् प्रयोज्यानि रसायनानि // ना. शा_१६.१७२ //

इति भरतीये नाट्यशास्त्रे वागभिनये काव्यलक्षणो नाम षोडशो ऽध्यायः

---

अथ अष्टादशो ऽध्यायः

वर्तयिष्याम्यहं विप्रा दशरूपविकल्पनम् /
नामतः कर्मतश्चैव तथा चैव प्रयोगतः // ना. शा_१८.१ //
नाटकं सप्रकरणमङ्को व्यायोग एव च /
भाणः समवकारश्च वीथी प्रहसनं डिमः // ना. शा_१८.२ //
ईहामृगश्च विज्ञेया दशेमे नाट्यलक्षणे /
एतेषां लक्षणमहं व्याख्यास्याम्यनुपूर्वशः // ना. शा_१८.३ //
सर्वेषामेव काव्यानां मातृका वृत्तयः स्मृताः /
आभ्यो विनिसृतं ह्येतद्दशरूपं प्रयोगतः // ना. शा_१८.४ //
जातिभिः श्रुतिभिश्चैव स्वरा ग्रामत्वमागताः /
यथा तथा वृत्तिभेदैः काव्यबन्धा भवन्ति हि // ना. शा_१८.५ //
ग्रामौ पूर्णस्वरौ द्वौ तु यथा वै षड्जमध्यमौ /
सर्ववृत्तिविनिष्पन्नौ काव्यबन्धौ तथा त्विमौ // ना. शा_१८.६ //
ज्ञेयं प्रकरणं चैव तथा नाटकमेव च /
सर्ववृत्तिविनिष्पन्नं नानाबन्धसमाश्रयम् // ना. शा_१८.७ //
वीथी समवकारश्च तथेहामृग एव च /
उत्सृष्टिकाङ्को व्यायोगो भाणः प्रहसनं डिमः // ना. शा_१८.८ //
कैशिकीवृत्तिहीनानि रूपाण्येतानि कारयेत् /
अत ऊर्ध्वं प्रवक्ष्यामि काव्यबन्धविकल्पनम् // ना. शा_१८.९ //
प्रख्यातवस्तुविषयं प्रख्यातोदात्तनायकं चैव /
राजर्षिवंश्यचरितं तथैव दिव्याश्रयोपेतम् // ना. शा_१८.१० //
नानाविभूतिभिर्युतमृद्धिविलासादिभिर्गुणैश्चैव /
अङ्कप्रवेशकाढ्यं भवति हि तन्नाटकं नाम // ना. शा_१८.११ //
नृपतीनां यच्चरितं नानारसभावचेष्टितं बहुधा /
सुखदुःखोत्पत्तिकृतं भवति हि तन्नाटकं नाम // ना. शा_१८.१२ //
अस्यावस्थोपेतं कार्यं प्रसमीक्ष्य बिन्दुविस्तारात् /
कर्तव्यो ऽङ्कः सो ऽपि तु गुणान्वितं नाट्यतत्वज्ञैः // ना. शा_१८.१३ //
अङ्क इति रूढिशब्दो भावैश्च रसैश्च रोहयत्यर्थान् /
नानाविधानयुक्तो यस्मात्तस्माद्भवेदङ्कः // ना. शा_१८.१४ //
अङ्कसमाप्तिः कार्या काव्यच्चेदेन बीजसंहारः /
वस्तुव्यापी बिन्दुः काव्यसमुत्थो ऽत्र नित्यं स्यात् // ना. शा_१८.१५ //
यत्रार्थस्य समाप्तिर्यत्र च बीजस्य भवति संहारः /
किञ्चिदवलग्नबिन्दुः सो ऽङ्क इति सदावगन्तव्यः // ना. शा_१८.१६ //

ये नायका निगदितास्तेषां प्रत्यक्षचरितसंयोगः /
नानावस्थोपेतः कार्यस्त्वङ्को ऽविप्रकृष्टस्तु // ना. शा_१८.१७ //
नायकदेवीगुरुजनपुरोहितामात्यसार्थवाहानाम् /
नैकरसान्तरविहितो ह्यङ्क इति स वेदितव्यस्तु // ना. शा_१८.१८ //
पञ्चाक्षरा दशपरा ह्यङ्काः स्युर्नाटके प्रकरणे च /
निष्क्रामः सर्वेषां यस्मिन्नङ्कः स विज्ञेयः // ना. शा_१८.१९ //
क्रोधप्रसादशोकाः शापोत्सर्गो ऽथ विद्रवोद्वाहौ /
अद्भुतसम्भवदर्शनमङ्के प्रत्यक्षजानि स्युः // ना. शा_१८.२० //
एकदिवसप्रवृत्तः कार्यस्त्वङ्को ऽर्थबीजमधिकृत्य /
आवश्यककार्याणामविरोधेन प्रयोगेषु // ना. शा_१८.२१ //
एकाङ्केन कदाचिद्बहूनि कार्याणि योजयेद्धीमान् /
आवश्यकाविरोधेन तत्र काव्यानि कार्याणि // ना. शा_१८.२२ //
रङ्गं तु ये प्रविष्टाः सर्वेषां भवति तत्र निष्क्रामः /
बीजार्थयुक्तियुक्तं कृत्वा काव्यं यथार्थरसम् // ना. शा_१८.२३ //
न बहूनीह कार्याणि त्वेकाङ्के विनियोजयेत् /
आवश्यकानां कार्याणां विरोधो हि तथा भवेत् // ना. शा_१८.२४ //
ज्ञात्वा दिवसावस्थां क्षणयाममुहूर्तलक्षणोपेताम् /
विभजेत्सर्वमशेषं पृथक्पृथक्काव्यमङ्केषु // ना. शा_१८.२५ //
दिवसावसानकार्यं यद्यङ्के नोपपद्यते सर्वम् /
अङ्कच्चेदं कृत्वा प्रवेशकैस्तद्विधातव्यम् // ना. शा_१८.२६ //
विप्रकृष्टं तु यो देशं गच्चेत्कार्यवशानुगः /
अङ्कच्चेदे ऽथ संक्षेपान्निर्दिशेत्तं प्रवेशकैः // ना. शा_१८.२७ //
सन्निहितनायको ऽङ्कः कर्तव्यो नाटके प्रकरणे वा /
परिजनकथानुबन्धः प्रवेशको नाम विज्ञेयः // ना. शा_१८.२८ //
प्रकरणनाटकविषये पञ्चाद्या दशपरा भवन्त्यङ्काः /
अङ्कान्तरसन्धिषु च प्रवेशकास्तेषु तावन्तः // ना. शा_१८.२९ //
अनयोरन्तरविहितः प्रवेशको ऽर्थक्रियां समभिवीक्ष्य /
संक्षेपार्थः सन्धिष्वर्थानां संविधातव्यः // ना. शा_१८.३० //
अङ्कच्चेदं कृत्वा मासकृतं वर्षसञ्चितं वापि /
तत्सर्वं कर्तव्यं वर्षादूर्ध्वं न तु कदाचित् // ना. शा_१८.३१ //
यः कश्चित्कार्यवशाद्गच्चति पुरुषः प्रकृष्टमध्वानम् /
तत्राप्यङ्कच्चेदः कर्तव्यः पूर्ववत्तज्ञैः // ना. शा_१८.३२ //
अङ्कान्तरानुसारी संक्षेपार्थमधिकृत्य बिन्दूनाम् /
प्रकरणनाटकविषये प्रवेशकः संविधातव्यः // ना. शा_१८.३३ //
नोत्तममध्यमपुरुषैराचरितो नाप्युदात्तवचनकृतः /
प्राकृतभाषाचारः प्रयोगमाश्रित्य कर्तव्यः // ना. शा_१८.३४ //
कालोत्थानगतिरसौ व्याख्यासंरम्भकार्यविषयाणाम् /
अर्थाभिधानयुक्तः प्रवेशकः स्यादनेकार्थः // ना. शा_१८.३५ //
बह्वाश्रयमपि कार्यं प्रवेशकैः संक्षिपेच्च सन्धिषु वा /

बहुचूर्णपदैर्युक्तं जनयति खेदं प्रयोगस्य // ना. शा_१८.३६ //
यत्रार्थस्य समाप्तिर्न भवत्यङ्के प्रयोगबाहुल्यात् /
वृत्तान्तस्वल्पकथैः प्रवेशकैः सो ऽभिधातव्यः // ना. शा_१८.३७ //
युद्धं राज्यभ्रंशो मरणं नगरोपरोधनं चैव /
प्रत्यक्षाणि तु नाङ्के प्रवेशकैः संविधेयानि // ना. शा_१८.३८ //
अङ्के प्रवेशके च प्रकरणमाश्रित्य नाटके वापि /
न वधः कर्तव्यः स्याद्यो ऽभ्युदयी नायकः ख्यातः // ना. शा_१८.३९ //
अपसरणमेव कार्यं ग्रहणं वा सन्धिरेव वा योज्यः /
काव्यश्लेषैर्बहुभिर्यथारसं नाट्यतत्त्वज्ञैः // ना. शा_१८.४० //
न महाजनपरिवारं कर्तव्यं नाटकं प्रकरणं वा /
ये तत्र कार्यपुरुषाश्चत्वारः पञ्च वा ते स्युः // ना. शा_१८.४१ //
कार्यं गोपुच्छाग्रं कर्तव्यं काव्यबन्धमासाद्य /
ये चोदात्ता भावास्ते सर्वे पृष्ठतः कार्याः // ना. शा_१८.४२ //
सर्वेषां काव्यानां नानारसभावयुक्तियुक्तानाम् /
निर्वहणे कर्तव्यो नित्यं हि रसो ऽद्भुतस्तज्ज्ञैः // ना. शा_१८.४३ //
नाटकलक्षणमेतन्मया समासेन कीर्तितं विधिवत् /
प्रकरणमतः परमहं लक्षणयुक्त्या प्रवक्ष्यामि // ना. शा_१८.४४ //
यत्र कविरात्मशक्त्या वस्तु शरीरं च नायकं चैव /
औत्पत्तिकं प्रकुरुते प्रकरणमिति तद्बुधैर्ज्ञेयम् // ना. शा_१८.४५ //
यदनार्षमथाहार्यं काव्यं प्रकरोत्यभूतगुणयुक्तम् /
उत्पन्नबीजवस्तु प्रकरणमिति तदपि विज्ञेयम् // ना. शा_१८.४६ //
यन्नाटके मयोक्तं वस्तु शरीरं च वृत्तिभेदाश्च /
तत्प्रकरणे ऽपि योज्यं सलक्षणं सर्वसन्धिषु तु // ना. शा_१८.४७ //
विप्रवणिक्षचिवानां पुरोहितामात्यसार्थवाहानाम् /
चरितं यन्नैकविधं ज्ञेयं तत्प्रकरणं नाम // ना. शा_१८.४८ //
नोदात्तनायककृतं न दिव्यचरितं न राजसम्भोगम् /
बाह्यजनसंप्रयुक्तं तज्ज्ञेयं प्रकरणं तज्ज्ञैः // ना. शा_१८.४९ //
दासविटश्रेष्ठियुतं वेशस्त्र्युपचारकारणोपेतम् /
मन्दकुलस्त्रीचरितं काव्यं कार्यं प्रकरणे तु // ना. शा_१८.५० //
सचिवश्रेष्ठिब्राह्मणपुरोहितामात्यसार्थवाहानाम् /
गृहवार्ता यत्र भवेन्न तत्र वेश्याङ्गना कार्या // ना. शा_१८.५१ //
यदि वेशयुवतियुक्तं न कुलस्त्री सङ्गमो ऽपि स्यात् /
अथ कुलजनप्रयुक्तं न वेशयुवतिर्भवेत्तत्र // ना. शा_१८.५२ //
यदि वा कारणयुक्त्या वेशकुलस्त्रीकृतोपचारः स्यात् /
अविकृतभाषाचारं तत्र तु पाठ्यं प्रयोक्तव्यम् // ना. शा_१८.५३ //
मध्यमपुरुषैर्नित्यं योज्यो विष्कम्भको ऽत्र तत्त्वज्ज्ञैः /
संस्कृतवचनानुगतः संक्षेपार्थः प्रवेशकवत् // ना. शा_१८.५४ //
शुद्धः संकीर्णो वा द्विविधो विष्कम्भको ऽपि कर्तव्यः /
मध्यमपात्रः शुद्धः संकीर्णो नीचमध्यकृतः // ना. शा_१८.५५ //

अङ्कान्तरालविहितः प्रवेशको ऽर्थक्रियां समभिवीक्ष्य /
संक्षेपात्सन्धीनामर्थानां चैव कर्तव्यः // ना. शा_१८.५६ //
अनयोश्च बन्धयोगादन्यो भेदः प्रयोक्तृभिः कार्यः /
प्रख्यातस्त्वितरो वा नाटकयोगे प्रकरणे वा // ना. शा_१८.५७ //
प्रकरणनाटकभेदादुत्पाद्यं वस्तु नायकं नृपतिम् /
अन्तःपुरसङ्गीतककन्यामधिकृत्य कर्तव्या // ना. शा_१८.५८ //
स्त्रीप्राया चतुरङ्का ललिताभिनयात्मिका सुविहिताङ्गी /
बहुनृत्तगीतपाठ्या रतिसम्भोगात्मिका चैव // ना. शा_१८.५९ //
राजोपचारयुक्ता प्रसादनक्रोधदम्भसंयुक्ता /
नायकदेवीदूती सपरिजना नाटिका ज्ञेया // ना. शा_१८.६० //
अन्तर्भावगता ह्येषा भावयोरुभयोर्यतः /
अत एव दशैतानि रूपाणीत्युदितानि वै // ना. शा_१८.६१ //
प्रकरणनाटकलक्षणमुक्तं विप्रा मया समासेन /
वक्ष्याम्यतः परमहं लक्षणं युक्त्या समवकारम् // ना. शा_१८.६२ //
देवासुरबीजकृतः प्रख्यातोदात्तनायकश्चैव /
त्र्यङ्कस्तथा त्रिकपटस्त्रिविद्रवः स्यात्त्रिशृङ्गारः // ना. शा_१८.६३ //
द्वादशनायकबहुलो ह्यष्टादशनाडिकाप्रमाणश्च /
वक्ष्याम्यस्याङ्कविधिं यावत्यो नाडिका यत्र // ना. शा_१८.६४ //
अङ्कस्तु सप्रहसनः सविद्रवः सकपटः सवीथीकः /
द्वादशनाडीविहितः प्रथमः कार्यः क्रियोपेतः // ना. शा_१८.६५ //
कार्यस्तथा द्वितीयः समाश्रितो नाडिकाश्चतस्रस्तु /
वस्तुसमापनविहितो द्विनाडिकः स्यात्तृतीयस्तु // ना. शा_१८.६६ //
नाडीसंज्ञा ज्ञेया मानं कालस्य यन्मुहूर्तार्धम् /
तन्नाडिकाप्रमाणं यथोक्तमङ्केषु संयोज्यम् // ना. शा_१८.६७ //
या नाडिकेति संज्ञा कालविभागे क्रियाभिसंपन्ना /
कार्या च सा प्रयत्नाद्यथा क्रमेणैव शास्त्रोक्ता // ना. शा_१८.६८ //
अङ्को ऽङ्कस्त्वन्यार्थः कर्तव्यः काव्यबन्धमासाद्य /
अर्थं हि समवकारे ह्यप्रतिसम्बन्धमिच्चन्ति // ना. शा_१८.६९ //
युद्धजलसम्भवो वा वाय्वग्निगजेन्द्रसंभ्रमकृतो वा /
नगरोपरोधजो वा विज्ञेयो विद्रवस्त्रिविधः // ना. शा_१८.७० //
वस्तुगतक्रमविहितो देववशाद्वा परप्रयुक्तो वा /
सुखदुःखोत्पत्तिकृतस्त्रिविधः कपटो ऽत्र विज्ञेयः // ना. शा_१८.७१ //
त्रिविधश्चात्र विधिज्ञैः पृथक्पृथक्कार्यविहितार्थः /
शृङ्गारः कर्तव्यो धर्मे चार्थे च कामे च // ना. शा_१८.७२ //
यस्मिन् धर्मप्रापकमात्महितं भवति साधनं बहुधा /
व्रतनियमतपोयुक्तो ज्ञेयो ऽसौ धर्मशृङ्गारः // ना. शा_१८.७३ //
अर्थस्येच्चायोगाद्बहुधा चैवार्थतो ऽर्थशृङ्गारः /
स्त्रीसंप्रयोगविषयेष्वर्थार्था वा रतिर्यत्र // ना. शा_१८.७४ //
कन्याविलोभनकृतं प्राप्तौ स्त्रीपुंसयोस्तु रम्यं वा /

निभृतं सावेगं वा यस्य भवेत्कामशृङ्गारः // ना. शा_१८.७५ //
उष्णिग्गायत्र्यादीन्यन्यानि च यानि बन्धकुटिलानि /
वृत्तानि समवकारे कविभिस्तानि प्रयोज्यानि // ना. शा_१८.७६ //
एवं कार्यस्तज्ज्ञैर्नानारससंश्रयः समवकारः /
वक्ष्याम्यतः परमहं लक्षणमीहामृगस्यापि // ना. शा_१८.७७ //
दिव्यापुरुषाश्रयकृतो दिव्यस्त्रीकारणोपगतयुद्धः /
सुविहितवस्तुनिबद्धो विप्रत्ययकारकश्चैव // ना. शा_१८.७८ //
उद्धतपुरुषप्रायः स्त्रीरोषग्रथितकाव्यबन्धश्च /
संक्षोभविद्रवकृतः संफेटकृतस्तथा चैव // ना. शा_१८.७९ //
स्त्रीभेदनापहरणावमर्दनप्राप्तवस्तुशृङ्गारः /
ईहामृगस्तु कार्यः सुसमाहितकाव्यबन्धश्च // ना. शा_१८.८० //
यद्व्यायोगे कार्यं ये पुरुषा वृत्तयो रसाश्चैव /
ईहामृगे ऽपि ते स्युः केवलममरस्त्रिया योगः // ना. शा_१८.८१ //
यत्र तु वधेप्सितानां वधो ह्युदग्रो भवेद्धि पुरुषाणाम् /
किञ्चिद्व्याजं कृत्वा तेषां युद्धं शमयितव्यम् // ना. शा_१८.८२ //
ईहामृगस्य लक्षणमुक्तं विप्राः समासयोगेन /
डिमलक्षणं तु भूयो लक्षणयुक्त्या प्रवक्ष्यामि // ना. शा_१८.८३ //
प्रख्यातवस्तुविषयः प्रख्यातोदात्तनायकश्चैव /
षड्रसलक्षणयुक्तश्चतुरङ्को वै डिमः कार्यः // ना. शा_१८.८४ //
शृङ्गारहास्यवर्जं शेषैः सर्वै रसैः समायुक्तः /
दीप्तरसकाव्ययोनिर्नानाभावोपसम्पन्नः // ना. शा_१८.८५ //
निर्घातोल्कापातैरुपरागेणेन्दुसूर्ययोर्युक्तः /
युद्धनियुद्धाधर्षणसंफेटकृतश्च कर्तव्यः // ना. शा_१८.८६ //
मायेन्द्रजालबहुलो बहुपुस्तोत्थानयोगयुक्तश्च /
देवभुजगेन्द्रराक्षसयक्षपिशाचावकीर्णश्च // ना. शा_१८.८७ //
षोडशनायकबहुलः सात्वत्त्यारभटीवृत्तिसम्पन्नः /
कार्यो डिमः प्रयत्नान्नानाश्रयभावसम्पन्नः // ना. शा_१८.८८ //
डिमलक्षणमित्युक्तं मया समासेन लक्षणानुगतम् /
व्यायोगस्य तु लक्षणमतः परं संप्रवक्ष्यामि // ना. शा_१८.८९ //
व्यायोगस्तु विधिज्ञैः कार्यः प्रख्यातनायकशरीरः /
अल्पस्त्रीजनयुक्तस्त्वेकाहकृतस्तथा चैव // ना. शा_१८.९० //
बहवश्च तत्र पुरुषा व्यायच्चन्ते यथा समवकारे /
न च दिव्यनायकयुक्तः कार्यस्त्वेकाङ्क एवायम् // ना. शा_१८.९१ //
न च दिव्यनायककृतः कार्यो राजर्षिनायकनिबद्धः /
युद्धनियुद्धाघर्षणसंघर्षकृतश्च कर्तव्यः // ना. शा_१८.९२ //
एवंविधस्तु कार्यो व्यायोगो दीप्तकाव्यरसयोनिः /
वक्ष्याम्यतः परमहं लक्षणमुत्सृष्टाङ्कस्य // ना. शा_१८.९३ //
प्रख्यातवस्तुविषयस्त्वप्रख्यातः कदाचिदेव स्यात् /
दिव्यपुरुषैर्वियुक्तः शेषैर्युक्तो भवेत्पुंभिः // ना. शा_१८.९४ //

करुणरसप्रायकृतो निवृत्तयुद्धोद्यतप्रहारश्च /
स्त्रीपरिदेवितबहुलो निर्वेदितभाषितश्चैव // ना. शा_१८.९५ //
नानाव्याकुलचेष्टः सात्वत्त्यारभटिकैशिकीहीनः /
कार्यः काव्यविधिज्ञैः सततं ह्युत्सृष्टिकाङ्कस्तु // ना. शा_१८.९६ //
यद्दिव्यनायककृतं काव्यं संग्रामबन्धवधयुक्तम् /
तद्भारते तु वर्षे कर्तव्यं काव्यबन्धेषु // ना. शा_१८.९७ //
कस्माद्भारतमिष्टं वर्षेष्वन्येषु देवविहितेषु /
हृद्या सर्वा भूमिः शुभगन्धा काञ्चनी यस्मात् // ना. शा_१८.९८ //
उपवनगमनक्रीडा विहारनारीरतिप्रमोदाः स्युः /
तेषु हि वर्षेषु सदा न तत्र दुःखं न वा शोकः // ना. शा_१८.९९ //
ये तेषामधिवासाः पुराणवादेषु पर्वताः प्रोक्ताः /
सम्भोगस्तेषु भवेत्कर्मारम्भो भवेदस्मिन् // ना. शा_१८.१०० //
प्रहसनमपि विज्ञेयं द्विविधं शुद्धं तथा सङ्कीर्णम् /
अङ्कस्य लक्षणमिदं व्याख्यातमशेषयोगमात्रगतम् // ना. शा_१८.१०१ //
प्रहसनमतः परं सलक्षणं संप्रवक्ष्यामि /
वक्ष्यामि तयोर्युक्त्या पृथग्पृथग्लक्षणविशेषम् // ना. शा_१८.१०२ //
भगवत्तापसविप्रैरन्यैरपि हास्यवादसम्बद्धम् /
कापुरुषसंप्रयुक्तं परिहासाभाषणप्रायम् // ना. शा_१८.१०३ //
अविकृतभाषाचारं विशेषभावोपपन्नचरितपदम् /
नियतगतिवस्तुविषयं शुद्धं ज्ञेयं प्रहसनं तु // ना. शा_१८.१०४ //
वेश्याचेटनपुंसकविटधूर्ता बन्धकी च यत्र स्युः /
अनिभृतवेषपरिच्चदचेष्टितकरणैस्तु संकीर्णम् // ना. शा_१८.१०५ //
लोकोपचारयुक्ता या वार्ता यश्च दम्भसंयोगः /
स प्रहसने प्रयोज्यो धूर्तप्रविवादसम्पन्नः // ना. शा_१८.१०६ //
वीथ्यङ्गैः संयुक्तं कर्तव्यं प्रहसनं यथायोग्यम् /
भाणस्यापि तु लक्षणमतः परं संप्रवक्ष्यामि // ना. शा_१८.१०७ //
आत्मानुभूतशंसी परसंश्रयवर्णनाविशेषस्तु /
विविधाश्रयो हि भाणो विज्ञेयस्त्वेकहार्यश्च // ना. शा_१८.१०८ //
परवचनमात्मसंस्थं प्रतिवचनैरुत्तमोत्तमग्रथितैः /
आकाशपुरुषकथितैरङ्गविकारैरभिनयैश्चैव // ना. शा_१८.१०९ //
धूर्तविटसंप्रयोज्यो नानावस्थान्तरात्मकश्चैव /
एकाङ्को बहुचेष्टः सततं कार्यो बुधैर्भाणः // ना. शा_१८.११० //
भाणस्यापि हि निखिलं लक्षणमुक्तं तथागमानुगतम् /
वीथ्याः संप्रति निखिलं कथयामि यथाक्रमं विप्राः // ना. शा_१८.१११ //
सर्वरसलक्षणाढ्या युक्ता ह्यङ्गैस्त्रयोदशभिः /
वीथी स्यादेकाङ्का तथैकहार्या द्विहार्या वा // ना. शा_१८.११२ //
अधमोत्तममध्याभिर्युक्ता स्यात्प्रकृतिभिस्तिसृभिः /
उद्धात्यकावलगितावस्पन्दितनाल्यसत्प्रलापाश्च // ना. शा_१८.११३ //
वाक्केल्यथ प्रपञ्चो मृदवाधिबले चलं त्रिगतम् /

व्याहारो गण्डश्च त्रयोदशाङ्गान्युदाहृतान्यस्याः // ना. शा_१८.११४ //
अथ वीथी संप्रोक्ता लक्षणमेषां प्रवक्ष्यामि /
पदानि त्वगतार्थानि ये नराः पुनरादरात् // ना. शा_१८.११५ //
योजयन्ति पदैरन्यैस्तदुद्धात्यकमुच्यते /
यत्रान्यस्मिन् समावेश्य कार्यमन्यत्प्रसाध्यते // ना. शा_१८.११६ //
तच्चावलगितं नाम विज्ञेयं नाट्ययोक्तृभिः /
आक्षिप्ते ऽर्थे तु कस्मि.ण्श्चिच्चुभाशुभसमुत्थिते // ना. शा_१८.११७ //
कौशलादुच्यते ऽन्यो ऽर्थस्तदवस्पन्दितं भवेत् /
हास्येनोपगतार्थप्रहेलिका नालिकेति विज्ञेया // ना. शा_१८.११८ //
मूर्खजनसन्निकर्षे हितमपि यत्र प्रभाषते विद्वान् /
न च गृह्यते ऽस्य वचनं विज्ञेयो ऽसत्प्रलापो ऽसौ // ना. शा_१८.११९ //
एकद्विप्रतिवचना वाक्केली स्यात्प्रयोगे ऽस्मिन् /
यदसद्भूतं वचनं संस्तवयुक्तं द्वयोः परस्परं यत्तु // ना. शा_१८.१२० //
एकस्य चार्थहेतोः स हास्यजननः प्रपञ्चः स्यात् /
यत्कारणाद् गुणानां दोषीकरणं भवेद्विवादकृतम् // ना. शा_१८.१२१ //
दोषगुणीकरणं वा तन्मृदवं नाम विज्ञेयम् /
परवचनमात्मनश्चोत्तरोत्तरसमुद्भवं द्वयोर्यत्र // ना. शा_१८.१२२ //
अन्योन्यार्थविशेषकमधिबलमिति तद् बुधैर्ज्ञेयम् /
अन्यार्थमेव वाक्यं चलमभिसन्धानहास्यरोषकरम् // ना. शा_१८.१२३ //
श्रुतिसारूप्याद्यस्मिन् बहवो ऽर्था युक्तिभिर्नियुज्यन्ते /
यद्धास्यमहास्यं वा तत्त्रिगतं नाम विज्ञेयम् // ना. शा_१८.१२४ //
प्रत्यक्षवृत्तिरुक्तो व्याहारो हास्यलेशार्थः /
संरम्भसंभ्रमयुतं विवादयुक्तं तथापवादकृतम् // ना. शा_१८.१२५ //
बहुवचनाक्षेपकृतं गण्डं प्रवदन्ति तत्त्वज्ञाः ।
इति दशरूपविधानं सर्वं प्रोक्तं मया हि लक्षणतः /
पुनरस्य शरीरगतं सन्धिविधौ लक्षणं वक्ष्ये // ना. शा_१८.१२६ //

इति भरतीये नाट्यशास्त्रे दशरूपनिरूपणं नामाष्टादशो ऽध्यायः

---

अथ एकोनविंशो ऽध्यायः

इतिवृत्तं तु नाट्यस्य शरीरं परिकीर्तितम् /
पञ्चभिः सन्धिभिस्तस्य विभागः सम्प्रकल्पितः // ना. शा_१९.१ //
इतिवृत्तं द्विधा चैव बुधस्तु परिकल्पयेत् /
आधिकरिकमेकं स्यात् प्रासङ्गिकमथापरम् // ना. शा_१९.२ //
यत्कार्यं हि फलप्राप्त्या सामर्थ्यात्परिकल्प्यते /
तदाधिकारिकं ज्ञेयमन्यत्प्रासङ्गिकं विदुः // ना. शा_१९.३ //
कारणात्फलयोग्यस्य वृत्तं स्यादाधिकारिकम् /

तस्योपकरणार्थं तु कीर्त्यते ह्यानुषङ्गिकम् // ना. शा_१९.४ //
कवेः प्रयत्नान्नेत्?णां युक्तानां विद्ध्युपाश्रयात् /
कल्प्यते हि फलप्राप्तिः समुत्कर्षात्फलस्य च // ना. शा_१९.५ //
(लौकिकी सुखदुःखाख्या यथावस्था रसोद्भवा /
दशधा मन्मथावस्था व्यवस्थास्त्रिविधा मता) // ना. शा_१९.६ //
संसारे फलयागे तु व्यापारः कारणस्य यः /
तस्यानुपूर्व्या विज्ञेया पञ्चावस्था प्रयोक्तृभिः // ना. शा_१९.७ //
प्रारम्भश्च प्रयत्नश्च तथा प्राप्तेश्च संभवः /
नियता च फलप्राप्तिः फलयोगश्च पञ्चमः // ना. शा_१९.८ //
औत्सुक्यमात्रबन्धस्तु यद्बीजस्य निबध्यते /
महतः फलयोगस्य स फलारम्भ इष्यते // ना. शा_१९.९ //
अपश्यतः फलप्राप्तिं व्यापारो यः फलं प्रति /
परं चौत्सुक्यगमनं स प्रयत्नः प्रकीर्तितः // ना. शा_१९.१० //
ईषत्प्राप्तिर्यदा काचित्फलस्य परिकल्पते /
भावमात्रेण तु प्राहुर्विधिज्ञाः प्राप्तिसम्भवम् // ना. शा_१९.११ //
नियतां तु फलप्राप्तिं यदा भावेन पश्यति /
नियतां तां फलप्राप्तिं सगुणां परिचक्षते // ना. शा_१९.१२ //
अभिप्रेतं समग्रं च प्रतिरूपं क्रियाफलम् /
इतिवृत्ते भवेद्यस्मिन् फलयोगः प्रकीर्तितः // ना. शा_१९.१३ //
सर्वस्यैव हि कार्यस्य प्रारब्धस्य फलार्थिभिः /
एतास्त्वनुक्रमेणैव पञ्चावस्था भवन्ति हि // ना. शा_१९.१४ //
आसां स्वभावभिन्नानां परस्परसमागमात् /
विन्यास एकभावेन फलहेतुः प्रकीर्तितः // ना. शा_१९.१५ //
इतिवृत्तं समाख्यातं प्रत्यगेवाधिकारिकम् /
तदारम्भादि कर्तव्यं फलान्तं च यथा भवेत् // ना. शा_१९.१६ //
पूर्णसन्धि च कर्तव्यं हीनसन्ध्यपि वा पुनः /
नियमात् पूर्णसन्धि स्याद्धीनसन्ध्यथ कारणात् // ना. शा_१९.१७ //
एकलोपे चतुर्थस्य द्विलोपे त्रिचतुर्थयोः /
द्वितीयत्रिचतुर्थानां त्रिलोपे लोप इष्यते // ना. शा_१९.१८ //
प्रासङ्गिके परार्थत्वान्न ह्येष नियमो भवेत् /
यद्वृत्तं सम्भवेत्तत्र तद्योज्यमविरोधतः // ना. शा_१९.१९ //
इतिवृत्ते यथावस्थाः पञ्चारम्भादिकाः स्मृताः /
अर्थप्रकृतयः पञ्च तथा बीजादिका अपि // ना. शा_१९.२० //
बीजं बिन्दुः पताका च प्रकरी कार्यमेव च /
अर्थप्रकृतयः पञ्च ज्ञात्वा योज्या यथाविधि // ना. शा_१९.२१ //
स्वल्पमात्रं समुत्सृष्टं बहुधा यद्विसर्पति /
फलावसानं यच्चैव बीजं तत्परिकीर्तितम् // ना. शा_१९.२२ //
प्रयोजनानां विच्चेदे यदविच्चेदकारणम् /
यावत्समाप्तिर्बन्धस्य स बिन्दुः परिकीर्तितः // ना. शा_१९.२३ //

यद्वृत्तं तु परार्थं स्यात् प्रधानस्योपकारकम्
प्रधानवच्च कल्प्येत सा पताकेति कीर्तिता // ना. शा_१९.२४ //
फलं प्रकल्प्यते यस्याः परार्थायैव केवलम् /
अनुबन्धविहीनत्वात् प्रकरीति विनिर्दिशेत् // ना. शा_१९.२५ //
यदाधिकारिकं वस्तु सम्यक् प्राज्ञैः प्रयुज्यते /
तदर्थो यः समारम्भस्तत्कार्यं परिकीर्तितम् // ना. शा_१९.२६ //
एतेषां यस्य येनार्थो यतश्च गुण इष्यते /
तत् प्रधानं तु कर्तव्यं गुणभूतान्यतः परम् // ना. शा_१९.२७ //
एको ऽनेको ऽपि वा सन्धिः पताकायां तु यो भवेत् /
प्रधानार्थानुयायित्वादनुसन्धिः प्रकीर्त्यते // ना. शा_१९.२८ //
आगर्भादाविमर्शाद्वा पताका विनिवर्तते /
कस्माद्यस्मान्निबन्धो ऽस्याः परार्थः परिकीर्त्यते // ना. शा_१९.२९ //
यत्रार्थे चिन्तिते ऽन्यस्मिन्स्तल्लिन्ङ्गो ऽन्यः प्रयुज्यते /
आगन्तुकेन भावेन पताकास्थानकं तु तत् // ना. शा_१९.३० //
सहसैवार्थसम्पत्तिर्गुणवत्युपकारतः /
पताकास्थानकमिदं प्रथमं परिकीर्तितम् // ना. शा_१९.३१ //
वचः सातिशयं क्लिष्टं काव्यबन्धसमाश्रयम् /
पताकास्थानकमिदं द्वितीअयं परिकीर्तितम् // ना. शा_१९.३२ //
अर्थोपक्षेपणं यत्र लीनं सविनयं भवेत् /
श्लिष्टप्रत्युत्तरोपेतं तृतीयमिदमिष्यते // ना. शा_१९.३३ //
द्व्यर्थो वचनविन्यासः सुश्लिष्टः काव्ययोजितः /
उपन्याससुयुक्तश्च तच्चतुर्थमुदाहृतम् // ना. शा_१९.३४ //
[यत्र सातिशयं वाक्यमर्थोपक्षेपणं भवेत् /
विनाशिदृष्टमन्ते च पताकार्धं तु तद्भवेत् ] // ना. शा_१९.३५ //
चतुष्पताकापरमं नाटके कार्यमिष्यते /
पञ्चभिः सन्धिभिर्युक्तं तांश्च वक्ष्याम्यतः परम् // ना. शा_१९.३६ //
मुखं प्रतिमुखं चैव गर्भो विमर्श एव च /
तथा निर्वहणं चेति नाटके पञ्च सन्धयः // ना. शा_१९.३७ //
[पञ्चभिः सन्धिभिर्युक्तं प्रधानमनु कीर्त्यते /
शेषाः प्रधानसन्धीनामनुग्राह्यनुसन्धयः] // ना. शा_१९.३८ //
यत्र बीजसमुत्पत्तिर्नानार्थरससम्भवा /
काव्ये शरीरानुगता तन्मुखं परिकीर्तितम् // ना. शा_१९.३९ //
बीजस्योद्घाटनं यत्र दृष्टनष्टमिव क्वचित् /
मुखन्यस्तस्य सर्वत्र तद्वै प्रतिमुखं स्मृतम् // ना. शा_१९.४० //
उद्भेदस्तस्य बीजस्य प्राप्तिरप्राप्तिरेव वा /
पुनश्चान्वेषणं यत्र स गर्भ इति संज्ञितः // ना. शा_१९.४१ //
गर्भनिर्भिन्नबीजार्थो विलोभनकृतो ऽथवा /
क्रोधव्यसनजो वापि स विमर्श इति स्मृतः // ना. शा_१९.४२ //
समानयनमर्थानां मुखाद्यानां सबीजिनाम् /

नानाभावोत्तराणां यद्भवेन्निर्वहणं तु तत् // ना. शा_१९.४३ //
एते तु सन्धयो ज्ञेया नाटकस्य प्रयोक्तृभिः /
तथा प्रकरणास्यापि शेषाणां च निबोधत // ना. शा_१९.४४ //
डिमः समवकारश्च चतुःसन्धी प्रकीर्तितौ /
न तयोरवमर्शस्तु कर्तव्यः कविभिः सदा // ना. शा_१९.४५ //
व्यायोगेहामृगौ चापि सदा कार्यौ त्रिसन्धिकौ /
गर्भावमर्शौ न स्यातां तयोर्वृत्तिश्च कैशिकी // ना. शा_१९.४६ //
द्विसन्धि तु प्रहसनं वीथ्यङ्को भाण एव च /
मुखनिर्वहने तत्र कर्तव्ये कविभिः सदा // ना. शा_१९.४७ //
[वीथी चैव हि भाणश्च तथा प्रहसनं पुनः /
कैशिकीवृत्तिहीनानि कार्याणि कविभिः सदा ] // ना. शा_१९.४८ //
एवं हि सन्धयः कार्या दशरूपे प्रयोकृभिः /
पुनरेषां तु सन्धीनामङ्गकल्पं निबोधदत // ना. शा_१९.४९ //
सन्धिनां यानि वृत्तानि प्रदेशेष्वनुपूर्वशः /
स्वसम्पद्गुणयुक्तानि तान्यङ्गान्युपधारयेत् // ना. शा_१९.५० //
इष्टस्यार्थस्य रचना वृत्तान्तस्यानुपक्षयः /
रागप्राप्तिः प्रयोगस्य गुह्यानां चैव गूहनम् // ना. शा_१९.५१ //
आश्चर्यवदभिख्यानं प्रकाश्यानां प्रकाशनम् /
अङ्गानां षड्विधं ह्येतद् द्?ष्टं शास्त्रे प्रयोजनम् // ना. शा_१९.५२ //
अङ्गहीनो नरो यद्वन्नैवारम्भक्षमो भवेत् /
अङ्गहीनं तथा काव्यं न प्रयोगक्षमं भवेत् // ना. शा_१९.५३ //
उदात्तमपि तत्काव्यं स्यादङ्गैः परिवर्जितम् /
हीनत्वाद्धि प्रयोगस्य न सतां रञ्जयेन्मनः // ना. शा_१९.५४ //
काव्यं यदपि हीनार्थं सम्यदङ्गैः समन्वितम् /
दीप्तत्वात्तु प्रयोगस्य शोभामेति न संशयः // ना. शा_१९.५५ //
[तस्मात् सन्धिप्रदेशेषु यथायोगं यथारसम् /
कविनाङ्गानि कार्याणि सम्यक्तानि निबोधत] // ना. शा_१९.५६ //
उपक्षेपः परिकरः परिन्यासो विलोभनम् /
युक्तिः प्राप्तिः समाधानं विधानं परिभावना // ना. शा_१९.५७ //
उद्भेदः करणं भेद एतान्यङ्गानि वै मुखे /
तथा प्रतिमुखे चैव शृणुताङ्गानि नामतः // ना. शा_१९.५८ //
विलासः परिसर्पश्च विधूतं तापनं तथा /
नर्म नर्मद्युतिश्चैव तथा प्रगयणं पुनः // ना. शा_१९.५९ //
निरोधश्चैव विज्ञेयः पर्युपासनमेव च /
पुष्पं वज्रमुपन्यासो वर्णसंहार एव च // ना. शा_१९.६० //
एतानि वै प्रतिमुखे गर्भे ऽङ्गानि निबोधत /
अभूताहरणं मार्गो रूपोदाहरणे क्रमः // ना. शा_१९.६१ //
संग्रहश्चानुमानं च प्रार्थनाक्षिप्तमेव च /
तोटकाधिबले चैव ह्युद्वेगो विद्रवस्तथा // ना. शा_१९.६२ //

एतान्यङ्गानि वै गर्भे ह्यवमर्शे निबोधत /
अपवादश्च संफेटो विद्रवः शक्तिरेव च // ना. शा_१९.६३ //
व्यवसायः प्रसङ्गश्च द्युतिः खेदो निषेधनम् /
विरोधनमथादानं चादनं च प्ररोचना // ना. शा_१९.६४ //
व्यवहारश्च युक्तिश्च विमर्शाङ्गान्यमूनि च /
सन्धिर्निरोधो ग्रथनं निर्णयः परिभाषणम् // ना. शा_१९.६५ //
द्युतिः प्रसाद आनन्दः समयो ह्युपगूहनम् /
भाषणं पूर्ववाक्यं च काव्यसंहार एव च // ना. शा_१९.६६ //
प्रशस्तिरिति संहारे ज्ञेयान्यङ्गानि नामतः /
चतुष्षष्ठि बुधैर्ज्ञेयान्येतान्यङ्गानि सन्धिषु // ना. शा_१९.६७ //
[सम्पादनार्थं बीजस्य सम्यक्सिद्धिकराणि च /
कार्याण्येतानि कविभिर्विभज्यार्थानि नाटके ] // ना. शा_१९.६८ //
पुनरेषां प्रवक्ष्यामि लक्षणानि यथाक्रमम् /
काव्यार्थस्य समुत्पत्तिरुपक्षेप इति स्मृतः // ना. शा_१९.६९ //
यदुत्पन्नार्थबाहुल्यं ज्ञेयः परिकरस्तु सः /
तन्निष्पत्तिः परिन्यासो विज्ञेयः कविभिः सदा // ना. शा_१९.७० //
गुणनिर्वर्णनं चैव विलोभनमिति स्मृतम् /
सम्प्रधारणमर्थानां युक्तिरित्यभिधीयते // ना. शा_१९.७१ //
सुखार्थस्याभिगमनं प्राप्तिरित्यभिसंज्ञिता /
बीजार्थस्योपगमनं समाधानमिति स्मृतम् // ना. शा_१९.७२ //
सुखदुःखकृतो यो ऽर्थस्तद्विधानमिति स्मृतम् /
कुतूहलोत्तरावेगो विज्ञेया परिभावना // ना. शा_१९.७३ //
बीजार्थस्य प्ररोहो यः स उद्भेद इति स्मृतः /
प्रकृतार्थसमारम्भः करणं नाम तद्भवेत् // ना. शा_१९.७४ //
संघातभेदनार्थो यः स भेद इति कीर्तितः /
[एतानि तु मुखाङ्गानि वक्ष्ये प्रतिमुखे पुनः] // ना. शा_१९.७५ //
समीहा रतिभोगार्था विलास इति संज्ञितः /
दृष्टनष्टानुसरणं परिसर्प इति स्मृतः // ना. शा_१९.७६ //
कृतस्यानुनयस्यादौ विधूतं ह्यपरिग्रहः /
अपायदर्शनं यत्तु तापनं नाम तद्भवीत् // ना. शा_१९.७७ //
क्रीडार्थं विहितं यत्तु हास्यं नर्मेति तत्स्मृतम्
दोषप्रच्चादनार्थं तु हास्यं नर्मद्युतिः स्मृता // ना. शा_१९.७८ //
उत्तरोत्तरवाक्यं तु भवेत्प्रगयणं पुनः /
या तु व्यसनसंप्राप्तिः स निरोधः प्रकीर्तितः // ना. शा_१९.७९ //
क्रुद्धस्यनुनयो यस्तु भवेत्तत्पर्युपासनम् /
विशेषवचनं यत्तु तत्पुष्पमिति संज्ञितम् // ना. शा_१९.८० //
प्रत्यक्षरूक्षं यद्वाक्यं वज्रं तदभिधीयते /
उपपत्तिकृतो यो ऽर्थ उपन्यासश्च स स्मृतः // ना. शा_१९.८१ //
चातुर्वर्ण्योपगमनं वर्णसंहार इष्यते /

कपटापाश्रयं वाक्यमभूताहरणं विदुः // ना. शा_१९.८२ //
तत्त्वार्थवचनं चैव मार्ग इत्यभिधीयते /
चित्रार्थसमवाये तु वितर्को रूपमिष्यते /
यत्सातिशयवद्वाक्यं तदुदाहरणं स्मृतम् // ना. शा_१९.८३ //
भावतत्त्वोपलब्धिस्तु क्रम इत्यभिधीयते /
सामदानादिसंपन्नः संग्रहः परिकीर्तितः // ना. शा_१९.८४ //

रूपानुरूपगमनमनुमानमिति स्मृतम्

रतिहर्षोत्सवानां तु प्रार्थना प्रार्थना भवेत् /
गर्भस्योद्भेदनं यत्साक्षिसिरित्यभिधीयते // ना. शा_१९.८६ //
संरम्भवचनं चैव तोटकं त्विति संज्ञितम् /
कपटेनातिसंधानं ब्रुवते ऽधिबलं बुधाः // ना. शा_१९.८७ //
भयं नृपारिदस्यूत्थमुद्वेगः परिकीर्तितः /
शङ्का भयत्रासकृतो विद्रयः समुदाहृतः // ना. शा_१९.८८ //
दोषप्रख्यापनं यत्तु सो ऽपवाद इति स्मृतः /
रोषग्रथितवाक्यं तु संफेटः परिकीर्तितः // ना. शा_१९.८९ //
गुरुव्यतिक्रमो यस्तु स द्रवः परिकीर्तितः /
विरोधिप्रशमो यश्च स शक्तिः परिकीर्तिता // ना. शा_१९.९० //
व्यवसायश्च विज्ञेयः प्रतिज्ञाहेतुसंभवः /
प्रसङ्गश्चैव विज्ञेयो गुरूणा परिकीर्तनम् // ना. शा_१९.९१ //
वाक्यमाधर्षसंयुक्तं द्युतिस्तज्ज्ञैरुदाहृता /
मनश्चेष्टाविनिष्पन्नः श्रमः खेद उदाहृतः // ना. शा_१९.९२ //
ईप्सितार्थप्रतीघातः प्रतिषेधः प्रकीर्तितः /
कार्यात्ययोपगमनं विरोधनमिति स्मृतम् // ना. शा_१९.९३ //
बीजकार्योपगमनमातानमिति संज्ञितम् /
अपमानकृतं वाक्यं कार्यार्थं च्चादनं भवेत् // ना. शा_१९.९४ //
प्ररोचना स विज्ञेया संहारार्थप्रदर्शिनी /
[प्रत्यक्षवचनं यत्तु स व्याहार इति स्मृतः // ना. शा_१९.९५ //
सविच्चेदं वचो यत्र सा युक्तिरिति संज्ञिता /
ज्ञेया विचलना तज्ज्ञैरवमानार्थसंयुत] // ना. शा_१९.९६ //
[एतान्यवमृशे ऽङ्गानि संहारे तु निबोधत] /
मुखबीजोपगमनं सन्धिरित्यभिधीयते // ना. शा_१९.९७ //
कार्यस्यान्वेषणं युक्त्या निरोध इति कीर्तितः /
उपक्षेपस्तु कार्याणां ग्रथनं परिकीर्तितम् // ना. शा_१९.९८ //
अनुभूतार्थकथनं निर्णयः समुदाहृतः /
परिवादकृतं यस्यात्तदाहुः परिभाषणम् // ना. शा_१९.९९ //
लब्धस्यार्थस्य शमनं द्युतिमाचक्षते पुनः /
समागमस्तथार्थानामानन्दः परिकीर्तितः // ना. शा_१९.१०० //
दुःखस्यापगमो यस्तु समयः स निगद्यते /

शुश्रूषाद्युपसंपन्नः प्रसादः प्रीतिरुच्यते // ना. शा_१९.१०१ //
अद्भुतस्य तु संप्राप्तिरूपगूहनमिष्यते /
सामदानादि संपन्नं भाषणं समुदाहृतम् // ना. शा_१९.१०२ //
पूर्ववाक्यं तु विज्ञेयं यथोक्तार्थप्रदर्शनम् /
वरप्रदानसंप्राप्तिः काव्यसंहार इष्यते // ना. शा_१९.१०३ //
नृपदेशप्रशान्तिश्च प्रशस्तिरभिधीयते /
यथासन्धि तु कर्तव्यान्येतान्यङ्गानि नाटके // ना. शा_१९.१०४ //
कविभिः काव्यकुशलै रसभावमपेक्ष्य तु /
संमिश्राणि कदाचित्तु द्वित्रियोगेन वा पुनः // ना. शा_१९.१०५ //
ज्ञात्वा कार्यमवस्थां च कार्याण्यङ्गानि सन्धिषु /
एतेषामेव चाङ्गानां संबद्धान्यर्थयुक्तितः // ना. शा_१९.१०६ //
सन्ध्यन्तराणि सन्धीनां विशेषास्त्वेकविंशतिः /
सामभेदस्तथा दण्डः प्रदानं वध एव च // ना. शा_१९.१०७ //
प्रत्युत्पन्नमतित्वं च गोत्रस्खलितमेव च /
साहसं च भयं चैव ह्रीर्माया क्रोध एव च // ना. शा_१९.१०८ //
ओजः संवरणं भ्रान्तिस्तथा हेत्वपधारणम् /
दूतो लेखस्तथा स्वप्नश्चित्रं मद इति स्मृतम् // ना. शा_१९.१०९ //
[विष्कम्भचूलिका चैव तथ चैव प्रवेशकः /
अङ्कावतारो ऽङ्कमुखमर्थोपक्षेपपञ्चकम् // ना. शा_१९.११० //
मध्यमपुरुषनियोज्यो नाटकमुखसन्धिमात्रसंचारः /
विष्कम्भकस्तु कार्यः पुरोहितामात्यकञ्चुकिभिः // ना. शा_१९.१११ //
शुद्धः संकीर्णो वा द्विविधो विष्कंभकस्तु विज्ञेयः /
मध्यमपात्रैः शुद्धः संकीर्णो नीचमध्यकृतः // ना. शा_१९.११२ //
अन्तर्यवनिकासंस्थैः सूतादिभिरनेकधा /
अर्थोपक्षेपणं यत्तु क्रियते सा हि चूलिका // ना. शा_१९.११३ //
अङ्कान्तरानुसारी संक्षेपार्थमधिकृत्य बिन्दूनाम् /
प्रकरणनाटकविषये प्रवेशको नाम विज्ञेयः // ना. शा_१९.११४ //
अङ्कान्त एव चाङ्को निपतति यस्मिन् प्रयोगमासाद्य /
बीजार्थयुक्तियुक्तो ज्ञेयो ह्यङ्कावतारो ऽसौ // ना. शा_१९.११५ //
विष्लिष्टमुखमङ्कस्य स्त्रिया वा पुरुषेण वा /
यदुपक्षिप्यते पूर्वं तदङ्कमुखमुच्यते] // ना. शा_१९.११६ //
अन्यान्यपि लास्यविधावङ्गानि तु नाटकोपयोगीनि /
अस्माद्विनिःसृतानि तु भाण इवैअकप्रयोज्यानि // ना. शा_१९.११७ //
[भाणाकृतिवल्लास्यं विज्ञेयं त्वेकपात्रहार्यं वा /
प्रकरणवदूह्य कार्यासंस्तवयुक्तं विविधभावम्] // ना. शा_१९.११८ //
गेयपदं स्थितपाठ्यमासीनं पुष्पगण्डिका /
प्रच्चेदकं त्रिमूढं च सैन्धवाख्यं द्विमूढकम् // ना. शा_१९.११९ //
उत्तमोत्तमकं चैवमुक्तप्रत्युक्तमेव च /
लास्ये दशविधं ह्येतदङ्गनिर्देशलक्षणम् // ना. शा_१९.१२० //

आसनेषूपविष्टैर्यत्तन्त्रीभाण्डोपबृंहितम् /
गायनेऐर्गीयते शुष्कं तद्गेयपदमुच्यते // ना. शा_१९.१२१ //
[या नृत्यत्यासना नारी गेयं प्रियगुणान्वितम् /
साङ्गोपाङ्गविधानेन तद्गेयपदमुच्यते] // ना. शा_१९.१२२ //
प्राकृतं यद्वियुक्ता तु पठेदात्तरसं स्थिता /
मदनानलतप्ताङ्गी स्थितपाठ्यं तदुच्यते // ना. शा_१९.१२३ //
[बहुचारीसमायुक्तं पञ्चपाणिकलानुगम् /
चञ्चत्पुटेन वा युक्तं स्थितपाठ्यं विधीयते] // ना. शा_१९.१२४ //
आसीनमास्यते यत्र सर्वातोद्यविवर्जितम् /
अप्रसारितगात्रं च चिन्ताशोकसमन्वितम् // ना. शा_१९.१२५ //
नृत्तानि विविधानि स्युर्गेयं गाने च संश्रितन् /
चेष्टाभिश्चाश्रयः पुंसा यत्र सा पुष्पगण्डिका // ना. शा_१९.१२६ //
[यत्र स्त्री नरवेषेण ललितं संस्कृतं पठेत् /
सखीनां तु विनोदाय सा ज्ञेया पुष्पगण्डिका // ना. शा_१९.१२७ //
नृत्तं तु विविधं यत्र गीतं चातोद्यसंयुतम् /
स्त्रियः पुंवच्च चेष्टन्ते सा ज्ञेया पुष्पगण्डिका] // ना. शा_१९.१२८ //
प्रच्चेदकः स विज्ञेयो यत्र चन्द्रातपाहताः /
स्त्रियः प्रियेषु सज्जन्ते ह्यपि विप्रियकारिषु // ना. शा_१९.१२९ //
अनिष्ठुरश्लक्ष्णपदं समवृत्तैरलङ्कृतम् /
नाट्यं पुरुषभावाढ्यं त्रिमूढकमिति स्मृतम् // ना. शा_१९.१३० //
पात्रं विभ्रष्टसंकेतं सुव्यक्तकरणान्वितम् /
प्राकृतैर्वचनैर्युक्तं विदुः सैन्धवकं बुधाः // ना. शा_१९.१३१ //
[रूपवाद्यादिसंयुक्तं पाठ्येन च विवर्जितम् /
नाट्यं हि तत्तु विज्ञेयं सैन्धवं नाट्यकोविदैः] // ना. शा_१९.१३२ //
मुखप्रतिमुखोपेतं चतुरश्रपदक्रमम् /
श्लिष्टभावरसोपेतं वैचित्र्यार्थं द्विमूढके // ना. शा_१९.१३३ //
उत्तमोत्तमकं विद्यादनेकरससंश्रयम् /
विचित्रैः लोकबन्धैश्च हेलाहावविचित्रितम् // ना. शा_१९.१३४ //
कोपप्रसादजनितं साधिक्षेपपदाश्रयम् /
उक्तप्रत्युक्तमेवं स्याच्चित्रगीतार्थयोजितम् // ना. शा_१९.१३५ //
यत्र प्रियाकृतिं दृष्ट्वा विनोदयति मानसम् /
मदनानलतप्ताङ्गी तच्चित्रपदमुच्यते // ना. शा_१९.१३६ //
दृष्ट्वा स्वप्ने प्रियं यत्र मदनानलतापिता /
करोतिविविधान् भावांस्तद्वै भाविकमुच्यते // ना. शा_१९.१३७ //
एतेषां लास्यविधौ विज्ञेयं लक्षणं प्रयोगज्ञैः /
तदिहैव तु यन्नौक्तं प्रसङ्गविनिवृत्तहेतोस्तु // ना. शा_१९.१३८ //
पञ्चसन्धि चतुर्वृत्ति चतुःषष्ट्यङ्गसंयुतम् /
षट्त्रिंशल्लक्षणोपेतं गुणालङ्कारभूषितम् // ना. शा_१९.१३९ //
महारसं महाभोगमुदात्तवचनान्वितम् /

महापुरुषसंचारं साध्वाचारजनप्रियम् // ना. शा_१९.१४० //
सुश्लिष्टसन्धिसंयोगं सुप्रयोगं सुखाश्रयम् /
मृदुशब्दाभिधानं च कविः कुर्यात्तु नाटकम् // ना. शा_१९.१४१ //
अवस्था या तु लोकस्य सुखदुःखसमुद्भवा /
नानापुरुषसंचारा नाटके ऽसौ विधीयते // ना. शा_१९.१४२ //
न तज्ज्ञानं न तच्चिल्पं न सा विद्या न सा कला /
न तत् कर्म न वा योगो नाट्ये ऽस्मिन्न्यन्न दृश्यते // ना. शा_१९.१४३ //
यो ऽयं स्वभावो लोकस्य नानावस्थान्तरात्मकः /
सो ऽङ्गाद्यभिनयैर्युक्तो नाट्यमित्यभिधीयते // ना. शा_१९.१४४ //
देवतानामृषीनां च राज्ञां चोत्कृष्टमेधसाम् /
पूर्ववृत्तानुचरितं नाटकं नाम तद्भवेत्. // ना. शा_१९.१४५ //
यस्मात्स्वभावं संत्यज्य साङ्गोपाङ्गगतिक्रमैः /
प्रयुज्यते ज्ञायते च तस्माद्वै नाटकं स्मृतम्. // ना. शा_१९.१४६ //
सर्वभावैः सर्वरसैः सर्वकर्मप्रवृत्तिभिः /
नानावस्थान्तरोपेतं नाटकं संविधीयते // ना. शा_१९.१४७ //
[अनेकशिल्पजातानि नैककर्मक्रिअयाणि च /
तान्यशेषाणि रूपाणि कर्तव्यानि प्रयोक्तृभिः ] // ना. शा_१९.१४८ //
लोकस्वभावं संप्रेक्ष्य नराणां च बलाबलम् /
संभोगं चैव युक्तिं च ततः कार्यं तु नाटकम् // ना. शा_१९.१४९ //
भविष्यति युगे प्रायो भविष्यन्त्यबुधा नराः /
ये चापि हि भविष्यन्ति ते यत्नश्रुतबुद्धयः // ना. शा_१९.१५० //
कर्मशिल्पानि शास्त्राणि विचक्षणबलानि च /
सर्वाण्येतानि नश्यन्ति यदा लोकः प्रणश्यति // ना. शा_१९.१५१ //
तदेवं लोकभाषाणां प्रसमीक्ष्य बलाबलम् /
मृदुशब्दं सुखार्थं च कविः कुर्यात्तु नाटकम् // ना. शा_१९.१५२ //
चैक्रीडिताद्यैः शब्दैस्तु काव्यबन्धा भवन्ति ये /
वेश्या इव न ते भान्ति कमण्डलुधरैर्द्विजैः // ना. शा_१९.१५३ //
दशरूपविधानं च मया प्रोक्तं द्विजोत्तमाः /
अतः परं प्रवक्ष्यामि वृत्तीनामिह लक्षणम् // ना. शा_१९.१५४ //

इति भारतीये नाट्यशास्त्रे सन्धिनिरूपणं नामध्याय एकोनविंशः

---

अथ विंशो ऽध्यायः

समुत्थानं तु वृत्तीनां व्याख्याम्यनुपूर्वशः /
यथा वस्तूद्भवं चैव काव्यानां च विकल्पनम् // ना. शा_२०.१ //
एकार्णवं जगत् कृत्वा भगवानच्युतो यदा /
शेते स्म नागपर्यङ्के लोकान् संक्षिप्य मायया // ना. शा_२०.२ //

अथ वीर्यबलोन्मतावसुरौ मधुकैअटभौ /
तर्जयामासतुर्देवं तरसा युद्धकाङ्क्षया // ना. शा_२०.३ //
निजबाहू विमृदनन्तौ भूतभावनमक्षयम् /
जानुभिर्मुष्टिभिश्चैव योधयामासतुः प्रभुम् // ना. शा_२०.४ //
बहुभिः परुषैर्वाक्यैरन्योन्यसमभिद्रवम् /
नानाधिक्षेपवचनैः कम्पयन्ताविवोदधिम् // ना. शा_२०.५ //
तयोर्नानाप्रकाराणि वचांसि वदतोस्तदा /
श्रुत्वा त्वभिहतमना द्रुहिणो वाक्यमब्रवीत् // ना. शा_२०.६ //
किमिदं भरतीवृत्तिर्वाग्भिरेव प्रवर्तते /
उत्तरोत्तरसंबद्धा नन्विमौ निधनं नयः // ना. शा_२०.७ //
पितामहवचः श्रुत्वा प्रोवाच मधुसूदनः /
कार्यहेतोर्मया ब्रह्मन् भारतीयं विनिर्मिता // ना. शा_२०.८ //
वदतां वाक्यभूयिष्ठा भारतीयं भविष्यति /
तस्मादेतौ निहन्म्यद्येत्युवाच वचनं हरिः // ना. शा_२०.९ //
शुद्धैरविकृतैरङ्गैः साङ्गहारैस्तथा भृशम् /
योधयामासतुर्दैत्यौ युद्धमार्गविशारदौ // ना. शा_२०.१० //
भूमिसंयोगसंस्थानैः पदन्यासैर्हरेस्तदा /
अतिभारो ऽभवद् भूमेर्भारती तत्र निर्मिता // ना. शा_२०.११ //
वल्गितैः शार्ङ्गधनुषस्तीव्रैर्दीप्ततथैरथ /
सत्वाधिकैरसंभ्रान्तैः सात्त्वती तत्र निर्मिता // ना. शा_२०.१२ //
विचित्रैरङ्गहारैस्तु देवो लीलासमन्वितैः /
बबन्ध यच्चिखापाशं कैशिकी तत्र निर्मिता // ना. शा_२०.१३ //
संरम्भावेगबहुलैर्नानाचारी समुत्थितैः /
नियुद्धकरणैश्चित्रैरुत्पन्नारभटी ततः // ना. शा_२०.१४ //
यां यां देवः समाचष्टे क्रियां वृत्तिषु संस्थिताम् /
तां तदर्थानुगैर्जप्येऐर्द्रुहिणः प्रत्यपूजयत् // ना. शा_२०.१५ //
यदा हतौ तावसुरौ हरिणा मधुकैटभौ /
ततो ऽब्रवीत् पद्मयोनिर्नारायणमरिन्दमम् // ना. शा_२०.१६ //
अहो विचित्रैर्विषमैः स्फुटैः सललितैरपि /
अङ्गहारैः कृतं देव त्वया दानवनाशनम् // ना. शा_२०.१७ //
तस्मादयं हि लोकस्य नियुद्धसमयक्रमः /
सर्वशस्त्रविमोक्षेषु न्यायसंज्ञो भविष्यति // ना. शा_२०.१८ //
न्यायाश्रितैरङ्गहारैर्न्यायाच्चैव समुत्थितैः /
यस्माद्युद्धानि वर्तन्ते तस्मान्यायाः प्रकीर्तिताः // ना. शा_२०.१९ //
[चारीषु च समुत्पन्नो नानाचारीसमाश्रयः /
न्यायसंज्ञः कृतो ह्येष द्रुहिणेन महात्मना // ना. शा_२०.२० //
ततो वेदेषु निक्षिप्ता द्रुहिणेन महात्मना /
पुनरिष्वस्त्रजाते च नानाचारीसमाकुले // ना. शा_२०.२१ //
पुनर्नाट्यप्रयोगेषु नानाभावसम्न्विताः /

वृत्तिसंज्ञाः कृता ह्येताः काव्यबन्धसमाश्रयाः] // ना. शा_२०.२२ //
चरितैर्यस्य देवस्य जप्यं यद्यादृशं कृतम् /
ऋषिभिस्तादृशी वृत्तिअः कृता पाठ्यादिसंयुता // ना. शा_२०.२३ //
नाट्यवेदसमुत्पना वागङ्गाभिनयात्मिका /
मया काव्यक्रिअयाहेतोः प्रक्षिप्ता द्रुहिणाज्ञया // ना. शा_२०.२४ //
ऋग्वेदाद्भारती क्षिप्ता यजुर्वेदाच्च सात्त्वती /
कैशिकी सामवेदाच्च शेषा चाथर्वणादपि // ना. शा_२०.२५ //
या वाक्प्रधाना पुरुषप्रयोज्या स्त्रीवर्जिता संकृतपाठ्ययुक्ता /
स्वनामधेयैर्भरतैः प्रयुक्ता सा भारती नाम भवेत्तु वृत्तिः // ना. शा_२०.२६ //
भेदास्तस्यास्तु विज्ञेयाश्चत्वारो ऽङ्गत्वमागताः /
प्ररोचनामुखं चैव वीथी प्रहसनं तथा // ना. शा_२०.२७ //
जयाभ्युदयिनी चैव मङ्गल्या विजयावहा /
सर्वपापप्रशमनी पूर्वरङ्गे प्ररोचना // ना. शा_२०.२८ //
[उपक्षेपेण काव्यस्य हेतुयुक्तिसमाश्रया /
सिद्धेनामन्त्रणा या तु विज्ञेया सा प्ररोचना] // ना. शा_२०.२९ //
नटी विदूषको वापि पारिपार्श्विक एव वा /
सूत्रधारेण सहिताः संलापं यत्तु कुर्वते // ना. शा_२०.३० //
चित्रैर्वाक्यैः स्वकार्यारोत्थैर्वीत्थ्यङ्गेरन्यथापि वा /
आमुखं तत्तु विज्ञेयं बुधैः प्रस्तावनापि वा // ना. शा_२०.३१ //
[लक्षणं पूर्वमुक्तं तु वीत्थ्याः प्रहसनस्य च /
आमुखाङ्गान्यतो वक्ष्ये यथावदनुपूर्वशः] // ना. शा_२०.३२ //
उद्घात्यकः कथोद्घातः प्रयोगातिशयस्तथा /
प्रवृत्तकावलगिते पञ्चाङ्गान्यामुखस्य तु // ना. शा_२०.३३ //
उद्घात्यकावलगितलक्षणं कथितं मया /
शेषाणां लक्षणं विप्रा व्याख्यास्याम्यानुपूर्वशः // ना. शा_२०.३४ //
सुत्रधारस्य वाक्यं वा यत्र वाक्यार्थमेव वा /
गृहीतां प्रविशेत्पात्रं कथोद्घातः स कीर्तितः // ना. शा_२०.३५ //
प्रयोगे तु प्रयोगं तु सूत्रधारः प्रयोजयेत् /
ततश्च प्रविशेत्पात्रं प्रयोगातिशयो हि सः // ना. शा_२०.३६ //
कालप्रवृत्तिमाश्रित्य वर्णना या प्रयुज्यते /
तदाश्रयाच्च पात्रस्य प्रवेशस्तत्प्रवृत्तकम् // ना. शा_२०.३७ //
एषामन्यतमं श्लिष्टं योजयित्वार्थयुक्तिभिः /
[तस्मादङ्गद्वयस्यापि सम्भवो न निवार्यते // ना. शा_२०.३८ //
पात्रग्रन्थैरसंबाध प्रकुर्यादामुखं ततः /
एवमेतद्बुधैर्ज्ञेयमामुखं विविधाश्रयम् // ना. शा_२०.३९ //
लक्षणं पूर्वमुक्तं तु वीथ्याः प्रहसनस्य च /
[इत्यष्टार्धविकल्पा वृत्तिरियं भारती मयाभिहिता /
सात्त्वत्यास्तु विधानं लक्षणयुक्त्या प्रवक्ष्यामि] // ना. शा_२०.४० //
या सात्त्वतेनेह गुणेन युक्ता न्यायेन वृत्तेन समन्विता च /

हर्षोत्कटा संहृतशोकभावा सा सात्वती नाम भवेत्तु वृत्तिः // ना. शा_२०.४१ //
वागङ्गाभिनयवती सत्त्वोत्थानवचनप्रकरणेषु /
सत्त्वाधिकारयुक्ता विज्ञेया सात्वती वृत्तिः // ना. शा_२०.४२ //
वीराद्भुतरौद्ररसा निरस्तशृङ्गारकरुणनिर्वेदा /
उद्धतपुरुषप्राया परस्पराधर्षणकृता च // ना. शा_२०.४३ //
उत्थापकश्च परिवर्तकश्च सल्लापकश्च संघात्यः /
चत्वारो ऽस्या भेदा विज्ञेया नाट्यकोविदैअः // ना. शा_२०.४४ //
अहमप्युत्थास्यामि त्वं तावद्दर्शयात्मनः शक्तिम् /
इति संघर्षसमुत्थस्तज्ज्ञैरुत्थापको ज्ञेयः // ना. शा_२०.४५ //
उत्थानसमारब्धानर्थानुत्सृज्य यो ऽर्थयोगवशात् /
अन्यानर्थान् भजते स चापि परिवर्तको ज्ञेयः // ना. शा_२०.४६ //
[निर्दिष्टवस्तुविषयः प्रपञ्चबद्धस्त्रिहास्यसंयुक्तः /
संघर्षविशेषकृतस्त्रिविधः परिवर्तको ज्ञेयः] // ना. शा_२०.४७ //
साधर्षजो निराधर्षजो ऽपि वा रागवचसंयुक्तः /
साधिक्षेपालापो ज्ञेयः सल्लापकः सो ऽपि // ना. शा_२०.४८ //
[धर्माधर्मसमुत्थं यत्र भवेद्रागदोषसंयुक्तम् /
साधिक्षेपं च वचो ज्ञेयः संलापको नाम] // ना. शा_२०.४९ //
मन्त्रर्थवाक्यशक्त्या दैववशादात्मदोषयोगाद्वा /
संघातभेदजननस्तज्ज्ञैः संघात्यको ज्ञेयः // ना. शा_२०.५० //
[बहुकपटसंश्रयाणां परोपघाताशयप्रयुक्तानाम् /
कूटानां संघातो विज्ञेयः कूटसंघात्यः ] // ना. शा_२०.५१ //
इत्यष्टार्धविकल्पा वृत्तिरियं सात्वती मयाभिहिता /
कैशिक्यास्त्वथ लक्षणमतःपरं संप्रवक्ष्यामि // ना. शा_२०.५२ //
या श्लक्ष्णनैपथ्यविशेषचित्रा स्त्रीसंयुता या बहुनृत्तगीता /
कामोपभोगप्रभवोपचारा तां कैशिकीं वृत्तिमुदाहरन्ति // ना. शा_२०.५३ //
[बहुवद्यनृत्तगीता शृङ्गाराभिनयचित्रनैपथ्या /
माल्यालङ्कारयुक्ता प्रशस्तवेषा च कान्ता च // ना. शा_२०.५४ //
चित्रपदवाक्यबन्धैरलङ्कृता हसितरुदितरोषादैः /
स्त्रीपुरुषकामयुक्ता विज्ञेया कैशिकीवृत्तिः] // ना. शा_२०.५५ //
नर्म च नर्मस्फुञ्जो नर्मस्फोटो ऽथ नर्मगर्भश्च /
कैशिक्याश्चत्वारो भेदा ह्येते समाख्याताः // ना. शा_२०.५६ //
आस्थापितशृङ्गारं विशुद्धकरणं निवृत्तवीररसम् /
हास्यप्रवचनबहुलं नर्म त्रिविधं विजानीयात् // ना. शा_२०.५७ //
ईर्ष्याक्रोधप्रायं सोपालम्भकरणानुविद्धं च /
आत्मोपक्षेपकृतं सविप्रलम्भं स्मृतं नर्म // ना. शा_२०.५८ //
नवसङ्गमसम्भोगो रतिसमुदयवेषवाक्यसंयुक्तः /
ज्ञेयो नर्मस्फुञ्जो ह्यवसानभयात्मकश्चैव // ना. शा_२०.५९ //
विविधानां भवानां लवैर्लवैर्भूषितो बहुविशेषैः /
असमग्राक्षिप्तरसो नर्मस्फोटस्तु विज्ञेयः // ना. शा_२०.६० //

विज्ञानरूपशोभा धनादिभिर्नायको गणैर्यत्र /
प्रच्चनां व्यवहर्ते कर्यवषान्नर्मगर्भो ऽसौ // ना. शा_२०.६१ //
[पूर्वस्थितौ विपद्येत नायको यत्र चापरस्तिष्ठेत् /
तमपीह नर्मगर्भं विद्यान्नाट्यप्रयोगेषु ] // ना. शा_२०.६२ //
इत्यष्टार्शविकल्पा वृत्तिरियं कैशिकी मयाभिहिता /
अत ऊर्ध्वमुद्धतरसामरभटिं सम्प्रवक्ष्य्यमि // ना. शा_२०.६३ //
आरभटप्रायगुणा तथैव बहुकपटवञ्चनोपेता /
दम्भानृतवचनवती त्वारभटी नाम विज्ञेया // ना. शा_२०.६४ //
[आवपाताप्लुलङ्गितानि च्चेद्यानि मायाकृतमिन्द्रजालम् /
चित्राणी युद्धानि च यत्र नित्यं तां तादृशीमारभटीं वदन्ति // ना. शा_२०.६५ //
शाड्गुण्यसमार्ब्धा हठातिसन्धानविद्रवोपेता /
लाभालाभार्थकृता विज्ञेया वृत्तिरारभटी // ना. शा_२०.६६ //
संक्षिप्तकावपतौ वस्तूत्थापनमथापि संफेटः /
एते ह्यस्या भेदा लक्षणमेषं प्रवक्ष्यामि // ना. शा_२०.६७ //
अन्वर्थशिल्पयुक्तो बहुपुस्तोत्थानचित्रनेपथ्यः /
संक्षिप्तवस्तु विषयो ज्ञेयः संक्षिप्तकओ नाम // ना. शा_२०.६८ //
भयहर्षसमुत्थानं विद्रवविनिपातसम्भ्रमाचरणम् /
क्षिप्रप्रवेशनिर्गममवपातमिमं विजानीयात् // ना. शा_२०.६९ //
सर्वरससमासकृतं सविद्रव्विद्रवाश्रयं व्वपि /
नाट्यं विभाव्यते यत्तद्वस्तूत्थापनं ज्ञेयम् // ना. शा_२०.७० //
संरम्भसंप्रयुक्तो बहुयुद्धकपटनिर्भेदः /
शस्त्रप्रहरबहुलः सम्फेटो नाम विज्ञेयः // ना. शा_२०.७१ //
एवमेता बुधैर्ज्ञेया वृत्तयो नाट्यसंश्रया /
रसप्रयोगमासां च कीर्त्यमानं निबोधत // ना. शा_२०.७२ //
हास्यशृङ्गरबहुला कैशिकी परिचक्षिता /
सत्वती चापि विज्ञेया वीराद्भुतशमाश्रयाः // ना. शा_२०.७३ //
रौद्रे भयानके चैव विज्ञेयारभटी बुधैः /
बीभत्से करुणे चैव भारती संप्रकीर्तिता // ना. शा_२०.७४ //
[ न ह्येकरसजं कव्यं किञ्चिदस्ति प्रयोगतः /
भावो वापि रसो वापि प्रवृत्तिर्वृत्तिरेव वा // ना. शा_२०.७५ //
सर्वेषां समवेतानां यस्य रूपं भवेद्बहु /
स मन्तव्यो रस स्थायि शेषाः सञ्चारिणः स्मृताः] // ना. शा_२०.७६ //
वृत्यन्त एशो ऽभिनयो मयोक्तो वागङ्गसत्त्वप्रभवो यथावद् /
आहार्यमेवाभिनयं प्रयोगे वक्ष्यामि नेपथ्यकृतं तु भूयः // ना. शा_२०.७७ //

इति भारतीये नाट्यशास्त्रे वृत्तिविकल्पनं नाम विंशो ऽध्यायः

---

अथ एकविंशो ऽध्यायः

आहार्याभिनयं विप्रा व्याख्यास्याम्यनुपूर्वशः /
यस्मात् प्रयोगः सर्वो ऽयमाहार्याभिनये स्थितः // ना. शा_२१.१ //
नानावस्था प्रकृतय पूर्वं नैपथ्यसाधिताः /
अङ्गादिभिरभिव्यक्तिमुपगच्चन्त्ययत्नतः // ना. शा_२१.२ //
आहार्याभिनयो नाम ज्ञेयो नेपथ्यजो विधिः /
तत्र कार्यः प्रयत्नस्तु नाट्यस्य शुभमिच्चता // ना. शा_२१.३ //
[तस्मिन्यत्नस्तु कर्तव्यो नैपथ्ये सिद्धिमिच्चता /
नाट्यस्येह त्वलङ्कारो नैपथ्यं यत्प्रकीर्तितम्] // ना. शा_२१.४ //
चतुर्विधं तु नेपथ्यं पुस्तो ऽलङ्कार एव च /
तथाङ्करचना चैव ज्ञेयं सज्जीवमेव च // ना. शा_२१.५ //
पुस्तस्तु त्रिविधो ज्ञेयो नानारूपप्रमाणतः /
सन्धिमो व्याजिमश्चैव वेष्टिमश्च प्रकीर्तितः // ना. शा_२१.६ //
किलिञ्जचर्मवस्त्राद्यैर्यद्रूपं क्रियते बुधैः /
सन्धिमो नाम विज्ञेयः पुस्तो नाटकसंस्श्रयः // ना. शा_२१.७ //
व्याजिमो नाम विज्ञेअयो यन्त्रेण क्रियते तु यः /
वेष्ट्यते चैव यद्रुपं वेष्टिमः स तु संज्ञितः // ना. शा_२१.८ //
शैलयानविमानानि चर्मवर्मध्वजा नगाः /
ये क्रियन्ते हि नाट्ये तु स पुस्त इति संज्ञितः // ना. शा_२१.९ //
अलङ्कारस्तु विज्ञेयो माल्याभरणवाससाम् /
नानाविधः समायोगो ऽप्यङ्गोपाङ्गविधिः स्मृतः // ना. शा_२१.१० //
वेष्टिमं विततं चैव संघात्यं ग्रन्थिमं तथा /
प्रालम्बितं तथा चैव माल्यं पञ्चविधं स्मृतम् // ना. शा_२१.११ //
चतुर्विधं तु विज्ञेयं नाट्ये ह्याभरणं बुधैः /
आवेध्यं बन्धनीयं च क्षेप्यमारोप्यमेव च // ना. शा_२१.१२ //
आवेध्यं कुण्डलादीह यत्स्याच्च्रवणभूषणम् /
आरोप्यं हेमसूत्रादि हाराश्च विविधाश्रयाः // ना. शा_२१.१३ //
श्रोणीसूत्राङ्गदे मुक्ताबन्धनीयानि सर्वदा /
प्रक्षेप्य नूपुरं विद्याद्वस्त्राभरणमेव च // ना. शा_२१.१४ //
भूषणानां विकल्पं हि पुरुषस्त्रीसमाश्रयम् /
नाविधं प्रवक्ष्यामि देशजातिसमुद्भवम् // ना. शा_२१.१५ //
चूडामणिः समुकुटः शिरसो भूषणं स्मृतम् /
कुण्डलं मोचकं कीला कर्णाभरणमिष्यते // ना. शा_२१.१६ //
मुक्तावली हर्षकं च सूत्रकं कण्ठभूषणम् /
वेतिकाङ्गुलिमुद्रा च स्यादङ्गुलिविभूषणम् // ना. शा_२१.१७ //
हस्तली वलयं चैव बाहुनालीविभूषणम् /
रुचकश्चूलिका कार्या मणिबन्धविभूषणम् // ना. शा_२१.१८ //
केयूरे अङ्गदे चैव कूर्परोपरिभूषणे /
त्रिसरश्चैव हारश्च तथा वक्षोविभूषणम् // ना. शा_२१.१९ //

व्यालम्बमौक्तिको हारो माला चैवाङ्गभूषणम् /
तलकं सूत्रकं चैव भवेत्कटिविभूषणम् // ना. शा_२१.२० //
अयं पुरुषनिर्योगः कार्यस्त्वाभरणाश्रयः /
देवानां पार्थिवानां च पुनर्वक्ष्यामि योषिताम् // ना. शा_२१.२१ //
शिखापाशं शिखाव्यालं पिण्डीपत्रं तथैव च /
चूडामणिर्मकरिका मुक्ताजालगवाक्षिकम् // ना. शा_२१.२२ //
शिरसो भूषणं चैव विचित्रं शीर्षजोलकम् /
कण्डकं शिखिपत्रं च वेणीपुच्चः सदोरकः // ना. शा_२१.२३ //
ललाटतिलकं चैव नानाशिल्पप्रयोजितम् /
भ्रूगुच्चोपरिगुच्चश्च कुसुमानुकृतिस्तथा // ना. शा_२१.२४ //
कर्णिका कर्णवलयं तथा स्यात्पत्रकर्णिका /
कुण्डलं कर्णमुद्रा च कर्णोत्कीलकमेव च // ना. शा_२१.२५ //
नानारत्नविचित्राणि दन्तपत्राणि चैव हि /
कर्णयोर्भूषणं ह्येतत्कर्णपूरस्तथैव च // ना. शा_२१.२६ //
तिलकाः पत्रलेखाश्च भवेद्गण्डविभूषणम् /
त्रिवणी चैव विज्ञेयं भवेद्वक्षोविभूषणम् // ना. शा_२१.२७ //
नेत्रयोरञ्जनं ज्ञेयमधरस्य च रञ्जनम् /
दन्तानां विविधो रागश्चतुर्णा शुक्लतापि वा // ना. शा_२१.२८ //
रागान्तरविकल्पो ऽथ शोभनेनाधिकोज्वलः /
मुग्धानां सुन्दरीणां च मुक्ताभासितशोभनाः // ना. शा_२१.२९ //
सुरक्ता वापि दन्ता स्युःः पद्मपल्लवरञ्जनाः /
अश्मरागोद्द्योतितः स्यादधरः पल्लवप्रभः // ना. शा_२१.३० //
विलासश्च भवेत्तासां सविभ्रान्तनिरीक्षितम् /
मुक्तावली व्यालपङ्क्तिर्मञ्जरी रत्नमालिका // ना. शा_२१.३१ //
रत्नावली सूत्रकं च ज्ञेयं कण्ठविभूषणम् /
द्विसरस्त्रिसरश्चैव चतुस्सरकमेव च // ना. शा_२१.३२ //
तथा शृङ्खलिका चैव भवेत्कण्ठविभूषणम् /
अङ्गदं वलयं चैव बाहुमूलविभूषणम् // ना. शा_२१.३३ //
नानाशिल्पकृताश्चैव हारा वक्षोविभूषणम् /
मणिजालावनद्धं च भवेत् स्तनविभूषणम् // ना. शा_२१.३४ //
खर्जूरकं सोच्चितिकं बाहुनालीविभूषणम् /
कलापी कटकं शङ्खो हस्तपत्रं सपूरकम् // ना. शा_२१.३५ //
मुद्राङ्गुलीयकं चैव ह्यङ्गुलीनां विभूषणम् /
मुक्ताजालाढ्यतलकं मेखला काञ्चिकापि वा // ना. शा_२१.३६ //
रशना च कलापश्च भवेच्छ्रोणीविभूषणम् /
एकयष्टिर्भवेत्काञ्ची मेखला त्वष्टयष्टिका // ना. शा_२१.३७ //
द्विरष्टयष्टि रशना कलापः पञ्चविंशकः /
द्वात्रिंशच्च चतुःषष्टिः शतमष्टोत्तरं तथा // ना. शा_२१.३८ //
मुक्ताहारा भवन्त्येते देवपार्थिवयोषिताम् /

नूपुरः किङ्किणीकाश्च घण्टिका रत्नजालकम् // ना. शा_२१.३९ //
सघोषे कटके चैव गुल्फोपरिविभूषाणम् /
जङ्घयोः पादपत्रं स्यादङ्गुलीष्वङ्गुलीयकम् // ना. शा_२१.४० //
अङ्गुष्ठतिलकाश्चैव पादयोश्च विभूषणम् /
तथालक्तकरागश्च नानाभक्तिनिवेशितः // ना. शा_२१.४१ //
अशोकपलावच्चायः स्यात् स्वाभाविक एव च /
एतद्विभूषणं नार्या आकेशादानखादपि // ना. शा_२१.४२ //
यथाभवरसावस्थं विज्ञेयं द्विजसत्तमाः /
आगमश्च प्रमाणं च रूपनिर्वर्णनं तथा // ना. शा_२१.४३ //
विश्वकर्ममतात्कार्यं सुबुद्ध्यापि प्रयोक्तृभिः /
न हि शक्यं सुवर्णेन मुक्ताभिर्मणिभिस्तथा // ना. शा_२१.४४ //
स्वाधीनमिति रुच्यैव कर्तुमङ्गस्य भूषणम् /
विभागतो ऽभिप्रयुक्तमङ्गशोभाकरं भवेत् // ना. शा_२१.४५ //
यथा स्थानान्तरगतं भूषणं रत्नसंयुतम् /
न तु नाट्यप्रयोगेषु कर्तव्यं भूषणं गुरु // ना. शा_२१.४६ //
खेदं जनयते तद्धि सव्यायतविचेष्टनात् /
गुरुभावावसन्नस्य स्वेदो मूर्चा च जायते // ना. शा_२१.४७ //
गुर्वाभरणसन्नो हि चेष्टां न कुरुते पुनः /
तस्मात्तनुत्वचकृतं सौवर्णं भूषणं भवेत् // ना. शा_२१.४८ //
रत्नवज्जतुबद्धं वा न खेदजननं भवेत् /
स्वेच्चया भूषणविधिर्दिव्यानामुपदिश्यते // ना. शा_२१.४९ //
यत्नभावविनिष्पन्नं मानुषाणां विभूषणम् /
[वेष्टितं विततं चैव संघात्यं ग्रथिमं तथ // ना. शा_२१.५० //
लम्बशोभि तथा चैव माल्यं पञ्चविधं स्मृतम् /
आच्चादनं बहुविधं नानापत्तनसंभवम् // ना. शा_२१.५१ //
तज्ज्ञेयं त्रिप्रकारं तु शुद्धं रक्तं विचित्रितम्] /
दिव्यानां भूषणविधिर्य एष परिकीर्तितः // ना. शा_२१.५२ //
मानुषाणां तु कर्तव्यो नानादेशसमाश्रयः /
भूषणैश्चापि वेषैश्च नानावस्थासमाश्रयैः // ना. शा_२१.५३ //
दिव्याङ्गनानां कर्तव्या विभक्तिः स्वस्वभूमिजा /
विद्याधरीणां यक्षीणामप्सरोनागयोषिताम् // ना. शा_२१.५४ //
ऋषिदैवतकन्यानां वेषैर्नानात्वमिष्यते /
तथा च सिद्धगन्धर्वराक्षसासुरयोषिताम् // ना. शा_२१.५५ //
दिव्यानां नरनारीणां तथैव च शिखण्डकम् /
शिखापुटशिखण्डं तु मुक्ताभूयिष्ठभूषणम् // ना. शा_२१.५६ //
विद्याधरीणां कर्तव्यः शुद्धो वेषपरिच्चदः /
यक्षिण्यो ऽप्सरश्चैव कर्या रत्नविभूषणाः // ना. शा_२१.५७ //
समस्तानां भवेद्वेषो यक्षीणा केवलं शिखा /
दिव्यनामिव कर्तव्यं नागस्त्रीणां विभूषणम् // ना. शा_२१.५८ //

मुक्तामणिलताप्रायाः फणास्तासां तु केवलाः /
कार्यं तु मुनिकन्यानामेकवेणीधरं शिरः // ना. शा_२१.५९ //
न चापि विभूषणविधिस्तासां वेषो वनोचितः /
मुक्तामरकतप्रायं मण्डनं सिद्धयोषिताम् // ना. शा_२१.६० //
तासां तु चैव कर्तव्यं पीतवस्त्रपरिच्चदम् /
पद्मरागमणिप्रायं गन्धर्वीणां विभूषणम् // ना. शा_२१.६१ //
वीणाहस्तश्च कर्तव्यः कौसुम्भवसनस्तथा /
इन्द्रनीलैस्तु कर्तव्यं राक्षसीणां विभूषणम् // ना. शा_२१.६२ //
सितदंष्ट्रा च कर्तव्या कृष्णवस्त्रपरिच्चदम् /
वैडूर्यमुक्ताभरणाः कर्तव्या सुरयोषिताम् // ना. शा_२१.६३ //
शुकपिञ्चनिभैअर्वस्त्रैः कार्यस्तासां परिच्चदः /
पुष्यरागैस्तु मणिभिः क्वचिद्वैडूर्यभूषितैः // ना. शा_२१.६४ //
दिव्यवानरनारीणां कार्यो नीलपरिच्चदः /
एवं शृङ्गारिणः कार्या वेषा दिव्याङ्गनाश्रयाः // ना. शा_२१.६५ //
अवस्थान्तमासाद्य शुद्धाः कार्याः पुनस्तथा /
मानुषीणां तु कर्तव्या नानादेशसमुद्भवाः // ना. शा_२१.६६ //
वेषाभरणसंयोगान् गदतस्तान्निबोधत /
आवन्त्ययुवतीनां तु शिरस्सालककुन्तलम् // ना. शा_२१.६७ //
गौडीयानामलकप्रायं सशिखापाशवेणिकम् /
आभीरयुवतीनां तु द्विवेणीधर एव तु // ना. शा_२१.६८ //
शिरः परिगमः कार्यो नीलप्रायमथाम्बरम् /
तथा पूर्वोतरस्त्रीणां समुन्नद्धशिखण्डकम् // ना. शा_२१.६९ //
आकेशाच्चादनं तासां देशकर्मणि कीर्तितम् /
तथैव दक्षिणस्त्रीणां कार्यमुल्लेख्यसंश्रयम् // ना. शा_२१.७० //
कुम्भीबन्धकसंयुक्तं तथावर्तललाटिकम् /
[गणिकानां तु कर्तव्यमिच्चाविच्चिति मण्डनम्] // ना. शा_२१.७१ //
देशजातिविधानेन शेषाणामपि कारयेत् /
वेषं तथा चाभरणं क्षुरकर्म परिच्चदम् // ना. शा_२१.७२ //
[आगमं चापि नैपथ्ये नाट्यस्यैवं प्रयोजयेत्] /
अदेशयुक्तो वेषो हि न शोभां जनयिष्यति // ना. शा_२१.७३ //
मेखलोरसि बद्धा तु हास्यं समुपपादयेत् /
तथा प्रोषितकान्तासु व्यसनाभिहतासु च // ना. शा_२१.७४ //
वेषो वै मलिनः कार्य एकवेणीधरं शिरः /
विप्रलम्भे तु नार्यास्तु शुद्धो वेषो भवेदिह // ना. शा_२१.७५ //
नात्याभरणसंयुक्तो न चापि मृजयान्वितः /
एवं स्त्रीणां भवेद्वेषो देशावस्थासमुद्भवः // ना. शा_२१.७६ //
पुरुषाणां पुनश्चैव वेषान्वक्ष्यामि तत्त्वतः /
तत्राङ्करचना पूर्वं कर्तव्या नाट्ययोक्तृभिः // ना. शा_२१.७७ //
ततः परं प्रयोक्तव्या वेषा देशसमुद्भवाः /

सितो नीलश्च पीतश्च चतुर्थो रक्त एव च // ना. शा_२१.७८ //
एते स्वभावजा वर्णा यैः कार्यं त्वङ्गवर्तनम् /
संयोगजाः पुनश्चान्ये उपवर्णा भवन्ति हि // ना. शा_२१.७९ //
तानहं सम्प्रवक्ष्यामि यथाकार्यं प्रयोक्तृभिः /
सितनीलसमायोगे कारण्डव इति स्मृतः // ना. शा_२१.८० //
सितपीतसामायोगात्पाण्डुवर्णः प्रकीर्तितः /
सितिअरक्तसमायोगे पद्मवर्णः प्रकीर्तितः // ना. शा_२१.८१ //
पीतनीलसमायोगाद्धरितो नाम जायते /
नीलरक्तसमायोगात्कषायो नाम जायते // ना. शा_२१.८२ //
रक्तपीतसमायोगाद्गौरवर्ण इति स्मृतः /
एते संयोगजा वर्णा ह्युपवर्णास्तथापरे // ना. शा_२१.८३ //
त्रिचतुर्वर्णसंयुक्ता बहवः संप्रकीर्तिताः /
बलस्थो यो भवेद्वर्णस्तस्य भागो भवेत्ततः // ना. शा_२१.८४ //
दुर्बलस्य च भागौ द्वौ नीलं मुक्त्वा प्रदापयेत् /
नीलस्यैको भवेद्भागश्चत्वारो ऽन्ये तु वर्णके // ना. शा_२१.८५ //
बलवान्सर्ववर्णानां नील एव प्रकीर्तितः /
एवं वर्णविधिं ज्ञात्वा नानासंयोगसंश्रयम् // ना. शा_२१.८६ //
ततः कुर्याद्यथायोगमङ्गानां वर्तनं बुधः /
वर्तनच्चादनं रूपं स्ववेषपरिवर्जितम् // ना. शा_२१.८७ //
नाट्यधर्मप्रवृत्तं तु ज्ञेयं तत्प्रकृतिस्थितम् /
स्ववर्णमात्मनश्चाद्यं वर्णकैर्वेषसंश्रयैः // ना. शा_२१.८८ //
आकृतिस्तस्य कर्तव्या यस्य प्रकृतिरास्थिता /
यथा जन्तुः स्वभावं स्वं परित्यज्यान्यदैहिकम् // ना. शा_२१.८९ //
तत्स्वभावं हि भजते देहान्तरमुपाश्रितः /
वेषेण वर्णकैश्चैव च्चादितः पुरुषस्तथा // ना. शा_२१.९० //
परभावं प्रकुरुते यस्य वेषं समाश्रितः /
देवदानवगन्धर्वयक्षराक्षसपन्नगाः // ना. शा_२१.९१ //
प्राणिसंज्ञाः स्मृता ह्येते जीवबन्धाश्च ये ऽपरे /
[स्त्रीभावाः पर्वताः नद्यः समुद्रा वाहनानि च // ना. शा_२१.९२ //
नानाशस्त्राण्यपि तथा विज्ञेयाः प्राणिसंज्ञया] /
शैलप्रासादयन्त्राणि चर्मवर्मध्वजास्तथा // ना. शा_२१.९३ //
नानाप्रहरणाद्याश्च ते ऽप्राणिन इति स्मृताः /
अथवा कारणोपेता भवन्त्येते शरीरिणः // ना. शा_२१.९४ //
वेषभाषाश्रयोपेता नाट्यधर्ममवेक्ष्य तु /
वर्णानां तु विधिं ज्ञात्वा वयः प्रकृतिमेव च // ना. शा_२१.९५ //
कुर्यादङ्गस्य रचनां देशजातिवयःश्रितताम् /
देवा गौरास्तु विज्ञेया यक्षाश्चाप्सरस्तथा // ना. शा_२१.९६ //
रुद्रार्कद्रुहिणस्कन्दास्तपनीयप्रभाः स्मृताः /
सोमो बृहस्पतिः शुक्रो वरुणस्तारकागणाः // ना. शा_२१.९७ //

समुद्रहिमवद्गङ्गाः श्वेता हि स्युर्बलस्तथा /
रक्तमङ्गारकं विद्यात् पीतौ बुधहुताशनौ // ना. शा_२१.९८ //
नारायणो नरश्चैव श्यामो नागश्च वासुकिः /
दैत्याश्च दानवाश्चैव राक्षसा गुह्यका नगाः // ना. शा_२१.९९ //
पिशाचा जलमाकाशमसितानि तु वर्णतः /
भवन्ति षट्सु द्वीपेषु पुरुषश्चैव वर्णतः // ना. शा_२१.१०० //
कर्तव्या नाट्ययोगेन निष्टप्तकनकप्रभाः /
जाम्बूद्वीपस्य वर्षे तु नानावर्णाश्रया नराः // ना. शा_२१.१०१ //
उत्तरांस्तु कुरुस्त्यक्त्वा ते चापि कनकप्रभाः /
भद्राश्वपुरुषाः श्वेताः कर्तव्या वर्णतस्तथा // ना. शा_२१.१०२ //
केतुमाले नरा नीला गौराः शेषेषु कीर्तिताः /
नानावर्णाः स्मृता भूता गन्धर्वा यक्षपन्नगाः // ना. शा_२१.१०३ //
विद्याधरास्तथा चैव पितरस्तु समा नराः /
पुनश्च भारते वर्षे तांस्तान्वर्णान्निबोधत // ना. शा_२१.१०४ //
राजानः पद्मवर्णास्तु गौराः श्यामास्तथैव च /
ये चापि सुखिनो मर्त्या गौरा कार्यास्तु वैः बुधैः // ना. शा_२१.१०५ //
कुकर्मिणो ग्रहग्रस्ताः व्याधितास्तपसि स्थिताः /
आयस्तकर्मिणश्चैव ह्यसिताश्च कुजातयः // ना. शा_२१.१०६ //
ऋष्ययश्चैव कर्तव्या नित्यं तु बदरप्रभाः /
तपःस्थिताश्च ऋषयो नित्यामेवासिता बुधैः // ना. शा_२१.१०७ //
कारणव्यपदेशेन तथा चात्मेच्चया पुनः /
वर्णस्तत्र प्रकर्तव्यो देशजतिवशानुगः // ना. शा_२१.१०८ //
देशं कर्म च जातिं च पृथिव्युद्देशसंश्रयम् /
विज्ञाय वर्तना कार्या पुरुषाणां प्रयोगतः // ना. शा_२१.१०९ //
किरातबर्बरान्ध्राश्च द्रविडाः काशिकोसलाः /
पुलिन्दा दाक्षिणात्याश्च प्रायेण त्वसिताः स्मृताः // ना. शा_२१.११० //
शकाश्च यवनाश्चैव पह्लवा वाह्लिकाश्च ये /
प्रायेण गौराः कर्तव्या उत्तरा ये श्रिता दिशम् // ना. शा_२१.१११ //
पाञ्चालाः शौरसेनाश्च माहिषाश्चौड्रमागधाः /
अङ्गा वङ्गाः कलिङ्गाश्च श्यामाः कार्यास्तु वर्णतः // ना. शा_२१.११२ //
ब्राह्मणाः क्षत्रियाश्चैव गौराः कार्यास्तथैव हि /
वैश्याः शूद्रास्तथा चैव श्यामाः कार्यास्तु वर्णतः // ना. शा_२१.११३ //
एवं कृत्वा यथान्यायं मुखाङ्गोपाङ्गवर्तनाम् /
श्मश्रुकर्म प्रयुञ्जीत देशकालवयो ऽनुगम् // ना. शा_२१.११४ //
शुद्धं विचित्रं श्यामं च तथा रोमशमेव च /
भवेच्चतुर्विधं श्मश्रु नानावस्थान्तरात्मकम् // ना. शा_२१.११५ //
शुद्धं तु लिङ्गिनां कार्यं तथामात्यपुरोधसाम् /
मध्यस्था ये च पुरुषा ये च दीक्षां समाश्रिताः // ना. शा_२१.११६ //
दिव्या ये पुरुषाः केचित्सिद्धविद्याधरादयः /

पार्थिवाश्च कुमाराश्च ये च राजोपजीविनः // ना. शा_२१.११७ //
शृङ्गारिणश्च ये मर्त्या यौवनोन्मादिनश्च ये /
तेषां विचित्रं कर्तव्यं श्मश्रु नाट्यप्रयोक्तृभिः // ना. शा_२१.११८ //
अनिस्तीर्णप्रतिज्ञानां दुःखितानां तपस्विनाम् /
व्यसनाभिहतानां च श्यामं श्मश्रु प्रयोजयेत् // ना. शा_२१.११९ //
ऋषीणां तापसानां च ये च दीर्घव्रता नराः /
तथा च चीरबद्धानां रोमशं श्मश्रु कीर्तितम् // ना. शा_२१.१२० //
एवं नानाप्रकारं तु श्मश्रु कार्यं प्रयोक्तृभिः /
अत ऊर्ध्वं प्रवक्ष्यामि वेषान्नानाप्रयोगजान् // ना. शा_२१.१२१ //
शुद्धो विचित्रो मलिनस्त्रिविधो वेष उच्यते /
तेषां नियोगं वक्ष्यामि यथावदनुपूर्वशः // ना. शा_२१.१२२ //
देवाभिगमने चैव मङ्गले नियमस्थिते /
तिथिनक्षत्रयोगे च विवाहकरणे तथा // ना. शा_२१.१२३ //
धर्मप्रवृत्तं यत्कर्म स्त्रियो वा पुरुषस्य वा /
वेषस्तेषां भवेच्चुद्धो ये च प्रायत्रिका नराः // ना. शा_२१.१२४ //
देवदानवयक्षाणां गन्धर्वोरगरक्षसाम् /
नृपाणां कर्कशानां च चित्रो वेष उदाहृतः // ना. शा_२१.१२५ //
वृद्धानां ब्राह्मणानां च श्रेष्ठ्यमात्यपुरोधसाम् /
वणिजां काञ्चुकीयानां तथा चैव तपस्विनाम् // ना. शा_२१.१२६ //
विप्रक्षेत्रियवैश्यानां स्थानीया ये च मानवाः /
शुद्धो वस्त्रविधिस्तेषां कर्तव्यो नाटकाश्रयः // ना. शा_२१.१२७ //
उन्मत्तानां प्रमत्तानामध्वगानां तथैव च /
व्यसनोपहतानां च मलिनो वेष उच्यते // ना. शा_२१.१२८ //
शुद्धरक्तविचित्राणि वासांस्यूर्ध्वाम्बराणि च /
योजयेन्नाट्यतत्त्वज्ञो वेषयोः शुद्धचित्रयोः // ना. शा_२१.१२९ //
कुर्याद्वेषे तु मलिने मलिनं तु विचक्षणः /
मुनिनिर्ग्रन्थशाक्येषु यतिपाशुपतेषु च // ना. शा_२१.१३० //
व्रतानुगस्तु कर्तव्यो वेषो लोकस्वभावतः /
चीरवल्कलचर्माणि तापसानां तु योजयेत् // ना. शा_२१.१३१ //
परिवाण्मुनिष्क्यानां वासः काषायमिष्यते /
नानाचित्राणि वासांसि कुर्यात्पाशुपतेष्वथ // ना. शा_२१.१३२ //
कुजातयश्च ये प्रोक्तास्तेषां चैव यथार्हतः /
अन्तःपुरप्रवेशे च विनियुक्ता हि ये नराः // ना. शा_२१.१३३ //
काषायकञ्चुकपटाः कार्यास्ते ऽपि यथाविधि /
अवस्थानतरतश्चैव नृणां वेषो भवेदथ // ना. शा_२१.१३४ //
वेषः सांग्रामिकश्चैव शूराणां संप्रकीर्तितः /
विचित्रशस्त्रकवचो बद्धतूणो धनुर्धरः // ना. शा_२१.१३५ //
चित्रो वेषस्तु कर्तव्यो नृपाणां नित्यमेव च /
केवलस्तु भवेच्चुद्धो नक्षत्रोत्पातमङ्गले // ना. शा_२१.१३६ //

एवमेष भवेद्वेषो देशजातिवयो ऽनुगः /
उत्तमाधममध्यानां स्त्रीणां नृणामथापि च // ना. शा_२१.१३७ //
एवं वस्त्रविधिः कार्यः प्रयोगे नाटकाश्रये /
नानावस्थां समासाद्य शुभाशुभकृतस्तथा // ना. शा_२१.१३८ //
तथा प्रतिशिरश्चापि कर्तव्यं नाटकाश्रयम् /
दिव्यानां मानुषाणां च देशजातिवयःश्रितम् // ना. शा_२१.१३९ //
पार्श्वागता मस्तकिनस्तथा चैव किरीटिनः /
त्रिविधो मुकुटो ज्ञेयो दिव्यपार्थिवसंश्रितः // ना. शा_२१.१४० //
देवगन्धर्वयक्षाणां पन्नगानां सरक्षसाम् /
कर्तव्या नैकविहिअत मुकुटाः पार्श्वमौलयः // ना. शा_२१.१४१ //
उत्तमा ये च दिव्यानां ते च कार्याः किरीटिनः /
मध्यमा मौलिनश्चैव कनिष्ठाः षिर्षमौलिनः // ना. शा_२१.१४२ //
नराधिपानां कर्तव्या मस्तके मुकुटा बुधैः /
विद्याधराणां च सिद्धानां चारणानां तथैव च // ना. शा_२१.१४३ //
ग्रन्थिमत्केशमुकुटाः कर्तव्यास्तु प्रयोक्तृभिः /
राक्षोदानवदैत्यानां पिङ्गकेशेक्षणानि हि // ना. शा_२१.१४४ //
हरिच्च्श्मश्रूणि च तथा मुकुटास्यानि कारयेत् /
उत्तमश्चापि ये तत्र ते कार्याः पार्श्वमौलिनः // ना. शा_२१.१४५ //
कस्मात्तु मुकुटाः सृष्टाः प्रयोगे दिव्य्पार्थिवे /
केशानां चेदनं दृष्टं वेदवादे यथाश्रुति // ना. शा_२१.१४६ //
भद्रीकृतस्य वा यज्ञे शिरसश्चादनेच्चया /
केशानामप्यदीर्घत्वात्स्मृतं मुकुटधारणम् // ना. शा_२१.१४७ //
सेनापतेः पुनश्चापि युवराजस्य चैव हि /
योजयेदर्धमुकुटं महामात्राश्च ये नराः // ना. शा_२१.१४८ //
अमात्यानां कञ्चुकिनां तथा श्रेष्ठिपुरोधसाम् /
वेष्टनाबद्धपट्टानि प्रतिशीर्षाणि कारयेत् // ना. शा_२१.१४९ //
पिशाचोन्मत्तभूतानां साधकानां तपस्विनाम् /
अनिस्तीर्णप्रतिज्ञानां लम्बकेशं भवेच्चिरः // ना. शा_२१.१५० //
शाक्यश्रोत्रियनिर्ग्रन्थपरिव्राड्दीक्षितेषु च /
शिरोमुण्डं तु कर्तव्यं यज्ञदीक्षान्वितेषु च // ना. शा_२१.१५१ //
तथा व्रतानुगं चैव शेषानां लिङ्गिनां शिरः /
मुण्डं वा कुञ्चितं वापि लम्बकेशमथापि वा // ना. शा_२१.१५२ //
धूर्तानां चैव कर्तव्यं ये च रात्र्युपजीविनः /
शृङ्गारचित्ताः पुरुषास्तेषां कुञ्चितमूर्धजाः // ना. शा_२१.१५३ //
बालानामपि कर्तव्यं त्रिशिखण्डविभूषितम् /
जटामकुटबद्धं च मुनीनां तु भवेच्चिरः // ना. शा_२१.१५४ //
चेटानामपि कर्तव्यं त्रिशिखं मुण्डमेव वा /
विदूषकस्य खलतिः स्यात्काकपदमेव वा // ना. शा_२१.१५५ //
शीषाणामर्थयोगेन देशजातिसमाश्रयम् /

शिरः प्रयोक्तृभिः कार्यं नानावस्थान्तराश्रयम् // ना. शा_२१.१५६ //
भूषणैर्वर्णकैर्वस्त्रैर्माल्यैश्चैव यथाविधि /
एवं नानाप्रकारैस्तु बुद्ध्या वेषान्प्रकल्पयेत् // ना. शा_२१.१५७ //
पूर्वं तु प्रकृतिं स्थाप्य प्रयोगगुणसंभवाम् /
स्त्रीणां वा पुरुषाणां वाप्यवस्थां प्राप्य तादृशीम् // ना. शा_२१.१५८ //
सर्वे भावाश्च दिव्यानां कार्या मानुषसंश्रयाः /
तेषां चानिमिषत्वादि नैव कार्यं प्रयोक्तृभिः // ना. शा_२१.१५९ //
इह भावरसाश्चैव दृष्टिभिः संप्रतिष्ठिताः /
दृष्ट्यैव स्थापितो ह्यर्थः पश्चादङ्गैर्विभाव्यते // ना. शा_२१.१६० //
एवं ज्ञीयाङ्गरचना नानाप्रकृतिसंभवा /
सजीव इति यः प्रोक्तस्तस्य वक्ष्यामि लक्षणम् // ना. शा_२१.१६१ //
यः प्राणिनां प्रवेशो वै सजीव इति संज्ञितः /
चतुष्पदो ऽथ द्विपदस्तथा चैवापदः स्मृतः // ना. शा_२१.१६२ //
उरगानपदान् विद्याद् द्विपदान्खगमानुषान् /
ग्राम्या आरण्याः पशवो विज्ञेयाः स्युश्चतुष्पदाः // ना. शा_२१.१६३ //
ये ते तु यद्धसंफेटैरुपरोधैस्तथैव च /
नानाप्रहरणोपेताः प्रयोज्या नाटके बुधैः // ना. शा_२१.१६४ //
आयुधानि च कार्याणि पुरुषाणां प्रमाणतः /
तान्यहं वर्तयिष्यामि यथापुस्तप्रमाणतः // ना. शा_२१.१६५ //
भिण्डिर्द्वादशतालः स्याद्दश कुन्तो भवेदथ /
अष्टौ शतघ्नी शूलं च तोमरः शक्तिरेव वा // ना. शा_२१.१६६ //
अष्टौ ताला धनुर्ज्येयमायामो ऽस्य द्विहस्तकः /
शरो गदा च वज्रा च चतुस्तालं विधीयते // ना. शा_२१.१६७ //
अङ्गुलानि त्वसिः कार्यश्चत्वारिंशत्प्रमाणतः /
द्वादशाङ्गुलकं चक्रं ततो ऽर्धं प्रास इष्यते // ना. शा_२१.१६८ //
प्रासवत्पट्टसं विद्याद्दण्डश्चैव तु विंशतिः /
विंशतिः कणयश्चैव ह्यङ्गुलानि प्रमाणतः // ना. शा_२१.१६९ //
शोडषाङ्गुलविस्तीर्णं सबलं संप्रघण्टिकम् /
त्रिंशदङ्गुलिमानेन कर्तव्यं खेटकं बुधैः // ना. शा_२१.१७० //
जर्जरो दण्डकाष्ठं च तथैव प्रतिशीर्षकम् /
चत्रं चामरं चैव ध्वजो शृङ्गार एव च // ना. शा_२१.१७१ //
यत्किञ्चिन्मानुषे लोके द्रव्यं पुंसां प्रयोजकम् /
यच्चोपकरणं सर्वे नाट्ये तत्संप्रकीर्तितम् // ना. शा_२१.१७२ //
यद्यस्य विषयप्राप्तं तेनोह्यं तस्य लक्षणम् /
जर्जरे दण्डकाष्ठे च संप्रवक्ष्यामि लक्षणम् // ना. शा_२१.१७३ //
माहेन्द्रा वै ध्वजाझ् प्रोक्ता लक्षणैर्विश्वकर्मणा /
एषान्यतमं कुर्याज्जर्जरं दारुकर्मतः // ना. शा_२१.१७४ //
अथवा वृक्षयोनिः स्यात्प्ररोहो वापि जर्जरः /
वेणुरेव भवेच्च्रेष्ठस्तस्य वक्ष्यामि लक्षणम् // ना. शा_२१.१७५ //

श्वेतभूम्याआं तु यो जातः पुष्यनक्षत्रजस्तथा /
संग्राह्यो वै भवेद्वेणुर्जर्जरार्थे प्रयत्नतः // ना. शा_२१.१७६ //
प्रमाणमङ्गुलानां तु शतमष्टोत्तरं भवेत् /
पञ्चपर्वा चतुर्ग्रन्थिस्तालमात्रस्तथैव च // ना. शा_२१.१७७ //
स्थूलग्रन्थिर्न कर्तव्यो न शाखी न च कीटवान् /
न कृमिक्षतपर्वा च न हीनश्चान्यवेणुभिः // ना. शा_२१.१७८ //
मधुसर्पिस्सर्षपाक्तं माल्यधूपपुरस्कृतम् /
उपास्य विधिवद्वेणुं गृह्णियाज्जर्जरं प्रति // ना. शा_२१.१७९ //
यो विधिर्यः क्रमश्चैव माहेब्द्रे तु ध्वजे स्मृतः /
स जर्जरस्य कर्तव्यः पुष्यवेणुसमाश्रयः // ना. शा_२१.१८० //
भवेद्यो दीर्घपर्वा तु तनुपत्रस्तथैव च /
पर्वाग्रतण्डुलश्चैव पुष्यवेणुः स कीर्तितः // ना. शा_२१.१८१ //
विधिरेष मया प्रोक्तो जर्जरस्य प्रमाणतज्ञः /
अत ऊर्ध्वं प्रवक्ष्यामि दण्डकाष्ठस्य लक्षणम् // ना. शा_२१.१८२ //
कपित्थबिल्ववंशेभ्यो दण्डकाष्ठं भवेदथ /
वक्रं चैव हि कर्तव्यं त्रिभागे लक्षणान्वितम् // ना. शा_२१.१८३ //
कीटैर्नोपहतं यच्च व्याधिना न च पीडितम् /
मन्दशाखं भवेद्यच्च दण्डकाष्टं तु तद्भवेत् // ना. शा_२१.१८४ //
यस्त्वेभिर्लक्षणैर्हीनं दण्डकाष्ठं सजर्जरम् /
कारयेत्स त्वपचयं महान्तं प्राप्नुयाद्ध्रुवम् // ना. शा_२१.१८५ //
अथ शीर्षविभागार्थं घटी कार्या प्रयत्नतः /
स्वप्रमाणविनिर्दिष्टा द्वात्रिंशत्यङ्गुलानि वै // ना. शा_२१.१८६ //
बिल्वमध्येन कर्तव्या घटी सिरसमाश्रया /
स्विन्नेन बिल्वकल्केन द्रवेण च समन्विता // ना. शा_२१.१८७ //
भस्मना वा तुषैर्वापि कारयेत्प्रतिशीर्षकम् /
संचाद्य तु ततो वस्त्रैर्बिल्वदुग्धैर्घटाश्रयैः // ना. शा_२१.१८८ //
बिल्वकल्केन चीरं तु दिग्ध्वा संयोजयेद्घटीम् /
न स्थूलां नानतां तन्वीं दीर्घां नैव च कारयेत्. // ना. शा_२१.१८९ //
तस्यामातपशुष्कायां सुशुष्कायामथापि वा /
चेद्यं बुधाः प्रकुर्वन्ति विधिदृष्टेन कर्मणा // ना. शा_२१.१९० //
सुतीक्ष्णेन तु शस्त्रेण अर्धार्धं प्रविभज्य च /
स्वप्रमाणविनिर्दिष्टं ललाटकृतकोणकम् // ना. शा_२१.१९१ //
अर्धाङ्गुलं ललाटं तु कार्यं चेद्यं षडङ्गुलम् /
अर्धार्धमङ्गुलं चेद्यं कटयोर्द्व्यङ्गुलं भवेत् // ना. शा_२१.१९२ //
कटान्ते कर्णनालस्य चेद्यं द्व्यधिकमङ्गुलम् /
त्र्यङ्गुलं कर्णविवरं तथा स्याच्चेद्यमेव हि // ना. शा_२१.१९३ //
ततश्चैवावटुः कार्या सुसमा द्वादशाङ्गुला /
घट्यां ह्येतत्सदा च्चेद्ये विधानं विहितं मया // ना. शा_२१.१९४ //
तस्योपरिगता कार्या मुकुटा बहुशिल्पजाः /

नानारत्नप्रतिच्चन्ना बहुरूपोपशोभिताः // ना. शा_२१.१९४ //
तथोपकरणानीह नाट्ययोगकृतानि वै /
बहुप्रकारयुक्तानि कुर्वीत प्रकृतिं प्रति // ना. शा_२१.१९६ //
यत्किञ्चिदस्मिन् लोके तु चराचरसमन्विते /
विहितं कर्म शिल्पं वा तत्तूपकरणं स्मृतम् // ना. शा_२१.१९७ //
यद्यस्य विषयं प्राप्तं तत्तदेवाभिगच्चति /
नास्तन्तः पुरुषाणां हि नाट्योपकरणाश्रये // ना. शा_२१.१९८ //
यद्येनोत्पादितं कर्म शिल्पयोगक्रियापि वा /
तस्य तेन कृता सृष्टिः प्रमाणं लक्षणं तथा // ना. शा_२१.१९९ //
या काष्ठयन्त्रभूयिष्ठा कृता सृष्टिर्महात्मना /
न सास्माकं नाट्ययोगे कस्मात्खेदावहा हि सा // ना. शा_२१.२०० //
यद्द्रव्यं जीवलोके तु नानालक्षणलक्षितम् /
तस्यानुकृतिसंस्थानं नाट्यूपकरणं भवेत् // ना. शा_२१.२०१ //
प्रासादगृहयानानि नानाप्रहरणानि च /
न शक्यं तानि वै कर्तुं यथोक्तानीह लक्षणैः // ना. शा_२१.२०२ //
लोकधर्मी भवेत्त्वन्या नाट्यधर्मी तथापरा /
स्वभावो लोकधर्मी तु विभावो नाट्यमेव हि // ना. शा_२१.२०३ //
आयसं न तु कर्तव्यं न च सारमयं तथा /
नाट्योपकरणं तज्ज्ञैर्गुरुखेदकर भवेत् // ना. शा_२१.२०४ //
काष्ठचर्मसु वस्त्रषु जतुवेणुदलेषु च /
नाट्योपकरणानीह लघुकर्माणि कारयेत् // ना. शा_२१.२०५ //
चर्मवर्मध्वजाः शैलाः प्रासादा देवतागृहाः /
हयवारणयानानि विमानानि गृहाणि च // ना. शा_२१.२०६ //
पूर्वं वेणुदलैः कृत्वा कृतीर्भावसमाश्रयाः /
ततः सुरङ्गैरच्चाद्य वस्त्रैः सारूप्यमानयेत् // ना. शा_२१.२०७ //
अथवा यदि वस्त्राणामसान्निध्यं भवेदिह /
तालीयैर्वा किलिञ्जैर्वा श्लक्ष्णैर्वस्त्रक्रिया भवेत् // ना. शा_२१.२०८ //
तथा प्रहरणानि स्युस्तृणवेणुदलादिभिः /
जन्तुभाण्डक्रियाभिश्च नानारूपाणि नाटके // ना. शा_२१.२०९ //
प्रतिपादं प्रतिशिरः प्रतिहस्तं प्रतित्वचम् /
तृणैः किलिञ्जैर्भाण्डैर्वा सारूप्याणि तु कारयेत् // ना. शा_२१.२१० //
यद्यस्य सदृशं रूपं सारूप्यगुणसंभवम् /
मृण्मयं तत्तु कृत्स्नं तु नानारूपं तु कारयेत् // ना. शा_२१.२११ //
भाण्डवस्त्रमधूच्चिष्टैर्लाक्षयाभ्रदलेन च /
नागास्ते विविधाः कार्या ह्यतसीशणबिल्वजैः // ना. शा_२१.२१२ //
नानाकुसुमजातीश्च फलानि विविधानि च /
भाण्डवस्त्रमधूच्चिष्टैर्लाक्षया वापि कारयेत् // ना. शा_२१.२१३ //
भाण्डवस्त्रमधूच्चिष्टैस्ताम्रपत्रैस्तथैव च /
सम्यक्च नीलीरागेणाप्यभ्रपत्रेण चैव हि // ना. शा_२१.२१४ //

रञ्जितेनाभ्रपत्रेण मणीश्चैव प्रकारयेत् /
उपाश्रयमथाप्येषं शुल्बवङ्गेन कारयेत् // ना. शा_२१.२१५ //
विविधा मुकुटा दिवा पूर्वं ये गदिता मया /
ते ऽभ्रपत्रोज्वलाः कार्या मणीव्यालोपशोभिताः // ना. शा_२१.२१६ //
न शास्त्रप्रभवं कर्म तेषां हि समुदाहृतम् /
आचार्यबुद्ध्या कर्तव्यमूहापोहप्रयोजितम् // ना. शा_२१.२१७ //
एष मर्त्यक्रियायोगो भविष्यत्कल्पितो मया /
कस्मादल्पबलत्वं हि मनुष्येषु भविष्यति // ना. शा_२१.२१८ //
मर्त्यानामपि नो शक्या विभावाः सर्वकाञ्चनाः /
नेष्टाः सुवर्णरत्नैस्तु मुकुटा भूषणानि वा // ना. शा_२१.२१९ //
युद्धे नियुद्धे नृत्ते वा वृष्टिव्यापारकर्मणि /
गुरुभावावसन्नस्य स्वेदो मूर्चा च जायते // ना. शा_२१.२२० //
स्वेदमूर्चाक्लमार्तस्य प्रयोगस्तु विनश्यति /
प्राणात्ययः कदाचिच्च भवेद्व्यायतचेष्टया // ना. शा_२१.२२१ //
तस्मात्ताम्रमयैः पत्रैरभ्रकै रञ्जितैरपि /
भेण्डैरपि मधूच्चिष्टैः कार्याण्याभरणानि तु // ना. शा_२१.२२२ //
एवं लोकोपचारेण स्वबुद्धिविभवेन च /
नाट्योपकरणानीह बुधः सम्यक् प्रयोजयेत् // ना. शा_२१.२२३ //
न भेद्यं नैव च च्चेद्यं न प्रहर्तव्यमेव च /
रङ्गे प्रहरणैः कार्यं संज्ञामात्रं तु कारयेत् // ना. शा_२१.२२४ //
अथवा योगशिक्षाभिर्विद्यामायाकृतेन वा /
शस्त्रमोक्षः प्रकर्तव्यो रङ्गमध्ये प्रयोक्तृभिः // ना. शा_२१.२२५ //
एवं नानाप्रकारैस्तु आयुधाभरणानि च /
नोक्तानि यानि च मया लोकाद् ग्राह्याणि तान्यपि // ना. शा_२१.२२६ //
आहार्याभिनयो ह्येष मया प्रोक्तः समासतः /
अत ऊर्ध्वं प्रवक्ष्यामि सामान्याभिनयं प्रति // ना. शा_२१.२२७ //

इति भारतीये नाट्यशास्त्रे आहार्याभिनयो नामैकविंशो ऽध्यायः

---

अथ द्वाविंशो ऽध्यायः

सामान्याभिनयो नाम ज्ञेयो वागङ्गसत्त्वजः /
तत्र कार्यः प्रयत्नस्तु नाट्यं सत्त्वे प्रतिष्ठितम् // ना. शा_२२.१ //
सत्त्वातिरिक्तो ऽभिनयो ज्येष्ठ इत्यभिधीयते /
समसत्त्वो भवेन्मध्यः सत्वहीनो ऽधमः स्मृतः // ना. शा_२२.२ //
अव्यक्तरूपं सत्त्वं हि विज्ञेयं भावसंश्रयम् /
यथास्थानरसोपेतं रोमाञ्चास्रादिभिर्गुणैः // ना. शा_२२.३ //
अलङ्कारास्तु नाट्यज्ञैर्ज्ञेया भावरसाश्रयाः /

यौवने ऽभ्यधिकाः स्त्रीणा विकारा वक्त्रगात्रजाः // ना. शा_२२.४ //
आदौ त्रयो ऽङ्गजस्तेषां दश स्वाभाविकाः परे /
अयत्नजाः पुनः सप्त रसभावोपबृंहिताः // ना. शा_२२.५ //
देहात्मकं भवेत्सत्त्वं सत्त्वाद्भावः समुत्थितः /
भावात्समुत्थितो हावो हावाद्धेला समुत्थिता // ना. शा_२२.६ //
हेला हावश्च भावश्च परस्परसमुत्थिताः /
सत्त्वभेदे भवन्त्येते शरीरे प्रकृतिस्थिताः // ना. शा_२२.७ //
वागङ्गमुखरागैश्च सत्त्वेनाभिनयेन च /
कवेरन्तर्गतं भावं भावयन्भाव उच्यते // ना. शा_२२.८ //
[भावस्यातिकृतं सत्त्वं व्यतिरिक्तं स्वयोनिषु /
नैकावस्थान्तरकृतं भावं तमिह निर्दिशेत्] // ना. शा_२२.९ //
तत्राक्षिभ्रूविकाराढ्यः शृङ्गाराकारसूचकः /
सग्रीवारेचको ज्ञेयो हावः स्थितसमुत्थितः // ना. शा_२२.१० //
यो वै हावः स एवैषा शृङ्गाररससंभवा /
समाख्याता बुधैर्हेला ललिताभिनयात्मिका // ना. शा_२२.११ //
लीला विलासो विच्छित्तिर्विभ्रमः किलिकिञ्चितम् /
मोट्टायितं कुट्टिमितं बिब्बोको ललितं तथा // ना. शा_२२.१२ //
विहृतं चेति विज्ञेया दश स्त्रीणां स्वभावजाः /
पुनरेषां स्वरूपाणि प्रवक्ष्यामि पृथक्पृथक् // ना. शा_२२.१३ //
वागङ्गालङ्कारैः शिष्टैः प्रीतिप्रयोजितैर्मधुरैः /
इष्टजनस्यानुकृतिर्लीला ज्ञेया प्रयोगज्ञैः // ना. शा_२२.१४ //
स्थानासनगमनानां हस्तभ्रूनेत्रकर्मणां चैव /
उत्पद्यते विशेषो यः श्लिष्टः स तु विलासः स्यात् // ना. शा_२२.१५ //
माल्याच्चादनभूषण विलेपनानामनादरन्यासः /
स्वल्पो ऽपि परां शोभां जनयति यस्मात्तु विच्चितिः // ना. शा_२२.१६ //
विविधानामर्थानां वागङ्गाहार्यसत्त्वानाम् /
मदरागहर्षजनितो व्यत्यासो विभ्रमो ज्ञेयः // ना. शा_२२.१७ //
स्मितरुदितहसितभयहर्षगर्वदुःखश्रमाभिलाषाणाम् /
सङ्करकरणं हर्षादसकृत् किलिकिञ्चितं ज्ञेयम् // ना. शा_२२.१८ //
इष्टजनस्य कथायां लीलाहेलादिदर्शने वापि /
तद्भावभावनाकृतमुक्तं मोट्टायितं नाम // ना. शा_२२.१९ //
केशस्तनधरादिग्रहणादतिहर्षसंभ्रमोत्पन्नम् /
कुट्टमितं विज्ञेअयं सुखमपि दुःखोपचारेण // ना. शा_२२.२० //
इष्टानां भावानां प्राप्तावभिमानगर्वसंभूतः /
स्त्रीणामनादरकृतो बिब्बोको नाम विज्ञेयः // ना. शा_२२.२१ //
हस्तपादाङ्गविन्यासो भ्रूनेत्रोष्ठप्रयोजितः /
सौकुमार्याद्भवेद्यस्तु ललितं तत्प्रकीर्तितम् // ना. शा_२२.२२ //
[करचरणाङ्गन्यासः सभ्रूनेत्रोष्ठसंप्रयुक्तस्तु /
सुकुमारविधानेन स्त्रीभिउरितीदं स्मृतं ललितम्] // ना. शा_२२.२३ //

वाक्यानां प्रीतियुक्तानां प्राप्तानां यदभाषणम् /
व्याजात्स्वभावतो वापि विहृतं नाम तद्भवेत् // ना. शा_२२.२४ //
[प्राप्तानामपि वचसां क्रियते यदभाषणं ह्रिया स्त्रीभिः /
व्याजात्स्वभावतो वाप्येतत्समुदाहृतं विहृतम्] // ना. शा_२२.२५ //
शोभा कान्तिश्च दीप्तिश्च तथा माधुर्यमेव च /
धैर्यं प्रागल्भ्यमौदार्यमित्येते स्युरयत्नजाः // ना. शा_२२.२६ //
रूपयौवनलावण्यैरुपभोगोपबृंहितैः /
अलङ्करणमङ्गानां शोभेति परिकीर्तिता // ना. शा_२२.२७ //
विज्ञेया च तथा कान्तिः शोभैवापूर्णमन्मथा /
कान्तिरेवातिविस्तीर्णा दीप्तिरित्यभिधीयते // ना. शा_२२.२८ //
सर्वावस्थाविशेषेषु दीप्तेषु ललितेषु च /
अनुल्बणत्वं चेष्टाया माधुर्यमिति संज्ञितम् // ना. शा_२२.२९ //
चापलेनानुपहता सर्वार्थेष्वविकत्थना /
स्वाभाविकी चित्तवृत्तिर्धैर्यमित्यभिधीयते // ना. शा_२२.३० //
प्रयोगनिस्साध्वसता प्रागल्भ्यं समुदाहृतम् /
औदार्यं प्रश्रयः प्रोक्तः सर्वावस्थानुगो बुधैः // ना. शा_२२.३१ //
सुकुमारे भवन्त्येते प्रयोगे ललितात्मिके /
विलासललिते हित्वा दीप्ते ऽप्येते भवन्ति हि // ना. शा_२२.३२ //
शोभा विलासो माधुर्यं स्थैर्यं गाम्भीर्यमेव च /
ललितौदार्यतेजांसि सत्त्वभेदास्तु पौरुषाः // ना. शा_२२.३३ //
दाक्ष्यं शौर्यमथोत्साहो नीचार्थेषु जुगुप्सनम् /
उत्तमैश्च गुणैः स्पर्धा यतः शोभेति सा स्मृता // ना. शा_२२.३४ //
धीरसंचारिणी दृष्टिर्गतिर्गोवृषभाञ्चिता /
स्मितपूर्वमथालापो विलास इति कीर्तितः // ना. शा_२२.३५ //
अभ्यासत्करणानां तु श्लिष्टत्वं यत्र जायते /
महत्स्वपि विकारेषु तन्माधुर्यमिति स्मृतम् // ना. शा_२२.३६ //
धर्मार्थकामसंयुक्ताच्चुभाशुभसमुत्थितात् /
व्यवसायादचलनं स्थैर्यमित्यभिसंज्ञितम् // ना. शा_२२.३७ //
यस्य प्रभावादाकारा हर्षक्रोधभयादिषु /
भावेषु नोपलक्ष्यन्ते तद्गाम्भीर्यमिति स्मृतम् // ना. शा_२२.३८ //
अबुद्धिपूर्वकं यत्तु निर्विकारस्वभाजम् /
शृङ्गाराकारचेष्टत्वं ललितं तदुदाहृतम् // ना. शा_२२.३९ //
दानमभ्युपपत्तिश्च तथा च प्रियभाषणम् /
स्वजने च परे वापि तदौदार्यं प्रकीर्तितम् // ना. शा_२२.४० //
अधिक्षेपावमानादेः प्रयुक्तस्य परेण यत् /
प्राणत्यये ऽप्यसहनं तत्तेजः समुदाहृतम् // ना. शा_२२.४१ //
सत्त्वजो ऽभिनयोः पूर्वं मया प्रोक्तओ द्विजोत्तमाः /
शारीरं चाप्याभिनयं व्याख्यास्याम्यनुपूर्वशः // ना. शा_२२.४२ //
षडात्मकस्तु शारीरो वाक्यं सूचाङ्कुरस्तथा /

शाखा नाट्यायितं चैव निवृत्त्यङ्कुर एव च // ना. शा_२२.४३ //
नानारसार्थयुक्तैर्वृत्तनिबन्धैः कृतः सचूर्णपदैः /
प्राकृतसंस्कृतपाठो वाक्याभिनयो बुधैर्ज्ञेयः // ना. शा_२२.४४ //
वाक्यर्थो वाक्यं वा सत्त्वाङ्गैः सूच्यते यदा पूर्वम् /
पश्चाद्वाक्याभिनयः सूचेत्यभिसंज्ञिता सा तु // ना. शा_२२.४५ //
हृदयस्थो निर्वचनैरङ्गाभिनयः कृतो निपुणसाध्यः /
सूचैवोत्पत्तिकृतो विज्ञेयस्त्वङ्कुराभिनयः // ना. शा_२२.४६ //
यत्तु शिरोमुखजङ्घोरुपाणिपादैर्यथाक्रमं क्रियते /
शाखादर्शनमार्गः शाखाभिनयः स विज्ञेयः // ना. शा_२२.४७ //
नाट्यायितमुपचारैर्यः क्रियते ऽभिनयसूचया नाट्ये /
कालप्रकर्षहेतोः प्रवेशकैः संगमो यावत् // ना. शा_२२.४८ //
स्थाने ध्रुवास्वभिनयो यः क्रियते हर्षशोकरोषाद्यैः /
भावरससंप्रयुक्तैर्ज्ञेयं नाट्यायितं तदपि // ना. शा_२२.४९ //
यत्रान्योक्तं वाक्यं सूचाभिनयेन योजयेदन्यः /
तत्संबन्धार्थकथं भवेन्निवृत्त्यङ्कुरः सो ऽथ // ना. शा_२२.५० //
एतेषां तु भवेन्मार्गो यथाभावरसान्वितः /
काव्यवस्तुषु निर्दिष्टो द्वादशाभिनयात्मकः // ना. शा_२२.५१ //
आलापश्च प्रलापश्च विलापः स्यात्तथैव च /
अनुलापो ऽथ संलापस्त्वपलापस्तथैव च // ना. शा_२२.५२ //
सन्देशाश्चातिदेशश्च निर्देशः स्यात्तथापरः /
उपदेशो ऽपदेशश्च व्यपदेशश्च कीर्तितः // ना. शा_२२.५३ //
आभाषणं तु यद्वाक्यमालापो नाम स स्मृतः /
अनर्थकं वचो यत्तु प्रलापः स तु कीर्तितः // ना. शा_२२.५४ //
करुणप्रभवो यस्तु विलापः स तु कीर्तितः /
बहुशो ऽभिहितं वाक्यमनुलाप इति स्मृतः // ना. शा_२२.५५ //
उक्तिप्रत्युक्तिसंयुक्तः संलाप इति कीर्तितः /
पूर्वोक्तस्यान्यथावादो ह्यपलाप इति स्मृतः // ना. शा_२२.५६ //
तदिदं वचनं ब्रूहीत्येष सन्देश उच्यते /
यत्त्वयोक्तं मयोक्तं तत्सो ऽतिदेश इति स्मृतः // ना. शा_२२.५७ //
स एषो ऽहं ब्रवीमीति निर्देश इति कीर्तितः /
व्याजान्तरेण कथनं व्यपदेश इहोच्यते // ना. शा_२२.५८ //
इदं कुरु गृहाणेति ह्युपदेशः प्रकीर्तितः /
अन्यार्थकथनं यत् स्यात् सो ऽपदेशः प्रकीर्तितः // ना. शा_२२.५९ //
एते मार्गास्तु विज्ञेयाः सर्वाभिनययोजकाः /
सप्तप्रकारमेतेषां पुनर्वक्ष्यामि लक्षणम् // ना. शा_२२.६० //
प्रत्यक्षश्च परोक्षश्च तथा कालकृतास्त्रयः /
आत्मस्थश्च परस्थश्च प्रकाराः सप्त एव तु // ना. शा_२२.६१ //
एषा ब्रवीमि नाहं भो वदामीति च यद्वचः /
प्रत्यक्षश्च परोक्षश्च वर्तमानश्च तद्भवेत् // ना. शा_२२.६२ //

अहं करोमि गच्चामि वदामि वचनं तव /
आत्मस्थो वर्तमानश्च प्रत्यक्षश्चैव स स्मृतः // ना. शा_२२.६३ //
करिष्यामि गमिष्यामि वदिष्यामीति यद्वचः /
आत्मस्थश्च परोक्षश्च भविष्यत्काल एव च // ना. शा_२२.६४ //
हता जिता च भग्नाश्च मया सर्वे द्विषद्गणाः /
आत्मस्थश्च परोक्षश्च वृत्तकालश्च स स्मृतः // ना. शा_२२.६५ //
[त्वया हत जिताश्चेति यो वदेन्नाट्यकर्मणि /
परोक्षश्च परस्थश्च वृत्तकालस्तथैव च // ना. शा_२२.६६ //
एष ब्रवीमि कुरुते गच्चतीत्यादि यद्वचः /
परस्थो वर्तमानश्च (प्रत्यक्षश्च) भवेत्तथा // ना. शा_२२.६७ //
स गच्चति करोतीति वचनं यदुताहृतम् /
परस्थं वर्तमानं च परोक्षं चैव तद्भवेत् // ना. शा_२२.६८ //
करिष्यन्ति गमिष्यन्ति वदिष्यन्तीति यद्वचः /
परस्थमेष्यत्कालं च परोक्षं चैव तद्भवेत्] // ना. शा_२२.६९ //
हस्तमन्तरतः कृत्वा यद्वदेन्नाट्यकर्मणि /
आत्मस्थं हृदयस्थं च परोक्षं चैव तन्मतम् // ना. शा_२२.७० //
परेषामात्मनश्चैव कालस्य च विशेषणात् /
सप्तप्रकारस्यास्यैव भेदा ज्ञेया अनेकधा // ना. शा_२२.७१ //
एते प्रयोगा विज्ञेया मार्गाभिनययोजिताः /
एतेष्विह विनिष्पन्नो विविधो ऽभिनयो भवेत् // ना. शा_२२.७२ //
शिरो हस्तकटीवक्षोजङ्घोरुकरणेषु तु /
समः कर्मविभागो यः सामान्याभिनयस्तु सः // ना. शा_२२.७३ //
ललितैर्हस्तसंचारस्तथा मृद्वङ्गचेष्टितैः /
अभिनेयस्तु नाट्यज्ञै रसभावसमन्वितैः // ना. शा_२२.७४ //
अनुद्धतमसंभ्रान्तमनाविद्धाङ्गचेष्टितम् /
लयतालकलापातप्रमाणनियतात्मकम् // ना. शा_२२.७५ //
सुविभक्तपदालापमनिष्ठुरमकाहलम् /
यदीदृशं भवेन्नाट्यं ज्ञेयमाभ्यन्तरं तु तत् // ना. शा_२२.७६ //
एतदेव विपर्यस्तं स्वच्चन्दगतिचेष्टितम् /
अनिबद्धगीतवाद्यं नाट्यं बाह्यमिति स्मृतम् // ना. शा_२२.७७ //
लक्षणाभ्यन्तरत्वाद्धि तदाभ्यन्तरमिष्यते /
शास्त्रबाह्यं भवेद्यत्तु तद्बाह्यमिति भण्यते // ना. शा_२२.७८ //
अनेन लक्ष्यते यस्मात् प्रयोगः कर्म चैव हि /
तस्माल्लक्षणमेतद्धि नाट्ये ऽस्मिन् संप्रयोजितम् // ना. शा_२२.७९ //
अनाचार्योषिता ये च ये च शास्त्रबहिष्कृताः /
बाह्यं प्रयुञ्जते ते तु अज्ञात्वाचार्यकीं क्रियाम् // ना. शा_२२.८० //
शब्दं स्पर्शं च रूपं च रसं गन्धं तथैव च /
इन्द्रियानीन्द्रियार्थांश्च भावैरभिनयेद्बुधः // ना. शा_२२.८१ //
कृत्वा साचीकृतां दृष्टिं शिरः पार्श्वनतं तथा /

तर्जनी कर्णदेशे च बुधः शब्दं विनिर्दिशेत् // ना. शा_२२.८२ //
किञ्चिदाकुञ्चिते नेत्रे कृत्वा भ्रूक्षेपमेव च /
तथांऽसगण्डयोः स्पर्शात् स्पर्शमेवं विनिर्दिशेत् // ना. शा_२२.८३ //
कृत्वा पताकौ मूर्धस्थौ किंचित्प्रचलिताननः /
निर्वर्णयन्त्या दृष्ट्या च रूपं त्वभिनयेद् बुधः // ना. शा_२२.८४ //
किञ्चिदाकुञ्चिते नेत्रे कृत्वोत्फुल्लां च नासिकाम् /
एकोच्च्वासेन चेष्टौ तु रसगन्धौ विनिर्दिशेत् // ना. शा_२२.८५ //
पञ्चानामिन्द्रियार्थानां भावा ह्येते ऽनुभाविनः /
श्रोत्रत्वङ्नेत्रजिह्वानां घ्राणस्य च तथैव हि // ना. शा_२२.८६ //
इन्द्रियार्थाः समनसो भवन्ति ह्यनुभाविनः /
न वेत्ति ह्यमनाः किंचिद्विषयं पञ्चधागतम् // ना. शा_२२.८७ //
मनसस्त्रिविधो भावो विज्ञेयो ऽभिनये बुधैः /
इष्टस्तथा ह्यनिष्टश्च मध्यस्थश्च तथैव हि // ना. शा_२२.८८ //
प्रह्लादनेन गात्रस्य तथा पुलकितेन च /
वदनस्य विकासेन कुर्यादिष्टनिदर्शनम् // ना. शा_२२.८९ //
इष्टे शब्दे तथा रूपे स्पर्शे गन्धे तथा रसे /
इन्द्रियैर्मनसा प्राप्तैः सौमुख्यं संप्रदर्शयेत् // ना. शा_२२.९० //
परावृत्तेन शिरसा नेत्रनासाविकर्षणैः /
चक्षुषश्चाप्रदानेन ह्यनिष्टमभिनिर्दिशेत् // ना. शा_२२.९१ //
नातिहृष्टेन मनसा न चात्यर्थजुगुप्सया /
मध्यस्थनैव भावेन मध्यस्थमभिनिर्दिशेत् // ना. शा_२२.९२ //
तेनेदं तस्य वापीदं स एवं प्रकरोति वा /
परोक्षाभिनयो यस्तु मध्यस्थ इति स स्मृतः // ना. शा_२२.९३ //
आत्मानुभावी यो ऽर्थः स्यादात्मस्थ इति स स्मृतः /
परार्थवर्णना यत्र परस्थः स तु संज्ञितः // ना. शा_२२.९४ //
प्रायेण सर्वभावानां कामान्निष्पत्तिरिष्यते /
स चेच्चागुणसम्पन्नो बहुधा परिकल्पितः // ना. शा_२२.९५ //
धर्मकामो ऽर्थकामश्च मोक्षकामस्तथैव च /
स्त्रीपुंसयोस्तु योगो यः स तु काम इति स्मृतः // ना. शा_२२.९६ //
सर्वस्यैव हि लोकस्य सुखदुःखनिबर्हणः /
भूयिष्ठं दृष्यते कामः स सुखं व्यसनेष्वपि // ना. शा_२२.९७ //
यः स्त्रीपुरुषसंयोगो रतिसंभोगकारकः /
स शृङ्गार इति ज्ञेय उपचारकृतः शुभः // ना. शा_२२.९८ //
भूयिष्ठमेव लोको ऽयं सुखमिच्चति सर्वदा /
सुखस्य हि स्त्रियो मूलं नाना शीलाश्चा ताः पुनः // ना. शा_२२.९९ //
देवदानवगन्धर्वरक्षोनागपतत्रिणाम् /
पिशाचयक्षव्यालानां नरवानरहस्तिनाम् // ना. शा_२२.१०० //
मृगमीनोष्ट्रमकरखरसूकरवाजिनाम् /
महीषाजगवादीनां तुल्यशीलाः स्त्रियः स्मृताः // ना. शा_२२.१०१ //

स्निग्धैरङ्गैरुपाङ्गैश्च स्थिरा मन्दनिमेषिणि /
अरोगा दीप्त्युपेता च दानसत्त्वार्जवान्विता // ना. शा_२२.१०२ //
अल्पस्वेदा समरता स्वल्पभुक् सुरतप्रिया /
गन्धपुष्परता हृद्या देवशीलाङ्गना स्मृता // ना. शा_२२.१०३ //
अधर्मशाठ्याभिरता स्थिरक्रोधातिनिष्ठुरा /
मद्यमांसप्रिअया नित्यं कोपना चातिमानिनी // ना. शा_२२.१०४ //
चपला चातिलुब्धा च परुषा कलहप्रिया /
ईर्ष्याशीला चलस्नेहा चासुरं शीलमाश्रिता // ना. शा_२२.१०५ //
क्रीडापरा चारुनेत्रा नखदन्तैः सुपुष्पितैः /
स्वङ्गी च स्थिरभाषी च मन्दापत्या रतिप्रिया // ना. शा_२२.१०६ //
गीते वाद्ये च नृत्ते च रता हृष्टा मृजावती /
गन्धर्वसत्त्वा विज्ञेया स्निग्धत्वक्केशलोचना // ना. शा_२२.१०७ //
बृहद्व्यायतसर्वाङ्गी रक्तविस्तीर्णलोचना /
खररोमा दिवास्वप्ननिरतात्युच्चभाषिणी // ना. शा_२२.१०८ //
नखदन्तक्षतकरी क्रोधेर्ष्याकलहप्रिया /
निशाविहारशीला च राक्षसं शीलमाश्रिता // ना. शा_२२.१०९ //
तीक्ष्णनासाग्रदशना सुतनुस्ताम्रलोचना /
नीलोत्पलसवर्णा च स्वप्नशीलाऽतिकोपना // ना. शा_२२.११० //
तिर्यग्गतिश्चलारम्भा बहुश्वासातिमानिनी /
गन्धमाल्यासवरतानागसत्त्वाऽङ्गना स्मृता // ना. शा_२२.१११ //
अत्यन्तव्यावृतास्या च तीक्ष्णशीला सरित्प्रिया /
सुरासवक्षीररता बह्वपत्या फलप्रिया // ना. शा_२२.११२ //
नित्यं श्वसनशीलाच तथोद्यानवनप्रिया /
चपला बहुवाक्चीघ्रा शाकुनं सत्त्वमाश्रिता // ना. शा_२२.११३ //
ऊनाधिकाङ्गुलिकरा रात्रौ निष्कुटचारिणि /
बालोद्वेजनशीला च पिशुना क्लिष्टभाषिणि // ना. शा_२२.११४ //
सुरते कुत्सिताचारा रोमशाङ्गी महास्वना /
पिशाचसत्त्वा विज्ञेया मद्यमांसबलिप्रिया // ना. शा_२२.११५ //
स्वप्नप्रस्वेदनाङ्गी च स्थिरशय्यासनप्रिया /
मेधाविनी बुद्धिमती मद्यगन्धामिषप्रिया // ना. शा_२२.११६ //

चिरदृष्टेषु हर्षं च कृतज्ञत्वादुपैति सा /
अदीर्घशायिनी चैव यक्षशीलाऽङ्गना स्मृता // ना. शा_२२.११७ //
तुल्यमानावमाना या परुषत्वक् खरस्वरा /
शठानृतोद्धतकथा व्यालसत्त्वा च पिङ्गदृक् // ना. शा_२२.११८ //
विभक्ताङ्गी कृतज्ञा च गुरुदेवद्विजप्रिया /
धर्मकामार्थनिरता ह्यहङ्काआरविवर्जिता /
सुहृत्प्रिया सुशीला च मानुषं सत्त्वमाश्रिता // ना. शा_२२.१२० //
संहताल्पतनुर्हृष्टा पिङ्गरोमा चलप्रिया /

प्रगल्भा चपला तीक्ष्णा वृक्षारामवनप्रिया // ना. शा_२२.१२१ //
स्वल्पमप्युपकारं तु नित्यं या बहुमन्यते /
प्रसह्यरतिशीला च वानरं सत्त्वमाश्रिता // ना. शा_२२.१२२ //
महाहनुललाटा च शरीरोपचयान्विता /
पिङ्गाक्षी रोमशाङ्गी च गन्धमाल्यासवप्रिया // ना. शा_२२.१२३ //
कोपना स्थिरचित्ता च जलोद्यानवनप्रिया /
मधुराभिरता चैव हस्तिसत्त्वा प्रकीर्तिता // ना. शा_२२.१२४ //
स्वल्पोदरी भग्ननासा तनुजङ्घा वनप्रिया /
चलवीस्तीर्णनयना चपला शीघ्रगामिनी // ना. शा_२२.१२५ //
दिवात्रासपरा नित्यं गीतवाद्यरतिप्रिया /
निवासस्थिरचित्ता च मृगसत्त्वा प्रकीर्तिता // ना. शा_२२.१२६ //
दीर्घपीनोन्नतोरस्का चला नातिनिमेषिणी /
बहुभृत्या बहुसुता मत्स्यसत्त्वा जलप्रिया // ना. शा_२२.१२७ //
लम्बोष्ठी स्वेदबहुला किञ्चिद्विकटगामिनी /
कृशोदरी पुष्पफललवणाम्लकटुप्रिया // ना. शा_२२.१२८ //
उद्बन्धकटिपार्श्वा च खरनिष्ठुरभाषिणी /
अत्युन्नतकटीग्रीवा उष्ट्रसत्त्वाऽटवीप्रिया // ना. शा_२२.१२९ //
स्थूलशीर्षाञ्चितग्रीवा दारितास्या महस्वना /
ज्ञेया मकरसत्त्वा च क्रूरा मत्स्यगुणैर्युता // ना. शा_२२.१३० //
स्थूलजिह्वोष्ठदशना रूक्षत्वक्कटुभाषिणी /
रतियुद्धकरी धृष्टा नखदन्तक्षतप्रिया // ना. शा_२२.१३१ //
सपत्नीद्वेषिणी दक्षा चपला शीघ्रगामिनी /
सरोगा बह्वपत्या च खरसत्त्वा प्रकीर्तिता // ना. शा_२२.१३२ //
दीर्घपृष्ठोदरमुखी रोमशाली बलान्विता /
सुसंक्षिप्तललाटा च कन्दमूलफलप्रिया // ना. शा_२२.१३३ //
कृष्णा दंष्ट्रोत्कटमुखी ह्रस्वोदरशिरोरुहा /
हीनाचारा बह्वपत्या सौकरं सत्त्वमाश्रिता // ना. शा_२२.१३४ //
स्थिरा विभक्तपार्श्वोरुकटीपृष्ठशिरोधरा /
सुभगा दानशीला च ऋजुस्थूलशिरोरुहा // ना. शा_२२.१३५ //
कृशा चञ्चलचित्ता च स्निग्धवाक्चीघ्रगामिनी /
कामक्रोधपरा चैव हयसत्त्वाङ्गना स्मृता // ना. शा_२२.१३६ //
स्थूलपृष्ठाक्षिदशना तनुपार्श्वोदरा स्थिरा /
हरिरोमाञ्चिता रौद्री लोकद्विष्टा रतिप्रिया // ना. शा_२२.१३७. //
किञ्चिदुन्नतवक्त्रा च जलक्रीडावनप्रिया /
बृहल्ललाटा सुश्रोणी माहिषं सत्त्वमाश्रिता // ना. शा_२२.१३८ //
कृशा तनुभुजोरस्का निष्टब्धस्थिरलोचना /
संक्षिप्तपाणिपादा च सूक्ष्मरोमसमाचिता // ना. शा_२२.१३९ //
भयशीला जलोद्विग्ना बह्वपत्या वनप्रिया /
चञ्चला शीघ्रगमना ह्यजसत्त्वा~ङ्गना स्मृता // ना. शा_२२.१४० //

उद्बन्धगात्रनयना विजृम्भणपरायणा /
दीर्घाल्पवदना स्वल्पपाणिपादविभूषिता // ना. शा_२२.१४१ //
उच्चःस्वना स्वल्पनिद्रा क्रोधना सुकृतप्रिया /
हीनाचारा कृतज्ञा च श्वशीला परिकीर्तिता // ना. शा_२२.१४२ //
पृथुपीनून्नतश्रोणी तनुजङ्घा सुहृत्प्रिया /
संक्षिप्तपाणिपादा च दृढारम्भा प्रजाहिता // ना. शा_२२.१४३ //
पितृदेवार्चनरता सत्यशौचगुरुप्रिया /
स्थिरा परिक्लेशसहा गवां सत्त्वं समाश्रिता // ना. शा_२२.१४४ //
नानाशीलाः स्त्रियो ज्ञेयाः स्वं स्वं सत्त्वं समाश्रिताः /
विज्ञाय च यथासत्त्वमुपसेवेत ताः पुनः // ना. शा_२२.१४५ //
उपचारो यथासत्त्वं स्त्रीणामल्पो ऽपि हर्षदः /
महानप्यन्यथायुक्तो नैव तुष्टिकरो भवेत् // ना. शा_२२.१४६ //
यथा संप्रर्थितावाप्त्या रतिः समुपजायते /
स्त्रीपुंसयोश्च रत्यर्थमुपचारो विधीयते // ना. शा_२२.१४७ //
धर्मार्थं हि तपश्चर्या सुखार्थं धर्म इष्यते /
सुखस्य मूलं प्रमदास्तासु सम्भोग इष्यते // ना. शा_२२.१४८ //
कामोपभागो द्विविधो नाट्यधर्मे ऽभिधीयते /
बाह्याभ्यन्तरतश्चैव नारीपुरुषसंश्रयः // ना. शा_२२.१४९ //
आभ्यन्तरः पार्थिवानां स च कार्यस्तु नाटके /
बाह्यो वेश्यागतश्चैव स च प्रकरणे भवेत् // ना. शा_२२.१५० //
तत्र राजोपभोगं तु व्याख्यास्याम्यनुपूर्वशः /
उपचारविधिं सम्यक् कामतन्त्रसमुत्थितम् // ना. शा_२२.१५१ //
त्रिविधा प्रकृतिः स्त्रीणां नानासत्त्वसमुद्भवा /
बाह्या चाभ्यन्तरा चैव स्याद्बाह्याभ्यन्तरापरा // ना. शा_२२.१५२ //
कुलीनाभ्यन्तरा ज्ञेया बाह्या वेश्याङ्गना स्मृता /
कृतशौचा तु या नारी सा बाह्याभ्यन्तरा स्मृता // ना. शा_२२.१५३ //
अन्तःपुरोपचारे तु कुलजा कन्यकापि वा /
न हि राजोपचारे तु बाह्यस्त्रीभोग इष्यते // ना. शा_२२.१५४ //
आभ्यन्तरो भवेद्राज्ञो बाह्यो बाह्यजनस्य च /
दिव्यवेशाङ्गनानां हि राज्ञां भवति सङ्गमः // ना. शा_२२.१५५ //
कुलजाकामितं यच्च तज्ज्ञेयं कन्यकास्वपि /
या चापि वेश्या साप्यत्र यथैव कुलजा तथा // ना. शा_२२.१५६ //
इह कामसमुत्पत्तीर्नानाभावसमुद्भवा /
स्त्रीणां वा पुरुषाणां वा उत्तमाधममध्यमा // ना. शा_२२.१५७ //
श्रवणाद्दर्शनाद्रूपादङ्गलीलाविचेष्टितैः /
मधुरैश्च समालापैः कामः समुपजायते // ना. शा_२२.१५८ //
रूपगुणादिसमेतं कलादिविज्ञानयौवनोपेतम् /
दृष्ट्वा पुरुषविशेषं नारी मदनातुरा भवति // ना. शा_२२.१५९ //
ततः कामयमानानां नृणां स्त्रीणामथापि च /

कामाभावेङ्गितानीह तज्ज्ञः समुपलक्षयेत् // ना. शा_२२.१६० //
ललिता चलपक्ष्मा च तथा च मुकुलेक्षणा /
स्रस्तोत्तरपुटा चैव काम्या दृष्टिर्भवेदिह // ना. शा_२२.१६१ //
[वलितान्ता सलालित्यसंमितैर्व्यञ्जितैरस्तथा /
दृष्टिः सा ललिता नाम स्त्रीणामर्धावलोकने] // ना. शा_२२.१६१ //
ईष्त्संरक्तगण्डस्तु सस्वेदलवचित्रितः /
प्रस्पन्दमानरोमाञ्चो मुखरागो भवेदिह // ना. शा_२२.१६३ //
काम्येनाङ्गविकारेण सकटाक्षनिरीक्षितैः /
तथाभरणसंस्पर्शैः कर्णकण्डुयनैरपि // ना. शा_२२.१६४ //
अङ्गुष्ठाग्रविलिखनैः स्तननाभिप्रदर्शनैः /
नखनिस्तोदनाच्चैव केशसंयमनादपि // ना. शा_२२.१६५ //
वेश्यामेवंविधैर्भावैर्लक्षयेन्मदनातुराम् /
कुलजायास्तथा चैव प्रवक्ष्यामीङ्गितानि तु // ना. शा_२२.१६६ //
प्रहसन्तीव नेत्राभ्यां प्रततं च निरीक्षते /
स्मयते सा निगूढं च वाचं चाधोमुखी वदेत् // ना. शा_२२.१६७ //
स्मितोत्तरा मन्दवाक्या स्वेदाकारनिगूहनी /
प्रस्पन्दिताधरा चैव चकिता च कुलाङ्गना // ना. शा_२२.१६८ //
एवंविधैः कामलिङ्गैरप्राप्तसुरतोत्सवा /
दशस्थानगतं कामं नानाभावैः प्रदर्शयेत् // ना. शा_२२.१६९ //
प्रथमे त्वभिलाषः स्याद् द्वितीये चिन्तनं भवेत् /
अनुस्मृतिस्तृतीये तु चतुर्थे गुणकीर्तनम् // ना. शा_२२.१७० //
उद्वेगः पञ्चमे प्रोक्तो विलापः षष्ठ उच्यते /
उन्मादः सप्तमे ज्ञेयो भवेद्व्याधिस्तथाष्टमे // ना. शा_२२.१७१ //
नवमे जडता चैव दशमे मरणं भवेत् /
स्त्रीपुंसयोरेष विधिर्लक्षणं च निबोधत // ना. शा_२२.१७२ //
व्यवसायात्समारब्धः संकल्पेच्चासमुद्भवः /
समागमोपायकृतः सो ऽभिलाषः प्रकीर्तितः // ना. शा_२२.१७३ //
निर्याति विशति च मुहुः करोति चाकारमेव मदनस्य /
तिष्ठति च दर्शनपथे प्रथमस्थाने स्थिता कामे // ना. शा_२२.१७४ //
केनोपायेन संप्राप्तिः कथं वासौ भवेन्मम /
दूतीनिवेदितैर्भावैरिति चिन्तां निदर्शयेत् // ना. शा_२२.१७५ //
आकेकरार्धविप्रेक्षितानि वलयरशनापरामर्शः /
नीवीनाभ्याः संस्पर्शनं च कार्यं द्वितीये तु // ना. शा_२२.१७६ //
सुमुहुर्मुहुर्निःश्वसितैर्मनोरथविचिन्तनैः /
प्रद्वेषाच्चान्यकार्याणामनुस्मृतिरुदाहृता // ना. शा_२२.१७७ //
नैवासने न शयने धृतिमुपलभते स्वकर्मणि विहस्ता /
तच्चिन्तोपगतत्वात् तृतीयमेव प्रयुञ्जीत // ना. शा_२२.१७८ //
अङ्गप्रत्यङ्गलीलाभिर्वाक्चेष्टाहसितेक्षितैः /
नास्त्यन्यः सदृशस्तेनेत्येतत् स्याद् गुणकीर्तनम् // ना. शा_२२.१७९ //

गुणकीर्तनोल्लुकसनैरश्रुस्वेदापमार्जनैश्चापि /
दूत्यविरहविस्रम्भैरभिनययोगश्चतुर्थे तु // ना. शा_२२.१८० //
आसने शयने चापि न तुष्यति न तिष्ठति /
नित्यमेवोत्सुका च स्यादुद्वेगस्थानमाश्रिता // ना. शा_२२.१८१ //
चिन्तानिःश्वासखेदेन हृद्दाहाभिनयेन च /
कुर्यात्तदेवमत्यन्तमुद्वेगाभिनयेन च // ना. शा_२२.१८२ //
इह स्थित इहासीन इह चोपगतो मया /
इति तैस्तैर्विलपितैर्विलापं संप्रयोजयेत् // ना. शा_२२.१८३ //
उद्विग्नात्यर्थमौत्सुक्यादधृत्या च विलापिनी /
ततस्ततश्च भ्रमति विलापस्थानमाश्रिता // ना. शा_२२.१८४ //
तत्संश्रितां कथां युङ्क्ते सर्वावस्थागतापि हि /
पुंसः प्रद्वेष्टि चाप्यन्यानुन्मादः संप्रकीर्तितः // ना. शा_२२.१८५ //
तिष्ठत्यनिमिषदृष्टिर्दीर्घं निःश्वसिति गच्चति ध्यानम् /
रोदिति विहारकाले नाट्यमिदं स्यात्तथोन्मादे // ना. शा_२२.१८६ //
सामदानार्थसंभोगैः काम्यैः संप्रेषणैरपि /
सर्वैर्निराकृतैः पश्चाद् व्याधिः समुपजायते // ना. शा_२२.१८७ //
मुह्यति हृदयं क्वापि प्रयाति शिरसश्च वेदना तीव्रा /
न धृतिं चाप्युपलभते ह्यष्टममेवं प्रयुञ्जीत // ना. शा_२२.१८८ //
पृष्टा न किञ्चित् प्रब्रते न शृणोति न पश्यति /
हाकष्टवाक्या तूष्णीका जडतायां गतस्मृतिः // ना. शा_२२.१८९ //
अकाण्डे दत्तहुंकारा तथा प्रशिथिलाङ्गिका /
श्वासग्रस्तानना चैव जडताभिनये भवेत् // ना. शा_२२.१९० //
सर्वैः कृतैः प्रतीकारैर्यदी नास्ति समागमः /
कामाग्निना प्रदीप्ताया जायते मरणं ततः // ना. शा_२२.१९१ //
एवं स्थानानि कार्याणि कामतन्त्रं समीक्ष्य तु /
अप्राप्तौ यानि कामस्य वर्जयित्वा तु नैधनम् // ना. शा_२२.१९२ //
विविधैः पुरुषो ऽप्येवं विप्रलम्भसमुद्भवैः /
भावैरेतानि कामस्य नानारूपाणि योजयेत्. // ना. शा_२२.१९३ //
एवं कामयमानानां स्त्रीणा नृणामथापि वा /
सामान्यगुणयोगेन युञ्जीताभिनयं बुधः // ना. शा_२२.१९४ //
चिन्तानिःश्वासखेदेन हृद्दाहाभिनयेन च /
तथानुगमन्नाच्चापि तथैवाध्वनिरीक्षणात् // ना. शा_२२.१९५ //
आकाशवीक्षणाच्चापि तथा दीनप्रभाषणात् /
स्पर्शनान्मोटनाच्चापि तथा सापाश्रयाश्रयात् // ना. शा_२२.१९६ //
एभिर्नानाश्रयोत्पन्नैर्विप्रलम्भसमुद्भवैः /
कामस्थानानि सर्वाणि भूयिष्ठं सम्प्रयोजयेत् // ना. शा_२२.१९७ //
स्रजो भूषणगन्धांश्च गृहाण्युपवनानि च /
कामाग्निना दह्यमानः शीतलानि निषेवते // ना. शा_२२.१९८ //
प्रदह्यमानः कामार्तो बहुस्थानसमर्दितः /

प्रेषयेत्कामतो दूतीमात्मावस्थाप्रदर्शिनीम् // ना. शा_२२.१९९ //
सन्देशं चैव दूत्यास्तु प्रदद्यान्मदनाश्रयम् /
तस्येयं समवस्थेति कथयेद्विनयेन सा // ना. शा_२२.२०० //
अथावेदितभावार्थो रत्युपायं विचिन्तयेत् /
अयं विधिर्विधानज्ञैः कार्यः प्रच्चन्नकामिते // ना. शा_२२.२०१ //
विधिं राजोपचारस्य पुनर्वक्ष्यामि तत्त्वतः /
अभ्यन्तरगतं सम्यक् कामतन्त्रसमुत्थितम् // ना. शा_२२.२०२ //
सुखदुःखकृतान् भावान् नानाशीलसमुत्थितान् /
यान्यान् प्रकुरुते राजा तान्स्तान् लोकानुवर्तते // ना. शा_२२.२०३ //
न दुर्लभाः पार्थिवानां स्त्र्यर्थमाज्ञाकृताः गुणाः /
दाक्षिण्यात्तु समुद्भूतः कामो रतिकरो भवेत् // ना. शा_२२.२०४ //
बहुमानेन देवीनां वल्लभानां भयेन च /
प्रच्चन्नकामितं राज्ञा कार्यं परिजनं प्रति // ना. शा_२२.२०५ //
यद्यप्यस्ति नरेन्द्राणां कामतन्त्रमनेकधा /
प्रच्चन्नाकामितं यत्तु तद्वै रतिकरं भवेत् // ना. शा_२२.२०६ //
यद्वामाभिनिवेशित्वं यतश्च विनिवार्यते /
दुर्लभत्वं च यन्नार्याः सा कामस्य परा रतिः // ना. शा_२२.२०७ //
राज्ञामन्तःपुरजने दिवासम्भोग इष्यते /
वासोअपचारो यश्चैअषां स रात्रौ परिकीर्तितः // ना. शा_२२.२०८ //
परिपाट्यां फलार्थे वा नवे प्रसव एव वा /
दुःखे चैव प्रमोदे च षडेते वासकाः स्मृताः // ना. शा_२२.२०९ //
उचिते वासके स्त्रीनामृतुकाले ऽपि वा नृपैः /
प्रेष्याणामथवेष्टानां कार्यं चैवोपसर्पणम् // ना. शा_२२.२१० //
तत्र वासकसज्जा च विरहोत्कण्ठितापि वा /
स्वाधीनभर्तृका चापि कलहान्तरितापि वा // ना. शा_२२.२११ //
खण्डिता विप्रलब्धा वा तथा प्रोषितभर्तृका /
तथाभिसारिका चैव ज्ञेयास्त्वष्टौ तु नयिकाः // ना. शा_२२.२१२ //
उचिते वासकए या तु रतिसंभोगलालसा /
मण्डनं कुरुते हृष्टा सा वै वासकसज्जिका // ना. शा_२२.२१३ //
अनेककार्यव्यासङ्गाद्यस्या नागच्चति प्रियः /
तदनागतदुःखार्ता विरहोत्कण्ठिता तु सा // ना. शा_२२.२१४ //
सुरतातिरसैर्बद्धो यस्याः पार्श्वे तु नायकः /
सान्द्रामोदगुणप्राप्ता भवेत् स्वाधीनभर्तृका // ना. शा_२२.२१५ //
ईर्ष्याकलहनिष्क्रान्तो यस्या नागच्चति प्रियः /
सामर्षवशसंप्राप्ता कलहान्तरिता भवेत् // ना. शा_२२.२१६ //
व्यासङ्गादुचिते यस्या वासके नागतः प्रियः /
तदनागमदुःखार्ता खण्डिता सा प्रकीर्तिता // ना. शा_२२.२१७ //
यस्या दूतीं प्रियः प्रेष्य दत्त्वा संकेतमेव वा /
नागतः कारणेनेह विप्रलब्धा तु सा भवेत् // ना. शा_२२.२१८ //

नानाकार्याणि सन्धाय यस्या वै प्रोषितः प्रियः /
सारूढालककेशान्ता भवेत् प्रोषितभर्तृका // ना. शा_२२.२१९ //
हित्वा लज्जां तु या श्लिष्टा मदेन मदनेन च /
अभिसारयते कान्तं सा भवेदभिसारिका // ना. शा_२२.२२० //
आस्ववस्थासु विज्ञेया नायिका नाटकाश्रया /
एतासां चैव वक्ष्यामि कामतन्त्रमनेकधा // ना. शा_२२.२२१ //
चिन्तानिःश्वासखेदेन हृद्दाहाभिनयेन च /
सखीभिः सह संलापैरात्मावस्थावलोकनैः // ना. शा_२२.२२२ //
ग्लानिदैन्याश्रुपातैश्च रोषस्यागमनेन च /
निर्भूषणमृजात्वेन दुःखेन रुदितेन च // ना. शा_२२.२२३ //
खण्डिता विप्रलब्धा वा कलहान्तरितापि वा /
तथा प्रोषितकान्ता च भावानेतान् प्रयोजयेत् // ना. शा_२२.२२४ //
विचित्रोज्ज्वलवेषा तु प्रमोदोद्योतिताननना /
उदीर्णशोभा च तथा कार्या स्वाधीनभर्तृका // ना. शा_२२.२२५ //
वेश्यायाः कुलजायायाश्च प्रेष्यायाश्च प्रयोक्तृभिः /
एभिर्भावविशेषैस्तु कर्तव्यमभिसारणम् // ना. शा_२२.२२६ //
समदा मृदुचेष्टा च तथा परिजनावृता /
नानाभरणचित्राङ्गी गच्चेद्वेश्याङ्गना शनैः // ना. शा_२२.२२७ //
संलीना स्वेषु गात्रेषु त्रस्ता विनमिताननना /
अवकुण्ठनसंविता हच्चेत्तु कुलजाङ्गना // ना. शा_२२.२२८ //
मदस्खलितसंलापा विभ्रमोत्फुल्ललोचना /
आविद्धगतिसंचारा गच्चेत्प्रेष्या समुद्धतम् // ना. शा_२२.२२९ //
गत्वा सा चेद्यदा तत्र पश्येत्सुप्तं प्रियं तदा /
अनेन तूपचारेण तस्य कुर्यात्प्रबोधनम् // ना. शा_२२.२३० //
अलङ्कारेण कुलजा वेश्या गन्धैस्तु शीतलैः /
प्रेष्या तु वस्त्रव्यजनैः कुर्वीत प्रतिबोधनम् // ना. शा_२२.२३१ //
कुलाङ्गनानामेवायं नोक्तः कामाश्रयो विधिः /
सर्वावस्थानुभाव्यं हि यस्माद्भवति नाटकम् // ना. शा_२२.२३२ //
नवकामप्रवृत्ताया क्रुद्धाया वा समागमे /
सापदेशैरुपायैस्तु वासकं संप्रयोजयेत् // ना. शा_२२.२३३ //
नानालङ्करवस्त्राणि गन्धमाल्यानि चैव हि /
प्रिययोजितभुक्तानि निषेवेत मुदान्वितः // ना. शा_२२.२३४ //
न तथा भवति मनुष्यो मदनवशः कामिनीमलभमानः /
द्विगुणोपजातहर्षो भवति यथ सङ्गतः प्रियया // ना. शा_२२.२३५ //
विलासभावेङ्गितवाक्यलीलामाधुर्यविस्तारगुणोपपन्नः /
परस्परप्रेमनिरीक्षितेन समागमः कामकृतस्तु कार्यः // ना. शा_२२.२३६ //
ततः प्रवृत्ते मदने उपचारसमुद्भवे /
वासोपचारः कर्तव्यो नायकागमनं प्रति // ना. शा_२२.२३७ //
गन्धमाल्ये गृहीत्वा तु चूर्णवासस्तथैव च /

आदर्शो लीलया गृह्यश्चन्दतो वा पुनः पुनः // ना. शा_२२.२३८ //
वासोपचारे नात्यर्थं भूषणग्रहणं भवेत् /
रशनानूपुरप्रायं स्वनवच्च प्रशस्यते // ना. शा_२२.२३९ //
नाम्बरग्रहणं रङ्गे न स्नानं न विलेपनम् /
नाञ्जनं नाङ्गरागश्च केशसंयमनं तथा // ना. शा_२२.१४० //
नाप्रावृत्ता नैकवस्त्रा न रागमधरस्य तु /
उत्तमा मध्यमा वापि कुर्वीत प्रमदा क्वचित् // ना. शा_२२.२४१ //
अधमानां भवेदेष सर्व एव विधिः सदा /
कारणान्तरमासाद्य तस्मादपि न कारयेत् // ना. शा_२२.२४२ //
प्रेष्यादीनां च नारीणां नराणां वापि नाटके /
भूषणग्रहणं कार्यं पुष्पग्रहणमेव च // ना. शा_२२.२४३ //
गृहीतमण्डना चापि प्रतीक्षेत प्रियागमम् /
लीलया मण्डितं वेषं कुर्याद्यन्न विरुध्यते // ना. शा_२२.२४४ //
विधिवद्वासकं कुर्यान्नायिका नायकागमे /
प्रतीक्षमाणा च ततो नालिकाशब्दमादिशेत् // ना. शा_२२.२४५ //
श्रुत्वा तु नालिकाशब्दं नायकागमविक्लवा /
विषण्णा वेपमाना च गच्चेत्तोरणमेव च // ना. शा_२२.२४६ //
तोरणं वामहस्तेन कवाटं दक्षिणेन च /
गृहीत्वा तोरणाश्लिष्टा संप्रतीक्षेत नायकम् // ना. शा_२२.२४७ //
शङ्कां चिन्तां भयं चैव प्रकुर्यात्तोरणाश्रिता /
अदृष्ट्वा रमणं नारी विषण्णा च क्षणं भवेत् // ना. शा_२२.२४८ //
दीर्घं चैव विनिःश्वस्य नयनाम्बु निपातयेत् /
सन्नं च हृदयं कृत्वा विसृजेतदङ्गमासने // ना. शा_२२.२४९ //
व्याक्षेपाद्विमृशेच्चापि नायकागमनं प्रति /
तैस्तैर्विचारणोपायैः शुभाशुभसमुत्थितैः // ना. शा_२२.२५० //
गुरुकार्येण मित्रैर्वा मन्त्रिणा राज्यचिन्तया /
अनुबद्धः प्रियं किं नु वृतो वल्लभयापि वा // ना. शा_२२.२५१ //
उत्पातान्निर्दिशेच्चापि शुभाशुभसमुत्थितान् /
निमितैरात्मसंस्थैस्तु स्फुरितैः स्पन्दिअतैस्तथा // ना. शा_२२.२५२ //
शोभनेषु तु कार्येषु निमित्तं वामतः स्त्रियाः /
अनिष्टेष्वथ सर्वेषु निमित्तं दक्षिणं भवेत् // ना. शा_२२.२५३ //
सव्यं नेत्रं ललाटं च भ्रूनासोष्ठं तथैव च /
उरुबाहुस्तनं चैव स्फुरेद्यदि समागमः // ना. शा_२२.२५४ //
एतेषमन्यथाभावे दुर्निमितं विनिर्दिशेत् /
दर्शने दुर्निमितस्य मोहं गच्चेत्क्षणं ततः // ना. शा_२२.२५५ //
अनागमे नायकस्य कार्यो गण्डाश्रयः करः /
भूषणे चाप्यवज्ञानं रोदनं च समाचरेत् // ना. शा_२२.२५६ //
अथ चेच्चोभनं तत्स्यान्निमित्तं नायकागमे /
सूच्यो नायिकयासन्नो गन्धाघ्राणेन नायकः // ना. शा_२२.२५७ //

दृष्ट्वा चोत्थाय संहृष्टा प्रत्युद्गच्चेद्यथाविधि /
ततः कान्तं निरीक्षेत प्रहर्षोत्फुल्ललोचना // ना. शा_२२.२५८ //
सखीस्कन्धार्पितकरा कृत्वा स्थानकमायतम् /
दर्शयेत ततः कान्तं सचिह्नं सरसव्रणम् // ना. शा_२२.१५९ //
यदि स्यादपराद्धस्तु कृतैस्तैस्तैरुपक्रमैः /
उपालम्भकृअतैर्वाक्यैरुपालभ्यस्तु नायकः // ना. शा_२२.२६० //
मानापमानसंमोहैरवहित्थभयक्रमैः /
वचनस्य समुत्पत्तिः स्त्रीणामीर्ष्याकृता भवेत् // ना. शा_२२.२६१ //
विस्रंभस्नेहरागेषु सन्देहे प्रणये तथा /
परितोषे च घर्षे च दाक्षिण्याक्षेपविभ्रमे // ना. शा_२२.२६२ //
धर्मार्थकामयोगेषु प्रच्चन्नवचनेषु च /
हास्ये कुतूहले चैव संभ्रमे व्यसने तथा // ना. शा_२२.२६३ //
स्त्रीपुंसयोः क्रोधकृते पृथङ्मिश्रे तथापि वा /
अनाभाष्यो ऽपि संभाष्यः प्रिय एभिस्तु कारणैः // ना. शा_२२.२६४ //
यत्र स्नेहो भवेत्तत्र हीर्ष्या मदनसंभवा /
चतस्रो योनयस्तस्याः कीर्त्यमाना निबोधत // ना. शा_२२.२६५ //
वैमनस्यं व्यलीकं च विप्रियं मन्युरेव च /
एतेषां संप्रवक्ष्यामि लक्षणानि यथाक्रमम् // ना. शा_२२.२६६ //
निद्राखेदालसगतिं सचिह्नं सरसव्रणम् /
एवविधं प्रियं दृष्ट्वा वैमनस्यं भवेत् स्त्रियाः // ना. शा_२२.२६७ //
निद्राभ्यसूयितावेक्षणेन रोषप्रकम्पमानाङ्ग्या /
साध्विति सुष्ठ्विति वचनैः शोभत इत्येवमभिनेयम् // ना. शा_२२.२६८ //
बहुधा वार्यमाणो ऽपि यस्तस्मिन्नेव दृश्यते /
संघर्षमत्सरात्तत्र व्यलीकं जायते स्त्रियाः // ना. शा_२२.२६९ //
कृत्वोरसि वामकरं दक्षिणहस्तं तथा विधुन्वन्त्या /
चरणविनिष्ठम्भेन च कार्यो ऽभिनयो व्यलीके तु // ना. शा_२२.२७० //
जीवन्त्या त्वयि जीवामि दासो ऽहं त्वं च मे प्रिया /
उक्त्वैवं यो ऽन्यथा कुर्याद्विप्रियं तत्र जायते // ना. शा_२२.२७१ //
दूतीलेखप्रतिवचनभेदनैः क्रोधहसितरुदितैश्च /
विप्रियकरणे ऽभिनयः सशिरःकम्पैश्च कर्तव्यः // ना. शा_२२.२७२ //
प्रतिपक्षसकाशात्तु यः सौभाग्यविकत्थनः /
उपसर्पेत् सचिन्ह्नस्तु मन्युस्तत्रोपजायते // ना. शा_२२.२७३ //
वलयपरिवर्तनैरथ सुशिथलमुत्क्षेपेणेन रशनायाः /
मन्युस्त्वभिनेतव्यः सशङ्कितं बाष्पपूर्णाक्ष्या // ना. शा_२२.२७४ //
दृष्ट्वा स्थितं प्रियतमं सशङ्कितं सापराधमतिलज्जम् /
ईर्ष्यावचनसमुत्थैः खेदयितव्यो ह्युपालम्भैः // ना. शा_२२.२७५ //
न च निष्ठुरमभिभाष्यो न चाप्यतिक्रोधनस्तु परिहासः /
बाष्पोन्मिश्रैर्वचनैरात्मोपन्यासससंयुक्तैः // ना. शा_२२.२७६ //
मध्याङ्गुल्यङ्गुष्ठाग्रविच्यवात्पाणिनोरसि कृतेन /

उद्वर्तितनेत्रतया प्रततैरभिवीक्षणैश्चापि // ना. शा_२२.२७७ //
कटिहस्तविवर्तनया विच्चिन्नतया तथाञ्जलेः करणात् /
मूर्धभ्रमणनिहञ्चितनिपातसंश्लेअष्णाच्चापि // ना. शा_२२.२७८ //
अवहित्थवीक्षणाद्वा अङ्गुलिभङ्गेन तर्जनैललितैः /
एभिर्भावविशेषैरनुनयनेष्वभिनयः कार्यः // ना. शा_२२.२७९ //
शोभसे साधु दृष्टो ऽसि गच्च त्वं किंं विलम्बसे /
मा मां स्प्राक्षीः प्रिया यत्र तत्र या ते हृदि स्थिता // ना. शा_२२.२८० //
गच्चेत्युक्त्वा परावृत्य विनिवृत्तान्तरेण तु /
केनचिद्वचनार्थेन प्रहर्षं योजयेत्पुनः // ना. शा_२२.२८१ //
रभसग्रहणाच्चापि हस्ते वस्त्रे च मूर्धनि /
कार्यं प्रसादनं नार्या ह्यपराधं समीक्ष्य तु // ना. शा_२२.२८२ //
हस्ते वस्त्रे ऽथ केशान्ते नार्याप्यथ गृहीतया /
कान्तमेवोपसर्पन्त्या कर्तव्यं मोक्षणं शनैः // ना. शा_२२.२८३ //
गृहीतायाथ केशान्ते हस्ते वस्त्रे ऽथवा पुनः /
हुं मुञ्चेत्युपसर्पन्त्या वाच्यः स्पर्शालसं प्रियः // ना. शा_२२.२८४ //
पादाग्रस्थितया नार्या किंचित्कुट्टमितोत्कटम् /
अश्वक्रान्तेन कर्तव्यं केशानां मोक्षणं शनैः // ना. शा_२२.२८५ //
अमुच्यमाने केशान्ते संजातस्वेदलेशया /
हं हु मुञ्चापसर्पेति वाच्यः स्पर्शालसाङ्गया // ना. शा_२२.२८६ //
गच्चेति रोषवाक्येन गत्वा प्रतिनिवृत्य च /
केनचिद्वचनार्थेन वाच्यं यास्यसि नेति च // ना. शा_२२.२८७ //
विधूननेन हस्तेन हुंकारं संप्रयोजयेत् /
स चावधूनने कार्यः शपथैर्व्याज एव च // ना. शा_२२.२८८ //
अक्ष्णोः संवरणे कार्यं पृष्ठतश्चोपगूहनम् /
नार्यास्त्वपहृते वस्त्रे दीपच्चादनमेव च // ना. शा_२२.२८९ //
तावत् खेदयितव्यस्तु यावत्पादगतो भवेत् /
ततश्चरणयोर्याते कुर्याद्दूतीनिरीक्षणम् // ना. शा_२२.२९० //
उत्थाप्यालिङ्गयेच्चैव नायिका नायकं ततः /
रतिभोगगता हृष्टा शयनाभिमुखी व्रजेत् // ना. शा_२२.२९१ //
एतद्गीतविधानेन सुकुमारेण योजयेत् /
यदा शृङ्गारसंयुक्तं रतिसम्भोगकारणम् // ना. शा_२२.२९२ //
यदा चाकाशपुरुषपरस्थवचनाश्रयम् /
भवेत्काव्यं तदा ह्येष कर्तव्यो ऽभिनयः स्त्रिया // ना. शा_२२.२९३ //
यदन्तपुरसम्बन्धं कार्यं भवति नाटके /
शृङ्गाररससंयुक्तं तत्राप्येष विधिर्भवेत् // ना. शा_२२.२९४ //
न कार्यं शयनं रङ्गे नाट्यधर्मं विजानता /
केनचिद्वचनार्थेन अङ्कच्चेदो विधीयते // ना. शा_२२.२९५ //
यद्वा शयीतार्थवशादेकाकी सहितो ऽपि वा /
चुम्बनालिङ्गनं चैव तथ गुह्यं च यद्भवेत् // ना. शा_२२.२९६ //

दन्तच्चेद्यं नखच्चेद्यं नीवीस्रंसनमेव च /
स्तनान्तरविमर्दं च रङ्गमध्ये न कारयेत् // ना. शा_२२.२९७ //
भोजनं सलिलक्रीडा तथा लज्जाकरं च यत् /
एवंविधं भवेद्यद्यत्तद्रङ्गे न कारयेत् // ना. शा_२२.२९८ //
पितापुत्रस्नुषाश्वश्रूदृश्यं यस्मात्तु नाटकम् /
तस्मादेतानि सर्वाणि वर्जनीयानि यत्नतः // ना. शा_२२.२९९ //
वाक्यैः सातिशयैः श्रव्यैर्मधुरैर्नातिनिष्ठुरैः /
हितोपदेशसंयुक्तैस्तज्ज्ञः कुर्यात्तु नाटकम् // ना. शा_२२.३०० //
एवमन्तःपुरकृतः कार्यस्त्वभिनयो बुधः /
समागमे ऽथ नारीणां वाच्यानि मदनाश्रये // ना. शा_२२.३०१ //
प्रियेषु वचनानीह यानि तानि निबोधत /
प्रिअयः कान्तो विनीतश्च नाथः स्वाम्यथ जीवितम् // ना. शा_२२.३०२ //
नन्दनश्चेत्यभिप्रीते वचनानि भवन्ति हि /
दुःशीलो ऽथ दुराचारः शठो वामो विकत्थनः // ना. शा_२२.३०३ //
निर्लज्जो निष्ठुरश्चैअव प्रियः क्रोधे ऽभिधीयते /
यो विप्रियं न कुरुते न चायुक्तं प्रभाषते // ना. शा_२२.३०४ //
तथार्जवसमाचारः स प्रियस्त्वभिधीयते /
अन्यनारीसमुद्भूतं चिह्नं यस्य न दृष्यते // ना. शा_२२.३०५ //
अधरे वा शरीरे वा स कान्त इति भाष्यते /
संक्रुद्धे ऽपि हि यो नार्या नोत्तरं प्रतिपद्यते // ना. शा_२२.३०६ //
परुषं वा न वदति विनीतः साऽभिधीयते /
हितैषी रक्षणे शक्तो न मानी न च मत्सरी // ना. शा_२२.३०७ //
सर्वकार्येष्वसंमूढः स नाथ इति संज्ञितः /
सामदानार्थसंभोगैस्तथा लालनपालनैः // ना. शा_२२.३०८ //
नारीं निषेवते यस्तु स स्वामीत्यभिधीयते /
नारीप्सितैरभिप्रायैर्निपुणं शयनक्रियाम् // ना. शा_२२.३०९ //
करोति यस्तु संभोगे स जीवितमिति स्मृतः /
कुलीनो धृतिमान्दक्षो दक्षिणो वाग्विशारदः // ना. शा_२२.३१० //
श्लाघनीयः सखीमध्ये नन्दनः सो ऽभिधीयते /
एते वचनविन्यासा रतिप्रीतिकराः स्मृताः // ना. शा_२२.३११ //
तथा चाप्रीतिवाक्यानि गदतो मे निबोधत /
निष्ठुरश्चाहिष्णुश्च मानि धृष्टो विकत्थनः // ना. शा_२२.३१२ //
अनवस्थितचित्तश्च दुःशील इति स स्मृतः /
ताडनं बन्धनं चापि यो विमृश्य समाचरेत् // ना. शा_२२.३१३ //
तथा परुषवाक्यश्च दुराचारः स तन्यते /
वाचैअव मधुरो यस्तु कर्मण नोपपादकः // ना. शा_२२.३१४ //
योषितः किञ्चिदप्यर्थं स शठः परिभाष्यते /
वार्यते यत्र यत्रार्थे तत्तदेव करोति यः // ना. शा_२२.३१५ //
विपरीतनिवेशी च स वाम इति संज्ञितः /

सरसव्रणचिह्नो यः स्त्रीसौभाग्यविकत्थनः // ना. शा_२२.३१६ //
अतिमानी तथा स्तब्धो विकत्थन इति स्मृतः /
वार्यमाणो दृढतरं यो नारीमुपसर्पति // ना. शा_२२.३१७ //
सचिह्नाः सापराधश्च स निर्लज्ज इति स्मृतः /
यो ऽपराद्धस्तु सहसा नारीं सेवितुमिच्चति // ना. शा_२२.३१८ //
अप्रसादनबुद्धिश्च निष्ठुरः सो ऽभिधीयते /
एते वचनविन्यासाः प्रियाप्रियविभाषिताः // ना. शा_२२.३१९ //
नर्तकीसंश्रिताः कार्या बहवो ऽन्ये ऽपि नाटके /
एष गीतविधाने तु सुकुमारे विधिर्भवेत् // ना. शा_२२.३२० //
शृङ्गाररससंभूतो रतिसंभोगखेदनः /
यच्चैवाकाशपुरुषं परस्थवचनाश्रयम् // ना. शा_२२.३२१ //
शृङ्गार एवं वाच्यं स्यात्तत्राप्येष क्रमो भवेत् /
यद्वा पुरुसंबन्धं कार्यं भवति नाटके // ना. शा_२२.३२२ //
शृङ्गाररससंयुक्तं तत्राप्येष क्रमो भवेत् /
एवमन्तःपुरगतः प्रयोज्यो ऽभिनयो भवेत् // ना. शा_२२.३२३ //
दिव्याङ्गनानां तु विधिं व्याख्यास्यम्यनुपूर्वशः /
नित्यमेवोज्वलो वेषो नित्यं प्रमुदितं मनः // ना. शा_२२.३२४ //
नित्यमेव सुखः कालो देवानां ललिताश्रयः /
न चैर्ष्या नैव च क्रोधो नासूया न प्रसादनम् // ना. शा_२२.३२५ //
दिव्यानां दृष्यते पुंसां शृङ्गारे योषितां तथा /
ये भावा मानुषाणां स्युर्यदङ्गं यच्च चेष्टितम् // ना. शा_२२.३२६ //
सर्वं तदेव कर्तव्यं दिव्यैर्मानुषसङ्गमे /
यदा मानुषसंभोगो दिव्यानां योषितां भवत् // ना. शा_२२.३२७ //
तदा सर्वाः प्रकर्तव्या ये भावा मानुषाश्रयाः /
शापभ्रंशात्तु दिव्यानां तथा चापत्यलिप्सया // ना. शा_२२.३२८ //
कार्यो मानुषसंयोगः शृङ्गाररससंश्रयः /
पुष्पैर्भूषणजैः शब्दैरदृश्यापि प्रलोभयेत् // ना. शा_२२.३२९ //
पुनः संदर्शनं दत्त्वा क्षणादन्तरिता भवेत् /
वस्त्राभरणमाल्याद्यैर्लेखसंप्रेषणैरपि // ना. शा_२२.३३० //
ईदृशैरुपचारैस्तु समुन्माद्यस्तु नायकः /
उन्मादनात्समुद्भूतः कामो रतिकरो भवेत् // ना. शा_२२.३३१ //
स्वभावोपगतो यस्तु नासावत्यर्थभाविकः /
एवं राजोपचारो हि कर्तव्यो ऽभ्यन्तराश्रयः // ना. शा_२२.३३२ //
बाह्यमप्युपचारं तु प्रवक्ष्याम्यथ वैशिके /

इति भारतीये नाट्यशास्त्रे सामान्याभिनयो नामाध्यायो द्वाविंशः

---

अथ त्रयोविंशो ऽध्यायः

विशेषयेत्कलाः सर्वा यस्मात्तस्मात्तु वैशिकः /
वेशोपचारे साधुर्वा वैशिकः परिकीर्तितः // ना. शा_२३.१ //
यो हि सर्वकलोपेतः सर्वशिल्पविचक्षणः /
स्त्रीचित्तग्रहणाभिज्ञो वैशिकः स भवेत्पुमान् // ना. शा_२३.२ //
गुणस्तस्य तु विज्ञेयाः स्वशरीरसमुत्थिताः /
आहार्याः सहजाश्चैव त्रयस्त्रिंशत्समासतः // ना. शा_२३.३ //
शास्त्रविच्चिल्पसंपन्नो रूपवान् प्रियदर्शनः
विक्रान्तो धृतिमांश्चैव वयोवेषकुलान्वितः // ना. शा_२३.४ //
सुरभिर्मधुरस्त्यागि सहिष्णुरविकत्थनः
अशङ्कितः प्रियाभाषी चतुरः शुभदः शुचिः // ना. शा_२३.५ //
कामोपचारकुशलो दक्षिणो देशकालवित् /
अदीनवाक्यः स्मितवान् वाग्मी दक्षः प्रियंवदः // ना. शा_२३.६ //
स्त्रीलुब्धाः संविभागी च श्रद्धधानो दृढस्मृतिः /
गम्यासु चाप्यविस्रम्भी मानी चेति हि वैशिकः // ना. शा_२३.७ //
अनुयुक्तः शुचिर्दक्षो दक्षिणः प्रतिपत्तिमान् /
भवेच्चित्राभिधायी च वयस्यस्तस्य तद्गुणः // ना. शा_२३.८ //
विज्ञानगुणसंपना कथिनी लिङ्गिनी तथा /
प्रातिवेश्या सखी दासी कुमारी कारुशिल्पिनी // ना. शा_२३.९ //
धात्री पाषण्डिनी चैव तथा रङ्गोपजीविनी /
प्रोत्साहने ऽथकुशला मधुरकथा दक्षिणाथकालज्ञा // ना. शा_२३.१० //
लडहा संवृतमन्त्रा दूती त्वेभिर्गुणैः कार्या /
तयाप्युत्साहनं कार्यं नानादर्शितकारणम् // ना. शा_२३.११ //
यथोक्तकथनं चैव तथा भावप्रदर्शनम् /
न जडं रूपसम्पन्नं नार्थवन्तं न चातुरम् // ना. शा_२३.१२ //
दूतं वाऽप्यथवा दूतीं बुधः कुर्यात्कदाचन /
कुलभोगधनाधिक्यैः कृत्वाधिकविकत्थनम् // ना. शा_२३.१३ //
दूती निवेदयेत्काममर्थांश्चैवानुवर्णयेत् /
न चाकामप्रवृत्तायाः कृद्धाया वापि सङ्गमः // ना. शा_२३.१४ //
नानुपायः प्रकर्तव्यो दूत्या हि पुरुषाश्रयः /
उत्सवे रत्रिसञ्चार उद्याने मित्रवेश्मनि // ना. शा_२३.१५ //
धात्रिगृहेषु सख्या वा तथा चैव निमन्त्रणे /
व्याधितव्यपदेशेन शुन्यागारनिवेशने // ना. शा_२३.१६ //
कार्यः समागमो न्?णां स्त्रीभिः प्रथमसङ्गमे /
एवं समागमं कृत्वा सोपायं विधिपूर्वकम् // ना. शा_२३.१७ //
अनुरक्ता विरक्ता वा लिङ्गाकारैस्तु लक्षयेत् /
स्वभावभावातिशयैर्नारी या मदनाश्रया // ना. शा_२३.१८ //
करोति निभृतां लीलां नित्यं सा मदनातुरा /
सखीमध्ये गुणान् ब्रूते स्वधनं च प्रयच्चति // ना. शा_२३.१९ //

पूजयत्यस्य मित्राणि द्वेष्टि शत्रुजनं सदा /
गमागमे सखीनां या हृष्टा भवति चाधिकम् // ना. शा_२३.२० //
तुष्यत्यस्य कथाभिस्तु सस्नेहं च निरीक्षते /
सुप्ते तु पश्चात् स्वपिति चुम्बिता प्रतिचुम्बति // ना. शा_२३.२१ //
उत्तिष्ठत्यपि पूर्वं च तथा क्लेशसहापि च /
उत्सवे मुदिता या च व्यसने या च दुःखिता // ना. शा_२३.२२ //
एवंविधैर्गुणैर्युक्ता त्वनुरक्ता तु सा स्मृता /
विरक्तायास्तु चिन्हानि चुम्बिता नाभिचुम्बति // ना. शा_२३.२३ //

इति भारतीये नाट्यशास्त्रे त्रयोविंशः

---

चतुर्विंशो ऽध्यायः

समासतस्तु प्रकृतिस्त्रिविधा परिकीर्तिता /
पुरुषाणामथ स्त्रीणामुत्तमाधममध्यमा // ना. शा_२४.१ //
जितेन्द्रिय ज्ञानवती नानाशिल्पविचक्षणा /
दक्षिणाधमहालक्ष्या भीतानां परिसान्त्वनी // ना. शा_२४.२ //
नानाशास्त्रार्थसंपन्ना गाम्भीर्यौदार्यशालिनी /
स्थैर्यत्यागगुणोपेता ज्ञेया प्रकृतिरुत्तमा // ना. शा_२४.३ //
लोकोपचारचतुरा शिल्पशास्त्रविशारदा /
विज्ञानमाधुर्ययुता मध्यमा प्रकृतिः स्मृता // ना. शा_२४.४ //
रूक्षवाचो ऽथ दुःशीलाः कुसत्त्वाः स्थूलबुद्धयः /
क्रोधनाघातकाश्चैव मित्रघ्नाश्छिद्रमानिनः // ना. शा_२४.५ //
पिशुनास्तूद्धतैर्वाक्यैरकृतज्ञास्तथालसाः /
मान्यामान्या विशेषज्ञा स्त्रीलोलाः कलहप्रियाः // ना. शा_२४.६ //
सूचकाः पापकर्माणः परद्रव्यापहारिणः /
एभिर्दोषैस्तुसंपन्ना भवन्तीहाधमा नराः // ना. शा_२४.७ //
एवं तु शीलतो न्?णां प्रकृतिस्त्रिविधा स्मृता /
स्त्रीणां पुनश्च प्रकृतिं व्याख्यास्याम्यनुपूर्वशः // ना. शा_२४.८ //
मृदुभाबा चाचपला स्मितभाषिण्यनिष्ठुरा /
गुरूणां वचने दक्षा सलज्जा विनयान्विता // ना. शा_२४.९ //
रूपाभिजनमाधुर्यैर्गुणैः स्वाभाविकेर्युता /
गाम्भीर्यधैर्यसम्पन्ना विज्ञेया प्रमदोत्तमा // ना. शा_२४.१० //
नात्युत्कृष्टैरनिखिलैरेभिरेवान्विता गुणैः /
अल्पदोषानुविद्धा च मध्यमा प्रकृतिः स्मृता // ना. शा_२४.११ //
अधमा प्रकृतिर्या तु पुरुषाणां प्रकीर्तिता /
विज्ञेया सैव नारीणामधमानां समासतः // ना. शा_२४.१२ //
नपुंसकस्तु विज्ञेयः संकीर्णो ऽधम एव च /

प्रेष्यादिरपि विज्ञेया संकीर्णा प्रकृतिर्द्विजाः // ना. शा_२४.१३ //
शकारश्च विटश्चैव ये चान्येप्येवमादयः /
संकीर्णास्ते ऽपि विज्ञेया ह्यधमा नाटके बुधैः // ना. शा_२४.१४ //
एता ज्ञेयाः प्रकृतयः पुरुषस्त्रीनपुंसकैः /
आसां तु संप्रवक्ष्यामि विधानं शीलसंश्रयम् // ना. शा_२४.१५ //
अत्र चत्वार एव स्युर्नायकाः परिकीर्तिताः /
मध्यमोत्तमप्रकृतौ नानालक्षणलक्षिताः // ना. शा_२४.१६ //
धीरोद्धता धीरललिता धीरोदात्तास्तथैव च /
धीरप्रशान्तकाश्चैव नायकाः परिकीर्तिताः // ना. शा_२४.१७ //
देवा धीरोद्धता ज्ञेयाः स्युर्धीरललिता नृपाः /
सेनापतिरमात्यश्च धीरोदात्तौ प्रकीर्तितौ // ना. शा_२४.१८ //
धीरप्रशान्ता विज्ञेया ब्राह्मणा वाणिजस्तथा /
एतेषां तु पुनर्ज्ञेयाश्चत्वारस्तु विदूषकः // ना. शा_२४.१९ //
लिंगी द्विजो राजजीवी शिष्यश्चेति यथाक्रमम् /
देवक्षितिभृतामात्यब्राह्मणानां प्रयोजयेत् // ना. शा_२४.२० //
विप्रलंभसुहृदोमी संकथालापपेशलाः /
व्यसनी प्राप्य दुःखं वा युज्यते ऽभ्युदयेन यः // ना. शा_२४.२१ //
तथा पुरुषमाहुस्तं प्रधानं नायकं बुधाः /
यत्रानेकस्य भवतो व्यसनाभ्युदयौ पुनः // ना. शा_२४.२२ //
सपुष्टौ यत्र तौ स्यातां न भवेत्तत्र नायकः /
दिव्या च नृपपत्नी च कुलस्त्री गणिका तथा // ना. शा_२४.२३ //
एतास्तु नायिका ज्ञेय नानाप्रकृतिलक्षणाः /
धीरा च ललिता च स्यादुदात्ता निभृता तथा // ना. शा_२४.२४ //
दिव्या राजाङ्गनाश्चैव गुणैर्युक्ता भवन्ति हि /
उदात्ता निभृता चैव भवेत्तु कुलजाङ्गना // ना. शा_२४.२५ //
ललिते चाभ्युदात्ते च गणिकाशिल्पकारिके /
प्रकृतीनां तु सर्वासामुपचाराद् द्विधा स्मृताः // ना. शा_२४.२६ //
बाह्यश्चाभ्यन्तरश्चैव तयोर्वक्ष्यामि लक्षणम् /
तत्र राजोपचारो यो भवेदाभ्यन्तरो हि सः // ना. शा_२४.२७ //
ततो वाक्योपचारस्तु यस्य बाह्यः स उच्यते /
अथ राजोपचारे च राज्ञामन्तःपुराश्रितम् // ना. शा_२४.२८ //
स्त्रीविभागं प्रवक्ष्यामि विभक्तमुपचारतः /
राजोपचारं वक्ष्यामि ह्यन्तःपुरसमाश्रयम् // ना. शा_२४.२९ //
महादेवी तथा देव्यः स्वामिन्यः स्थापिता अपि /
भोगिन्यः शिल्पकारिण्यो नाटकीयाः सनर्तकाः // ना. शा_२४.३० //
अनुचारिकाश्च विज्ञेयास्तथा च परिचारिकाः /
तथा संचारिकाश्चैव तथा प्रेषणकारिकाः // ना. शा_२४.३१ //
महत्तर्यः प्रतीहार्यः कुमार्यः स्थविरा अपि /
आयुक्तिकाश्च नृपतेरयमन्तःपुरो जनः // ना. शा_२४.३२ //

अत्र मूर्धाभिषिक्ता या कुलशीलसमन्विता /
गुणैर्युक्ता वयस्स्था च मध्यस्था क्रोधना तथा // ना. शा_२४.३३ //
मुक्तेर्ष्या नृपशीलज्ञा सुखदुःखसहा समा /
शान्तिस्वस्त्ययनैर्भर्तुस्सततं मङ्गलैषिणी // ना. शा_२४.३४ //
शान्ता पतिव्रता धीरा अन्तःपुरहिते रता /
एभिर्गुणैस्तु संयुक्ता महदेवीत्युदाहृता // ना. शा_२४.३५ //
एभिरेव गुणैर्युक्तास्तत्संस्कारविवर्जिताः /
गर्विताश्चातिसौभाग्याः पतिसंभोगतत्पराः // ना. शा_२४.३६ //
शुचिनित्योज्वलाकाराः पतिपक्षाभ्यसूयकाः /
वयोरूपगुणाढ्या यास्ता देव्य इति भाषिताः // ना. शा_२४.३७ //
सेनापतेरमात्यानां भृत्यानामथवा पुनः /
भवेयुस्तनया यास्तु प्रतिसम्मानवर्जिताः // ना. शा_२४.३८ //
शीलरूपगुणैर्यास्तु संपन्ना नृपतेर्हिताः /
स्वगुणैर्लब्धसम्माना स्वामिन्य इति ताः स्मृताः // ना. शा_२४.३९ //
रूपयौवनशालिन्यः कर्कशा विभ्रमान्विताः /
रतिसंभोगकुशलाः प्रतिपक्षाभ्यसूयकाः // ना. शा_२४.४० //
दक्षा भर्तुश्च चित्तज्ञा गन्धमाल्योज्वलास्सदा /
नृपतेश्चन्दवर्तिन्यो न हीर्ष्यामानगर्विताः // ना. शा_२४.४१ //
उत्थिताश्च प्रमत्ताश्च त्यक्तालस्या न निष्ठुराः /
मान्यामान्यविशेषज्ञाः स्थापिता इति ताः स्मृताः // ना. शा_२४.४२ //
कुलशीललब्धपूजामृदवो नातिचोद्भटाः /
मध्यस्था निभृताः क्षान्ता भोगिन्य इति ताः स्मृताः // ना. शा_२४.४३ //
नानाकलाविशेषज्ञा नानाशिल्पविचक्षणाः /
गन्धपुष्पविभागज्ञा लेख्यालेख्यविकल्पिकाः // ना. शा_२४.४४ //
शयनासनभागज्ञाश्चतुरा मधुरास्तथा /
दक्षाः सौम्याः स्फुटाः श्लिष्टा निभृताः शिल्पकारिकाः // ना. शा_२४.४५ //
ग्रहमोक्षलयज्ञा या रसभावविकल्पिकाः /
चतुरानाट्यकुशलाश्चोहापोहविचक्षणाः // ना. शा_२४.४६ //
रूपयौवनसंपन्ना नाटकीयास्तु ताः स्मृताः /
हेलाभावविशेषाढ्या सत्वेनाभिनयेन च // ना. शा_२४.४७ //
माधुर्येन च संपन्ना ह्यातोद्यकुशला तथा /
अङ्गप्रत्यङ्गसंपन्ना चतुष्षष्ठिकलान्विता // ना. शा_२४.४८ //
चतुराः प्रश्रयोपेताः स्त्रीदोषैश्च विवर्जिताः /
सदा प्रगल्भा च तथा त्यक्तालस्या जितश्रमा // ना. शा_२४.४९ //
नानाशिल्पप्रयोगज्ञा नृत्तगीतविचक्षणा /
अथ रूपगुणौदार्यधैर्यसौभाग्यशीलसंपन्ना // ना. शा_२४.५० //
पेशलमधुरस्निग्धानुनादिकलचित्रकण्ठा च /
समागतासु नारीषु रूपयौवनकन्तिभिः // ना. शा_२४.५१ //
न दृश्यते गुणैर्स्तुल्या यस्याः सा नर्तकी स्मृता /

सर्वावस्थोपचारेषु या न मुञ्चति पर्थिवम्. // ना. शा_२४.५२ //
विज्ञेया दक्षिणा दक्षा नाट्यज्ञैरनुचारिका /
शय्यापाली चत्रधारी तथा व्यजनधारिणी // ना. शा_२४.५३ //
संवाहिका गन्धयोक्त्री तथा चैव प्रसाधिका /
तथाभरणयोक्त्री च माल्यसंयोजिका तथा // ना. शा_२४.५४ //
एवं विधा भवेयुर्याः ता ज्ञेयाः परिचारिकाः /
नानाकक्ष्या विचारिण्यः तथोअपवनसंचराः // ना. शा_२४.५५ //
देवतायतनक्रीडा प्रासादपरिचारिकाः /
यामकिन्यस्तथा चैव याश्चैवं लक्षणाः स्त्रियः // ना. शा_२४.५६ //
संचारिकास्तु विज्ञेया नाट्यज्ञैः समुदाहृताः /
प्रेषणे ऽकामसंयुक्ते गुह्यागुह्यसमुत्थिते // ना. शा_२४.५७ //
नृपैर्यास्तु नियुज्यन्ते ताः ज्ञेयाः परिचारिकाः /
सर्वान्तःपुररक्षासु स्तुतिस्वस्त्ययनेन च // ना. शा_२४.५८ //
या वृद्धिमभिनन्दन्ति ता विज्ञेया महत्तराः /
सन्धिविग्रहसंबद्धनानाचारसमुत्थितम् // ना. शा_२४.५९ //
निवेदयन्ति याः कार्यं प्रतिहार्यस्तु ताः स्मृताः /
अप्राप्तरससंभोगा न संभ्रान्ता न चोद्धटाः // ना. शा_२४.६० //
निभृताश्च सलज्जाश्च कुमार्यो बालिकाः स्मृताः /
पुर्वराजनयज्ञा याः पुर्वराजाभिपूजिताः // ना. शा_२४.६१ //
पुर्वराजानुचरितास्ता वृद्धा इति सुज्ञिताः /
भाण्डागारेष्वधिकृताश्चायुधाधिकृतास्तथा // ना. शा_२४.६२ //
फलमूलौषधीनां च तथा चैवान्ववेक्षकी /
गन्धाभरणवस्त्राणां माल्यानां चैव चिन्तिका // ना. शा_२४.६३ //
बह्वाश्रये तथा युक्ता ज्ञेया ह्यायुक्तिकास्तु ताः /
इत्यन्तःपुरचारिण्यः स्त्रियः प्रोक्ता समासतः // ना. शा_२४.६४ //
विशेषणविशेषेण तासां वक्ष्यामि वै द्विजाः /
अनुरक्ताश्च भक्ताश्च नानापार्श्वसमुत्थिताः // ना. शा_२४.६५ //
या नियुक्ता नियोगेषु कार्येषु विविधेषु च /
न चोद्धटा असंभ्रान्ता न लुब्धा नापि निष्ठुराः // ना. शा_२४.६६ //
दान्ताः क्षान्ताः प्रसन्नाश्च जितक्रोधा जितेन्द्रियाः /
अकामा लोभडीनाश्च स्त्रीदोषैश्च विवर्जिताः // ना. शा_२४.६७ //
सा त्वन्तःपुरसंचारे योज्या पार्थिववेश्मनि /
कारुकाः कञ्चुकीयाश्च तथा वर्षवराः पुनः // ना. शा_२४.६८ //
औपस्थायिकनिर्मुण्डा स्त्रीणा प्रेषणकर्मणि /
रक्षणं च कुमारीणां बालिकानां प्रयोजयेत् // ना. शा_२४.६९ //
अन्तःपुराधिकारेषु राजचर्यानुवर्त्तिनाम् /
सर्ववृत्तान्तसंवाहाः पत्यागारे नियोजयेत् // ना. शा_२४.७० //
विनीताः स्वल्पसत्त्वा ये क्लीबा वै स्त्रीस्वभाविकाः /
जात्या न दोषिणश्चैव ते वै वर्षवराः स्मृताः // ना. शा_२४.७१ //

ब्रह्माणाः कुशला वृद्धाः कामदोषविवर्जिताः /
प्रयोजनेषु देवीनां प्रयोक्तव्या नृपैः सदा // ना. शा_२४.७२ //
एतदष्टादशविधं प्रोक्तमन्तःपुरं मया /
अतः परं प्रवक्ष्यामि बाह्यं पुरुषसंभवम् // ना. शा_२४.७३ //
राजा सेनापतिश्चैव पुरोधा मन्त्रिणस्तथा /
सचिवाः प्राड्विवाकाश्च कुमाराधिकृतास्तथा // ना. शा_२४.७४ //
एके चान्ये च बहवो मान्या ज्ञेया नृपस्य तु /
वेशेषमेषां वक्ष्यामि लक्षणेन निबोधत // ना. शा_२४.७५ //
बलवान् बुद्धिसंपन्नः सत्यवादी जितेन्द्रियः /
दक्षः प्रगल्भो धृतिमान् विक्रान्तो मतिमाञ्चुचिः // ना. शा_२४.७६ //
दीर्घदर्शी महोत्साहः कृतज्ञः प्रियवाङ्मृदुः /
लोकपालव्रतधरः कर्ममार्गविशारदः // ना. शा_२४.७७ //
उत्थितश्चाप्रमत्तश्च वृद्धसेव्यर्थशास्त्रवित् /
परभावेङ्गिताभिज्ञः शूरो रक्षासमन्वितः // ना. शा_२४.७८ //
ऊहापोहविचारी च नानाशिल्पप्रयोजकः /
नीतिशास्त्रार्थकुशलस्तथा चैवानुरागवान् // ना. शा_२४.७९ //
धर्मज्ञो ऽव्यसनी चैव गुणैरेतेर्भवेन्नृपः /
कुलीना बुद्धिसंपन्ना नानाशास्त्रविपश्चिताः // ना. शा_२४.८० //
स्निग्धा परेरहार्यश्च न प्रमत्ताश्च देशजाः /
अलुब्धाश्च विनीताश्च शुचयो धार्मिकास्तथा // ना. शा_२४.८१ //
पुरोधो मन्त्रिणस्त्वेभिर्गुणैर्युक्ता भवन्ति हि /
बुद्धिमान्नीतिसंपन्नस्त्यक्तालस्यः प्रियंवदः // ना. शा_२४.८२ //
पररन्ध्रविधिज्ञश्च यात्राकालविशेषवित् /
अर्थशास्त्रार्थकुशलो ह्यनुरक्तः कुलोद्भवः // ना. शा_२४.८३ //
देशवित्कालविच्चैव कर्तव्यः क्षितिपैः सदा /
व्यवहारार्थतत्त्वज्ञा बुद्धिमन्तो बहुश्रुताः // ना. शा_२४.८४ //
मध्यस्था धार्मिका धीराः कार्याकार्यविवेकिनः /
क्षान्ता दान्ता जितक्रोधा सर्वत्र समदर्शिनः // ना. शा_२४.८५ //
ईदृशः प्राड्विवाकास्तु स्थाप्या धर्मासने द्विजाः /
उत्थिताश्च प्रमत्ताश्च त्यक्तालस्या जितश्रमाः // ना. शा_२४.८६ //
स्निग्धा शान्ता विनीताश्च मध्यस्था निपुणास्तथा /
नयज्ञा विनयज्ञाश्च ऊहापोहविचक्षणाः // ना. शा_२४.८७ //
सर्वशात्रार्थसंपन्नाः कुमाराधिकृतास्तथा /
बृहस्पतिमतादेषां गुणांश्चाभिकांक्षयेत् // ना. शा_२४.८८ //
विज्ञेयं चोपहार्यं च सभ्यानां च विकल्पनम् /
इत्येष वो मया प्रोक्तः प्राड्विवाकनिर्णयः // ना. शा_२४.८९ //
अत ऊर्ध्वं प्रवक्ष्यामि चित्राभिनयनं पुनः /

इति भारतीये नाट्यशास्त्रे पुंस्त्र्युपचारो नामाध्यायश्चतुर्विंशः

पञ्चविंशो ऽध्यायः

अङ्गाभिनयस्यैव यो विशेषः क्वचित् क्वचित् /
अनुक्त उच्यते चित्रः चित्राभिनयस्स्मृतः // ना. शा_२५.१ //
उत्तानौ तु करौ कृत्वा स्वस्तिकौ पार्श्वसंस्थितौ /
उद्वाहितेन शिरसा तथा चोर्ध्वनिरीक्षणात् // ना. शा_२५.२ //
प्रभातं गगनं रात्रिः प्रदोषं दिवसं तथा /
ऋतून् घनान् वनान्तांश्च विस्तीर्णांश्च जलाशयान् // ना. शा_२५.३ //
दिशो ग्रहान् सनक्षत्रान् किञ्चित् स्वस्थं च यद्भवेत् /
तस्य त्वभिनयः कार्यो नानादृष्टिसमन्वितः // ना. शा_२५.४ //
एभिरेव करैर्भूयस्तेनैव शिरसा पुनः /
अधो निरीक्षणेनाथ भूमिस्थान् संप्रदर्शयेत् // ना. शा_२५.५ //
स्पर्शस्य ग्रहणेनैव तथोल्लुकसनेन च /
चन्द्रज्योस्त्नां सुखं वायुं रसं गन्धं च निर्दिशेत् // ना. शा_२५.६ //
वस्त्रावकुण्ठनात्सूर्यं रजोधूमानिलांस्तथा /
भूमितापमथोष्णं च कुर्याच्चायाभिलाषतः // ना. शा_२५.७ //
ऊर्ध्वाकेकरदृष्टिस्तु मध्याह्ने सूर्यमादिशेत् /
उदयास्तगतं चैव विस्मयार्थैः प्रदर्शयेत् // ना. शा_२५.८ //
यानि सौम्यार्थयुक्तानि सुस्वभावकृतानि च /
गात्रस्पर्शैस्सरोमाञ्चैस्तेषामभिनयो भवेत् // ना. शा_२५.९ //
यानि स्युस्तीक्ष्णरूपाणि तानि चाभिनयेत्सुधीः /
असंस्पर्शैस्तथोद्वेगैस्तथा मुखविकुण्ठनैः // ना. शा_२५.१० //
गम्भीरोदातसंयुक्तानर्थानभिनयेद्बुधः /
साटोपैश्च सगर्वैश्च गात्रैः सौष्ठवसंयुतैः // ना. शा_२५.११ //
यज्ञोपवीतदेशस्थमरालं हासमादिशेत् /
स्वस्तिकौ विच्युतौ हारस्रग्दामार्थान् निदर्शयेत् // ना. शा_२५.१२ //
भ्रमणेन प्रदर्शिन्या दृष्टेः परिगमेन च /
अलपद्मकपीडायाः सर्वार्थग्रहणं भवेत् // ना. शा_२५.१३ //
श्रव्यं श्रवणयोगेन दृश्यं दृष्टिविलोकनैः /
आत्मस्थं परसंस्थं वा मध्यस्थं वा विनिर्दिशेत् // ना. शा_२५.१४ //
विद्युदुल्काघनरवाविष्फुलिंगार्चिषस्तथा /
त्रस्तांगाक्षिनिमेषैश्च ते ऽभिनेयाः प्रयोक्तृभिः // ना. शा_२५.१५ //
उद्वेष्टितकरावृत्तौ करौ कृत्वा नतं शिरः /
असंस्पर्शे तथानिष्टे जिह्मदृष्टेन कारयेत् // ना. शा_२५.१६ //
वायुमुष्णं तमस्तेजो मुखप्रच्चादनेन च /
रेणुतोयपतंगांश्च भ्रमरांश्च निवारयेत् // ना. शा_२५.१७ //
कृत्वा स्वस्तिकसंस्थानौ पद्मकोशावधोमुखौ /

सिअंहर्क्षवानरव्याघ्रश्वापदांश्च निरूपयेत् // ना. शा_२५.१८ //
स्वस्तिकौ त्रिपताकौ तु गुरूणां पादवन्दने /
खटकस्वस्थिकौ चापि प्रतोदग्रहणे स्मृतौ // ना. शा_२५.१९ //
एकं द्वि त्रीणि चत्वारि पञ्च षट् सप्त चाष्टधा /
नव वा दश वापि स्युर्गणनांगुलिभिर्भवेत् // ना. शा_२५.२० //
दशाख्याश्च शताख्याश्च सहस्राख्यास्तथैव च /
पताकाभ्यां तु हस्ताभ्यां प्रयोज्यास्ताः प्रयोक्तृभिः // ना. शा_२५.२१ //
दशाख्यगणनायास्तु परतो या भवेदिह /
वाक्यार्थेनैव साध्यासौ परोक्षाभिनयेन च // ना. शा_२५.२२ //
चत्रध्वजपताकाश्च निर्देश्या दण्डधारणात् /
नानाप्रहरणं चाथ निर्देश्यं धारणाश्रयम् // ना. शा_२५.२३ //
एकचित्तो ह्यधोदृष्टिः किञ्चिन्नतशिरास्तथा /
सव्यहस्तश्च संदंशः स्मृते ध्याने वितर्किते // ना. शा_२५.२४ //
उद्वाहितं शिरः कृत्वा हंसपक्षौ प्रदक्षिणौ /
अपत्यरूपणे कार्यावुच्रयौ च प्रयोक्तृभिः // ना. शा_२५.२५ //
उद्वाहितं शिरः कृत्वा हंसवक्त्रं तथोर्ध्वगम् /
प्रसादयच्च यं मानं दीर्घसत्वं च निर्दिशेत् // ना. शा_२५.२६ //
अरालं च शिरस्थाने समुद्वाह्य तु वामकम् /
गते निर्वृत्ते ध्वस्ते च श्रान्तवाक्ये च योजयेत् // ना. शा_२५.२७ //
सर्वेन्द्रियस्वस्थतया प्रसन्नवदनस्तथा /
विचित्रभूतलालोकैः शरदन्तु विनिर्दिशेत् // ना. शा_२५.२८ //
गात्रसंकोचनाच्चापि सूर्याग्निपटुसेवनात् /
हेमन्तस्त्वभिनेतव्यः पुरुषैर्मध्यमाधमैः // ना. शा_२५.२९ //
शिरोदन्तोष्ठकम्पेन गात्रसंकोचनेन च /
कूजितैश्च सशीत्कारैरधमश्शीतमादिशेत् // ना. शा_२५.३० //
अवस्थान्तरमासाद्य कदाचितूत्तमैरपि /
शीताभिनयनं कूर्याद्देवाद्व्यसनसंभवम् // ना. शा_२५.३१ //
ऋतुजानां तु पुष्पाणां गन्धघ्राणैस्तथैव च /
रूक्षस्य वायोः स्पर्शाच्च शिशिरं रूपयेद्बुधः // ना. शा_२५.३२ //
प्रमोदजननारंभैरुपभोगैः पृथग्विधिः /
वसन्तस्त्वभिनेतव्यो नानापुष्पप्रदर्शनात् // ना. शा_२५.३३ //
स्वेद प्रमार्जनैश्चैव भूमितापैः सवीजनैः /
उष्णस्य वायोः स्पर्शेन ग्रीष्मं त्वभिनयेद्बुधः // ना. शा_२५.३४ //
कदम्बनीपकुटपैः शाद्वलैः सेन्द्रगोपकैः /
मेघवातैः सुखस्पर्शैः प्रावृट्कालं प्रदर्शयेत् // ना. शा_२५.३५ //
मेघौघनादैर्गम्भीरैर्धाराप्रपतनैस्तदा /
विद्युन्निर्घातघोषैश्च वर्षारात्रं समादिशेत् // ना. शा_२५.३६ //
यद्यस्य चिह्नं वेषो वा कर्म वा रूपमेव वा /
निर्देश्यः स ऋतुस्तेन इष्टानिष्टार्थदर्शनात् // ना. शा_२५.३७ //

एतानृतूनर्थवशाद्दर्शयेद्धि रसानुगान् /
सुखिनस्तु सुखोपेतान् सुःखार्थान् दुःखसंयुतान् // ना. शा_२५.३८ //
यो येन भावेनाविष्टः सुखदेनेतरेअन वा /
स तदाहितसंकारः सर्वं पश्यति तन्मयम् // ना. शा_२५.३९ //
भावाभिनयनं कुर्याद्विभावानां निदर्शनैः /
तथैव चानुभावानां भावसिद्धिः प्रवर्तिता // ना. शा_२५.४० //
विभावेनाहृतं कार्यमनुभावेन नीयते /
आत्मानुभवनं भावो विभावः परदर्शनम् // ना. शा_२५.४१ //
गुरुर्मित्रं सखा स्निग्धः संबन्धी बन्धुरेव वा /
आवेद्यते हि यः प्राप्तः स विभाव इति स्मृतः // ना. शा_२५.४२ //
यत्त्वस्य संभ्रमोत्थानैरर्घ्यपाद्यासनादिभिः /
पूजनं क्रियते भक्त्या सो ऽनुभावः प्रकीर्तितः // ना. शा_२५.४३ //
एवमन्येष्वपि ज्ञेयो नानाकार्यप्रदर्शनात् /
विभावो वापि भावो वा विज्ञेयो ऽर्थवशाद्बुधैः // ना. शा_२५.४४ //
यस्त्वपि प्रतिसंदेशो दूतस्येह प्रदीयते /
सो ऽनुभाव इति ज्ञेयः प्रतिसन्देशदर्शितः // ना. शा_२५.४५ //
एवं भावो विभावो वाप्यनुभावश्च कीर्तितः /
पुरुषैरभिनेयः स्यात्प्रमदाभिरथापि वा // ना. शा_२५.४६ //
स्वभावाभिनये स्थानं पुंसां कार्यं तु वैष्णवम् /
आयतं वावहित्थं वा स्त्रीणां कार्यं स्वभावतः // ना. शा_२५.४७ //
प्रयोजनवशाच्चैव शेषाण्यपि भवन्ति हि /
नानाभवाभिनयनैः प्रयोगैश्च पृथग्विधैः // ना. शा_२५.४८ //
धैर्यलीलाङ्गसंपन्नं पुरुषाणां विचेष्टितम् /
मृदुलीलाङ्गहारैश्च स्त्रीणां कार्यं तु चेष्टितम् // ना. शा_२५.४९ //
करपादाङ्गसञ्चारास्त्रीणां तु ललिताः स्मृताः /
सुधीरश्चोद्धतश्चैव पुरुषाणां प्रयोक्तृभिः // ना. शा_२५.५० //
यथा रसं यथा भावं स्त्रीणां भावप्रदर्शनम् /
नराणां प्रमदानां च भावाभिनयनं पृथक् // ना. शा_२५.५१ //
भावानुभावनं युक्तं व्याख्यास्याम्यनुपूर्वशः /
आलिङ्गनेन गात्राणां सस्मितेन च चक्षुषा // ना. शा_२५.५२ //
तथोल्लुकसानच्चापि हर्षं संदर्शयेन्नरः /
क्षिप्रस!ञ्जातरोमाञ्चात् बाष्पेणावृतलोचना // ना. शा_२५.५३ //
कुर्वीत नर्तकी हर्षं प्रीत्या वाक्यैश्च सस्मितैः /
उद्वृत्तरक्तनेत्रश्च सन्दष्टाधर एव च // ना. शा_२५.५४ //
निश्वासकंपितांगश्च क्रोधं चाभिनयेन्नरः /
नेत्राभ्यां बाष्पपूर्णाभ्यां चिबुकौष्ठप्रकंपनात् // ना. शा_२५.५५ //
शिरसः कंपनाच्चैव भ्रुकुटीकरणेन च /
मौनेनाङ्गुलिभङ्गेन माल्याभरणवर्जनात् // ना. शा_२५.५६ //
आयतकस्थानकक्षाया ईर्ष्या क्रोधे भवेत्स्त्रियाः /

निश्वासोच्च्वासबहुलैरधोमुखविचिन्तनैः // ना. शा_२५.५७ //
आकाशवचनाच्चापि दुःखं पुंसां तु योजयेत् /
रुदितैः श्वसितैश्चैव शिरोभिहननेन च // ना. शा_२५.५८ //
भूमिपाताभिघातैश्च दुःखं स्त्रीषु प्रयोजयेत् /
आनन्दजं चार्तिजं वा ईर्ष्यासंभूतमेव वा // ना. शा_२५.५९ //
यत्पूर्वमुक्तं रुदितं तत्स्त्रीनीचेषु योजयेत् /
संभ्रमावेगचेष्टाभिश्शस्त्रसंपातनेन च // ना. शा_२५.६० //
पुरुषाणां भयं कार्यं धैर्यावेगबलादिभिः /
चलतारकनेत्रत्वाद्गात्रैः स्फुरितकम्पितैः // ना. शा_२५.६१ //
सन्त्रस्तहृदयत्वाच्च पार्श्वाभ्यामवलोकनैः /
भर्तृरन्वेषणाच्चैवमुच्चैराक्रन्दनादपि // ना. शा_२५.६२ //
प्रियस्यालिंगनाच्चैव भयं कार्यं भवेत्स्त्रियाः /
मदा ये ऽभिहिताः पूर्वं ते स्त्रीनीचेषु योजयेत् // ना. शा_२५.६३ //
मृदुभिः स्खलितैर्नित्यमाकाशस्यावलंबनात् /
नेत्रावघूर्णनैश्चैव सालस्यैः कथितैस्तथा // ना. शा_२५.६४ //
गात्राणां कंपनैश्चैव मदः कार्यो भवेत्स्त्रियाः /
अनेन विधिना कार्यः प्रयोगाः कारणोत्थिताः // ना. शा_२५.६५ //
पौरुषः स्त्रीकृतो वापि भावा ह्यभिनयं प्रति /
सर्वे सललिता भावास्स्त्रीभिः कार्याः प्रयत्नतः // ना. शा_२५.६६ //
धैर्यमाधुर्यसंपन्ना भावाः कार्यास्तु पौरुषाः /
त्रिपताकाङ्गुलीभ्यां तु वलिताभ्यां प्रयोजयेत् // ना. शा_२५.६७ //
शुकाश्च सारिकाश्चैव सूक्ष्मा ये चापि पक्षिणः /
शिखिसारसहंसाद्याः स्थूला ये ऽपि स्वभावतः // ना. शा_२५.६८ //
रेचकैरङ्गहारैश्च तेषामभिनयो भवेत् /
खरोष्ट्राश्वतरासिंहव्याघ्रगोमहिषादय // ना. शा_२५.६९ //
गतिप्रचरैरङ्गैश्च ते ऽभिनेयाः प्रयोक्तृभिः /
भूताः पिशाचा यक्षाश्च दानवाः सहराक्षसैः // ना. शा_२५.७० //
अङ्गहारैरविनिर्देश्या नामसंकीर्तनादपि /
अङ्गहारैर्विनिर्देश्या अप्रत्यक्षा भवन्ति ये // ना. शा_२५.७१ //
प्रत्यक्षास्त्वभिनेतव्या भयोद्वेगैः सविस्मयैः /
देवाश्च चिह्नैश्च प्रणामकरणैर्भावैश्च विचेष्टितैः // ना. शा_२५.७२ //
अभिनेयो ह्यर्थवशादप्रत्यक्षाः प्रयोगज्ञैः /
सव्योत्थितेन हस्तेन ह्यरालेन शिरः स्पृशेत् // ना. शा_२५.७३ //
नरे ऽह्यभिवादनं ह्येतदप्रत्यक्षे विधीयते /
खटकावर्धमानेन कपोताख्येन वा पुनः // ना. शा_२५.७४ //
दैवतानि गुरूंश्चैव प्रमदाश्चाभिवादयेत् /
दिवौकसश्च ये पूज्याः प्रत्यक्षाश्च भवन्ति ये // ना. शा_२५.७५ //
तान् प्रमाणैः प्रभावैश्च गंभीरार्थैश्च योजयेत् /
महाजनं सखीवर्गं विटधूर्तजनं तथा // ना. शा_२५.७६ //

परिमण्डलसंस्थेन हस्तेनाभिनयेनन्नरः ।
पर्वतान् प्रांशुयोगेन वृक्षांश्चैव समुच्छ्रितान् ॥ ना. शा_२५.७७ ॥
प्रसारिताभ्यां बाहुभ्यामुत्क्षिप्ताभ्यां प्रयोजयेत् ।
समूहसागरं सेना बहुविस्तीर्णमेव च ॥ ना. शा_२५.७८ ॥
पताकाभ्यां तु हस्ताभ्यामुत्क्षिप्ताभ्यां प्रदर्शयेत् ।
शौर्यं धैर्यं च गर्वं च दर्पमौदार्यमुच्छ्रयम् ॥ ना. शा_२५.७९ ॥
ललाटदेशस्थानेन त्वरालेनाभिदर्शयेत् ।
वक्षोदेशादपाविद्धौ करौ तु मृगशीर्षकौ ॥ ना. शा_२५.८० ॥
विस्तीर्णप्रद्रुतोत्क्षेपौ योज्यौ यस्यादपावृतम् ।
अधोमुखोत्तानतलौ हस्तौ किञ्चित्प्रसारितौ ॥ ना. शा_२५.८१ ॥
कृत्वा त्वभिनयेद्वेलां बिलद्वारं गृहं गुहान् ।
कामं शापग्रहग्रस्तान् ज्वरोपहतचेतसः ॥ ना. शा_२५.८२ ॥
एतेषां चेष्टितं कुर्यादङ्गाद्यैः सदृशैर्बुधैः ।
दोलाभिनयनं कुर्याद्दोलायास्तु विलोकनैः ॥ ना. शा_२५.८३ ॥
संभोक्षेण च गात्राणां रज्वश्चाग्रहणेन च ।
यदा चाङ्गवती डोला प्रत्यक्षा पुस्तजा भवेत् ॥ ना. शा_२५.८४ ॥
आसनेषु प्रविष्टानां कर्तव्यं तत्र डोलनम् ।
आकाशवचनानीह वक्ष्याम्यात्मगतानि च ॥ ना. शा_२५.८५ ॥
अपवारितकं चैव जनान्तिकमथापि च ।
दूरस्थाभाषणं यत्स्यादशरीरनिवेदनम् ॥ ना. शा_२५.८६ ॥
परोक्षान्तरितं वाक्यमाकाशवचनं तु तत् ।
तत्रोत्तरकृतैर्वाक्यैः संलापं संप्रयोजयेत् ॥ ना. शा_२५.८७ ॥
नानाकारणसंयुक्तैः काव्यभावसमुत्थितैः ।
हृदयस्य वचो यत्तू तदात्मगतमीष्यते ॥ ना. शा_२५.८८ ॥
सवितर्कं च तद्योज्यं प्रायशो नाटकादिषु ।
निगूढभावसंयुक्तमपवारितकं स्मृतम् ॥ ना. शा_२५.८९ ॥
कार्यवशादश्रवणं पार्श्वगतैर्यज्जनान्तिकं तत्स्यात् ।
हृदयस्थं सविकल्पं भावस्थं चात्मगतमेव ॥ ना. शा_२५.९० ॥
इति गूढार्थयुक्तानि वचनानीह नाटके ।
जनान्तिकानि कर्णे तु तानि योज्यानि योक्तृभिः ॥ ना. शा_२५.९१ ॥
पूर्ववृत्तं तु यत्कार्यं भूयः कथ्यं तु कारणात् ।
कर्णप्रदेशे तद्वाच्यं मागात्तत्पुनरुक्तताम् ॥ ना. शा_२५.८२ ॥
अव्यभिचारेण पठेदाकाशजनान्तिकात्मगतपाठ्यम् ।
प्रत्यक्षपरोक्षकृतानामात्मसमुत्थान् परकृतांश्च ॥ ना. शा_२५.९३ ॥
हस्तमन्तरितं कृत्वा त्रिपताकं प्रयोक्तृभिः ।
जनान्तिकं प्रयोक्तव्यमपवारितकं तथा ॥ ना. शा_२५.९४ ॥
स्वप्नायितवाक्यार्थैस्त्वभिनेयो न खलु हस्तसंचारैः ।
सुप्ताभिहितैरेव तु वाक्यार्थैः सो ऽभिनेयः स्यात् ॥ ना. शा_२५.९५ ॥
मन्दस्वरसञ्चारैर्व्यक्ताव्यक्तं पुनरुक्तवचनार्थम् ।

पूर्वानुस्मरणकृतं कार्यं स्वप्नाञ्चिते पाठ्यम् // ना. शा_२५.९६ //
प्रशिथिलगुरुकरुणाक्षरघण्टानुस्वरितवाक्यगद्गदजैः /
हिक्काश्वसोपेतां काकुं कुर्यान्मरणकाले // ना. शा_२५.९७ //
हिक्काश्वासोपेतां मूर्च्छोपगमे मरणवत्कथयेत् /
अतिमत्तेष्वपि कार्यं तद्वत्स्वप्नायिते यथा पाठ्यम् // ना. शा_२५.९८ //
वृद्धानां योजयेत्पाठ्यं गद्गदस्खलिताक्षरम् /
असमाप्ताक्षरं चैव बालानां तु कलस्वनम् // ना. शा_२५.९९ //
नानाभावोपगतं मरणाभिनये बहुकीर्तितं तु /
विक्षिप्तहस्तपादैर्निभृतैः सन्नैस्तथा कार्यम् // ना. शा_२५.१०० //
व्याधिप्लुते च मरणं निषण्णगात्रैस्तु संप्रयोक्तव्यम् /
हिक्काश्वासोपेतं तथा पराधीनगात्रसंचारम् // ना. शा_२५.१०१ //
विषपीते ऽपि च मरणं कार्यं विक्षिप्तगात्रकरचरणम् /
विषवेगसंप्रयुक्तं विस्फुरितांगक्रियोपेतम् // ना. शा_२५.१०२ //
प्रथेमे वेगे कार्श्यं त्वभिनेये वेपथुर्द्वितीये तु /
दाहस्तथा तृतीये विलल्लिका स्याच्चतुर्थे तु // ना. शा_२५.१०३ //
फेनस्तु पञ्चमस्थे तु ग्रीवा षष्ठे तु भज्यते /
जडता सप्तमे तु स्यान्मरणं त्वष्टमे भवेत् // ना. शा_२५.१०४ //
तत्र प्रथमवेगे तु क्षामवक्त्रकपोलता /
कृशत्वे ऽभिनयः कार्यो वाक्यानामल्पभाषणम् // ना. शा_२५.१०५ //
सर्वाङ्गवेपथुं च कण्डूयनं तथाङ्गानाम् /
विक्षिप्तहस्तगात्रं दाहं चैवाप्यभिनयेत्तु // ना. शा_२५.१०६ //
उद्वृत्तनिमेषत्वादुद्गारच्चर्दनैस्तथाक्षेपैः /
अव्यक्ताक्षरकथनैः विलल्लिकामभिनयेदेवम् // ना. शा_२५.१०७ //
उद्गारवमनयोगैः शिरसश्च विलोलनैरनेकविधैः /
फेनस्त्वभिनेतव्यो निःसंज्ञतया निमेषैश्च // ना. शा_२५.१०८ //
अंसकपोलस्पर्शः शिरसो ऽथ विनामनं शिरो ऽपाङ्गः /
सर्वेन्द्रिअयसंमोहाज्जडतामेवं त्वभिनयेत्तु // ना. शा_२५.१०९ //
संमीलितनेत्रत्वात् व्याधिविवृद्धौ भुजङ्गदशनाद्वा /
एवं हि नाट्यधर्मे मरणानि बुधैः प्रयोज्यानि // ना. शा_२५.११० //
संभ्रमेष्वथ रोषेषु शोकावेशकृतेषु च /
यानि वाक्यानि युज्यन्ते पुनरुक्तं न तेष्विह // ना. शा_२५.१११ //
साध्वहो मां च हेहेति किं त्वं मामावदेति च /
एवंविधानि कार्याणि द्वित्रिसंख्यानि कारयेत् // ना. शा_२५.११२ //
प्रत्यङ्गहीनं यत्काव्यं विकृतं च प्रयुज्यते /
न लक्षणकृतस्तत्र कार्यस्त्वभिनयो बुधैः // ना. शा_२५.११३ //
भावो यत्रोत्तमानां तु न तं मध्येषु योजयेत् /
यो भावश्चैव मध्यानां न ते नीचेषु योजयेत् // ना. शा_२५.११४ //
पृथक् पृथग्भावरसैरात्मचेष्टासमुत्थितैः /
ज्येष्ठमध्यमनीचेषु नाट्यं रागं हि गच्चति // ना. शा_२५.११५ //

एते ऽभिनयविशेषाः कर्तव्याः सत्त्वभावसंयुक्ताः /
अन्ये तु लौकिका ये तु ते सर्वे लोकवत्कार्याः // ना. शा_२५.११६ //
नानाविधैर्यथा पुष्पैर्मालां ग्रथ्नाति माल्यकृत् /
अंगोपांगै रसैर्भावैस्तथा नाट्यं प्रयोजयेत् // ना. शा_२५.११७ //
या यस्य लीला नियता गतिश्च रङ्गप्रविष्टस्य निधानयुक्तः /
तामेव कुर्यादविमुक्तसत्त्वो यावन्नरङ्गात्प्रतिनिर्वृतः स्यात् // ना. शा_२५.११८ //
एवमेते मया प्रोक्ता नाट्ये चाभिनयाः क्रमात् /
अन्ये तु लौकिका ये ते लोकाद्ग्राह्याः सदा बुधैः // ना. शा_२५.११९ //
लोको वेदस्तथाध्यात्मं प्रमाणं त्रिविधं स्मृतम् /
वेदाध्यात्मपदार्थेषु प्रायो नाट्यं प्रतिष्ठितम् // ना. शा_२५.१२० //
वेदाध्यात्मोपपन्नं तु शब्दच्चन्दस्समन्वितम् /
लोकसिद्धं भवेत्सिद्धं नाट्यं लोकात्मकं तथा // ना. शा_२५.१२१ //
न च शक्यं हि लोकस्य स्थावरस्य चरस्य च /
शास्त्रेण निर्णयं कर्तुं भावचेष्टाविधिं प्रति // ना. शा_२५.१२२ //
नानाशीलाः प्रकृतयः शीले नाट्यं प्रतिष्ठिअतम् /
तस्माल्लोकप्रमाणं हि विज्ञेयं नाट्ययोक्तृभिः // ना. शा_२५.१२३ //
एतान् विधींश्चाभिनयस्य सम्यग्विज्ञाय रङ्गे मनुजः प्रयुङ्क्ते /
स नाट्यतत्त्वाभिनयप्रयोक्ता संमानमग्र्यं लभते हि लोके // ना. शा_२५.१२४ //
एवमेते ह्यभिनया वाङ्नेपथ्याङ्गसंभवाः /
प्रयोगज्ञेन कर्तव्या नाटके सिद्धिमिच्चता // ना. शा_२५.१२५ //

---

षड्विंशो ऽध्यायः

अनुरूपा विरूपा च तथा रूपानुरूपिणी /
त्रिप्रकारेह पात्राणां प्रकृतिश्च विभाविता // ना. शा_२६.१ //
नानावस्थाक्रियोपेता भूमिका प्रकृतिस्तथा /
भृशमुद्योतयेन्नाट्यं स्वभावकरणाश्रयम् // ना. शा_२६.२ //
बहुबाहूबहुमुखास्तथा च विकृताननाः /
पशुश्वापदवक्त्राश्च खरोष्ट्राश्च गजाननाः // ना. शा_२६.३ //
एते चान्ये च बहवो नानारूपा भवन्ति ये /
आचार्येण तु ते कार्या मृत्काष्ठजतुचर्मभिः // ना. शा_२६.४ //
स्वाभाविकेन रूपेन प्रविशेद्रङ्गमण्डलम् /
आत्मरूपमवच्चाद्य वर्णकैर्भूषणैरपि // ना. शा_२६.५ //
यादृशं यस्य यद्रूपं प्रकृत्या तत्र तादृशम् /
वयोवेषानुरूपेण प्रयोज्यं नाट्यकर्मणि // ना. शा_२६.६ //
यथा जीवत्स्वभावं हि परित्यज्यान्यदेहिकम् /
परभावं प्रकुरुते परभावं समाश्रितः // ना. शा_२६.७ //
एवं बुधः परंभावं सो ऽस्मीति मनसा स्मरन् /

येषां वागङ्गलीलाभिश्चेष्टाभिस्तु समाचरेत् // ना. शा_२६.८ //
सुकुमारप्रयोगो यो राज्ञामामोदसंभवः /
शृङ्गाररसमासाद्य तन्नारीषु प्रयोजयेत् // ना. शा_२६.९ //
युद्धोद्धताविद्धकृता संरंभारभटाश्च ये /
न ते स्त्रीभिः प्रयोक्तव्याः योक्तव्याः पुरुषेषु ते // ना. शा_२६.१० //
अनुद्धटमसंभ्रान्तमनाविद्धाङ्गचेष्टितम् /
लयतालकलापातप्रमाणनियताक्षरम् // ना. शा_२६.११ //
सुविभक्तपदालापमनिष्ठुरमकाहलम् /
ईदृशं यद्भवेन्नाट्यं नारीभिश्च प्रयोजयेत् // ना. शा_२६.१२ //
एवं कार्यं प्रयोगज्ञैर्भूमिकाविनिवेशनम् /
स्त्रियो हि स्त्रीगतो भावः पौरुषः पुरुषस्यच // ना. शा_२६.१३ //
यथा वयो यथावस्थमनुरूपेति सा स्मृता /
पुरुषः स्त्रीकृतं भावं रूपात्प्रकुरुते तु यः // ना. शा_२६.१४ //
रूपानुरूपा सा ज्ञेया प्रयोगे प्रकृतिर्बुधः /
चन्दतः पौरुषीं भूमिं स्त्री कुर्यादनुरूपतः // ना. शा_२६.१५ //
न परस्परचेष्टासु कार्यौ स्थविरबालिशौ /
पाठ्यप्रयोगे पुरुषाः प्रयोक्तव्या हि संस्कृते // ना. शा_२६.१६ //
स्त्रीणां स्वभावमधुराः कण्ठाः पुंसां तु बलवन्तः /
यद्यपि पुरुषो विद्यात् गीतविधानं च लक्षणोपेतम् // ना. शा_२६.१७ //
माधुर्यगुणविहीनं शोभां जनयेन्न तद्गीतम् /
यत्र स्त्रीणां पाठ्याद्गुणैर्नराणां च कण्ठमाधुर्यम् // ना. शा_२६.१८ //
प्रकृतिविपर्ययजनितौ विज्ञेयौ तावलङ्कारौ /
प्रायेण देवपार्थिवसेनापतिमुख्यपुरुषभवनेषु // ना. शा_२६.१९ //
स्त्रीजनकृताः प्रयोगा भवन्ति पुरुषस्वभावेन /
रम्भोर्वशीप्रभृतिषु स्वर्गे नाट्यं प्रतिष्ठितम् // ना. शा_२६.२० //
तथैव मानुषे लोके राज्ञामन्तःपुरेष्विह /
उपदेष्टव्यमाचार्यैः प्रयत्नेनाङ्गनाजने // ना. शा_२६.२१ //
न स्वयं भूमिकाभ्यासो बुधैः कार्यस्तु नाटके /
स्त्रीषु योज्यः प्रयत्नेन प्रयोगः पुरुषाश्रयः // ना. शा_२६.२२ //
यस्मात्स्वभावोपगतो विलासः स्त्रीषु विद्यते /
तस्मात्स्वभावमधुरमङ्गं सुलभसौष्ठवम् // ना. शा_२६.२३ //
ललितं सौष्ठवं यच्च सो ऽलङ्कारः परो मतः /
प्रयोगो द्विविधश्चैव विज्ञेयो नाटकाश्रयः // ना. शा_२६.२४ //
सुकुमारस्तथाविद्धो नानाभावरसाश्रयः /
नाटकं सप्रकरणं भाणो वीथ्यङ्क एव च // ना. शा_२६.२५ //
ज्ञेयानि सुकुमाराणि मानुषैराश्रितानि तु /
सुकुमारप्रयोगो ऽयं राज्ञामामोदकारकः // ना. शा_२६.२६ //
शृङ्गारसमासाद्य स्त्रीणां तत्तु प्रयोजयेत् /
युद्धोद्धताविद्धकृतासंरंभारभटाश्च ये // ना. शा_२६.२७ //

न ते स्त्रीणां प्रकर्तव्याः कर्तव्याः पुरुषैर्हि ते /
यथाविद्धाङ्गहारं तु भेद्यभेद्याहवात्मकम् // ना. शा_२६.२८ //
मायेन्द्रजालबहुलं पुस्तनैपथ्यदीपितम् /
पुरुषप्रायसंचारमल्पस्त्रीकमथोद्धतम् // ना. शा_२६.२९ //
सात्वत्यारभटीयुक्तं नाट्यमाविद्धसंज्ञितम् /
डिमः समवकारश्च व्यायोगेहामृगौ तथा // ना. शा_२६.३० //
एतान्याविद्धसंज्ञानि विज्ञेयानि प्रयोक्तृभिः /
एषां प्रयोगः कर्तव्यो देवदानवराक्षसैः // ना. शा_२६.३१ //
उद्धता ये च पुरुषाः शौर्यवीर्यसमन्विताः /
योग्यः स च प्रयत्नः कर्तव्यः सततप्रमादेन // ना. शा_२६.३२ //
न हि योग्यया विना भवति च भावरससौष्ठवं किंचित् /
संगीतपरिक्लेशो नित्यं प्रमदाजनस्य गुण एव // ना. शा_२६.३३ //
यन्मधुरकर्कशत्वं लभते नाट्यप्रयोगेण /
प्रमदाः नाट्यविलासैर्लभते यत् कुसुमैर्विचित्रलावण्यम् /
कामोपचारकुशला भवन्ति च काम्या विशेषेण // ना. शा_२६.३४ //
गीतं वृत्तं तथा वाद्यं प्रस्तारगमनक्रिया /
शिष्यनिष्पादनं चैव षडाचार्यगुणाः स्मृताः // ना. शा_२६.३५ //
एतानि पञ्च यो वेत्ति स आचार्यः प्रकीर्तितः /
ऊहापोहौ मतिश्चैव स्मृतिर्मेधा तथैव च // ना. शा_२६.३६ //
मेधास्मृतिर्गुणश्लाघारागः संघर्ष एव च /
उत्साहश्च षडेवैतान् शिष्यस्यापि गुणान् विदुः // ना. शा_२६.३७ //
एवं कार्यं प्रयोगज्ञैर्नानाभूमिविकल्पनम् /
अत ऊर्ध्वं प्रवक्ष्यामि सिद्धीनामपि लक्षणम् // ना. शा_२६.३८ //

इति भारतीये नाट्यशास्त्रे विकृतिविकल्पो नाम षड्विंशो ऽध्यायः

---

अथ सप्तविंशो ऽध्यायः

सिद्धीनां तु प्रवक्ष्यामि लक्षणं नाटकाश्रयम् /
यस्मात्प्रयोगः सर्वो ऽयं सिद्ध्यर्थं संप्रदर्शितः // ना. शा_२७.१ //
सिद्धिस्तु द्विविधा ज्ञेया वाङ्मनोङ्गसमुद्भवा /
दैवी च मानुषी चैव नानाभावसमुत्थिता // ना. शा_२७.२ //
दशाङ्गा मानुषी सिद्धीर्दैवी तु द्विविधा स्मृता /
नानासत्त्वाश्रयकृता वाङ्नैपथ्यशरीरजा // ना. शा_२७.३ //
स्मितापहासिनी हासा साध्वहो कष्टमेव च /
प्रबद्धनादा च तथा सिद्धिर्ज्ञेयाथ वाङ्मयी // ना. शा_२७.४ //
पुलकैश्च सरोमाञ्चैरभ्युत्थानैस्तथैव च /
चेलदानाङ्गुलिक्षेपैः शारीरी सिद्धिरिष्यते // ना. शा_२७.५ //

किञ्चिच्चिष्टो रसो हास्यो नृत्यद्भिर्यत्र युज्यते /
स्मितेन स प्रतिग्राह्यः प्रेक्षकैर्नित्यमेव च // ना. शा_२७.६ //
किञ्चिदस्पष्टहास्यं यत्तथा वचनमेव च /
अर्थहास्येन तद्ग्राह्यं प्रेक्षकैर्नित्यमेव हि // ना. शा_२७.७ //
विदूषकोच्चेदकृतं भवेच्चिल्पकृतं च यत् /
अतिहास्येन तद्ग्राह्यं प्रेक्षकैर्नित्यमेव तु // ना. शा_२७.८ //
अहोकारस्तथा कार्यो नृणां प्रकृतिसंभवः /
यद्धर्मपदसंयुक्तं यथातिशयसंभवम् // ना. शा_२७.९ //
तत्र साध्विति यद्वाक्यं प्रयोक्तव्यं हि साधकैः /
विस्मयाविष्टभावेषु प्रहर्षार्थेषु चैव हि // ना. शा_२७.१० //
करुणे ऽपि प्रयोक्तव्यं कष्टं शास्त्रकृतेन तु /
प्रबद्धनादा च तथा विस्मयार्थेषु नित्यशः // ना. शा_२७.११ //
साधिक्षेपेषु वाक्येषु प्रस्पन्दिततनूरुहैः /
कुतूहलोत्तरावेधैर्बहुमानेन साधयेत् // ना. शा_२७.१२ //
दीप्तप्रदेशं यत्कार्यं चेद्यभेद्याहवात्मकम् /
सविद्रवमथोत्फुल्लं तथा युद्धनियुद्धजम् // ना. शा_२७.१३ //
प्रकम्पितांसशीर्षञ्च साश्रं सोत्थानमेव च /
तत्प्रेक्षकैस्तु कुशलैस्साध्यमेवं विधानतः // ना. शा_२७.१४ //
एवं साधयितव्यैषा तज्ज्ञैः सिद्धिस्तु मानुषी /
दैविकीञ्च पुनः सिद्धिं संप्रवक्ष्यामि तत्त्वतः // ना. शा_२७.१५ //
या भावातिशयोपेता सत्त्वयुक्ता तथैव च /
सा प्रेक्षकैस्तु कर्तव्या दैवी सिद्धिः प्रयोगतः // ना. शा_२७.१६ //
न शब्दो न यत्र न क्षोभो न चोत्पातनिदर्शनम् /
संपूर्णता च रंगस्य दैवी सिद्धिस्तु सा स्मृता // ना. शा_२७.१७ //
दैवी च मानुषी चैव सिद्धिरेषा मयोदिता /
अत ऊर्ध्वं प्रवक्ष्यामि घातान्दैवसमुत्थितन् // ना. शा_२७.१८ //
दैवात्मपरसमुत्था त्रिविधा घाता बुधैस्तु विज्ञेया /
औत्पातिकश्चतुर्थः कदाचिदथ संभवत्येषु // ना. शा_२७.१९ //
वाताग्निवर्षकुञ्जरभुजङ्गमण्डपनिपाताः /
कीटव्यालपिपीलिकपशुप्रवेशनाश्च दैवककृता // ना. शा_२७.२० //
घातनतः परमहं परयुक्तान् संप्रवक्ष्यामि /
[वैवर्ण्यं चाचेष्टं विभ्रमितत्वं स्मृतिप्रमोहश्च // ना. शा_२७.२१ //
अन्यवचनं च काव्यं तथांगदोषो विहस्तत्वम् /
एते त्वात्मसमुत्था घाता ज्ञेया प्रयोगज्ञैः] // ना. शा_२७.२२ //
मात्सर्याद्द्वेषाद्वा तत्पक्षत्वात्तथार्थभेदत्वात् /
एते तु परसमुत्था ज्ञेया घाता बुधैर्नित्यम् // ना. शा_२७.२३ //
अतिहसितरुदितविस्फोटितान्यथोत्कृष्टनालिकापाताः /
गोमयलोष्टपिपीलिकाविक्षेपाश्चारिसंभूताः // ना. शा_२७.२४ //
औत्पतिकाश्च घाता मत्तोन्मत्तप्रवेशलिङ्गकृतः /

पुनरात्मसमुत्था ये घातांस्तांस्तान् प्रवक्ष्यामि // ना. शा_२७.२५ //
वैलक्षण्यमचेष्टितविभूमिकत्वं स्मृतिप्रमोषश्च /
अन्यवचनं च काव्यं तथार्तनादो विहस्तत्वम् // ना. शा_२७.२६ //
अतिहसितरुदितविस्वरपिपीलिकाकीटपशुविरावाश्च /
मुकुटाभरणनिपाता पुष्करजाः काव्यदोषाश्च // ना. शा_२७.२७ //
अतिहसितरुदितहसितानि सिद्धैर्भावस्य दूषकाणि स्युः /
कीटपिपीलिकपाता सिद्धिं सर्वात्मना घ्नान्त // ना. शा_२७.२८ //
विवस्वरमजाततालं वर्णस्वरसंपदा च परिहीणम् /
अज्ञातस्थानलयं स्वरगतमेवंविधं हन्यात् // ना. शा_२७.२९ //
मुकुटाभरणनिपातः प्रबद्धनादश्च नाशनो भवति /
पशुविशसनं तथ अ स्याद्बहुवचनघ्नं प्रयोगेषु // ना. शा_२७.३० //
विषमं मानविहीनं विमार्जनं चाकुलप्रहारं च /
अविभक्तग्रहमोक्षं पुष्करगतमीदृशं हन्ति // ना. शा_२७.३१ //
पुनरुक्तो ह्यसमासो विभक्तिभेदो विसन्धयो ऽपार्थः /
त्रैलिङ्गजश्च दोषः प्रत्यक्षपरोक्षसंमोहाः // ना. शा_२७.३२ //
चन्दोवृत्तत्यागो गुरुलाघवसङ्करो यतेर्भेदः /
एतानि यथा स्थूलं घातस्थानानि काव्यस्य // ना. शा_२७.३३ //
ज्ञेयौ तु काव्यजातौ द्वौ घातावप्रतिक्रियौ नित्यम् /
प्रकृतिव्यसनसमुत्थः शेषोदकनालिकत्वम् // ना. शा_२७.३४ //
अप्रतिभागं स्खलनं विस्वरमुच्चारणं च काव्यस्य /
अस्थानभूषणत्वं पतनं मुकुटस्य विभ्रंशः // ना. शा_२७.३५ //
वाजिस्यन्दनकुञ्जरखरोष्ट्रशिबिकाविमानयानानाम् /
आरोहणावतरणेष्वनभिज्ञत्वं विहस्त्वम् // ना. शा_२७.३६ //
प्रहरणकवचानामप्ययथाग्रहणं विधारणं चापि /
अमुकुटभूषणयोगश्चिरप्रवेशो ऽथवा रङ्गे // ना. शा_२७.३७ //
एभिः स्थानविशेषैर्घाता लक्ष्यास्तु सूरिभिः कुशलैः /
यूपाग्निचयनदर्भस्त्रग्भाण्डपरिग्रहान्मुक्त्वा // ना. शा_२७.३८ //
सिद्ध्या मिश्रो घातस्सर्वगतश्चैकदेशजो वापि /
नाट्यकुशलैः सलेख्या सिद्धिर्वा स्याद्विघातो वा // ना. शा_२७.३९ //
नालेख्यो बहुदिनजः सर्वगतो ऽव्यक्तलक्षणविशेषः /
यस्त्वैकदिवसजातस्स प्रत्यवरो ऽपि लेख्यस्स्यात् // ना. शा_२७.४० //
जर्जरमोक्ष्यस्यान्ते सिद्धेर्मोक्षस्तु नालिकायास्तु /
कर्तव्यस्त्विह सततं नाट्यज्ञैः प्राश्निकैर्विधिना // ना. शा_२७.४१ //
दैन्ये दीनत्वमायान्ति ते नाट्ये प्रेक्षकाः स्मृताः /
ये तुष्टौ तुष्टिमायान्ति शोके शोकं व्रजन्ति च // ना. शा_२७.४२ //
यो ऽन्यस्य महे मूर्धो नांदीश्लोकं पठेद्धि देवस्य /
स्ववशेन पूर्वरङ्गे सिद्धेर्घातः प्रयोगस्य // ना. शा_२७.४३ //
यो देशभावरहितं भाषाकाव्यं प्रयोजयेद्बुद्ध्या /
तस्याप्यभिलेख्यः स्याद्घातो देशः प्रयोगज्ञैः // ना. शा_२७.४४ //

कः शक्तो नाट्यविधौ यथावदुपपादनं प्रयोगस्य /
कर्तुं व्यग्रमना वा यथावदुक्तं परिज्ञातम् // ना. शा_२७.४५ //
तस्माद्गम्भीरार्थाः शब्दा ये लोकवेदसंसिद्धाः /
सर्वजनेन ग्राह्या योज्या नाटके विधिवत् // ना. शा_२७.४६ //
न च किञ्चिद्गुणहीनं दोषैः परिवर्जितं न चाकिञ्चित् /
तस्मान्नाट्यप्रकृतौ दोषा नाट्यार्थतो ग्राह्या // ना. शा_२७.४७ //
न च नादरस्तु कार्यो नटेन वागङ्गसत्त्वनेपथ्ये /
रसभावयोश्च गीतेष्वातोद्ये लोकयुक्त्यां च // ना. शा_२७.४८ //
एवमेतत्तु विज्ञेयं सिद्धीनां लक्षणं बुधैः /
अत ऊर्ध्वं प्रवक्ष्यामि प्राश्निकानां तु लक्षणम् // ना. शा_२७.४९ //
चारित्राभिजनोपेताः शान्तवृत्ताः कृतश्रमाः /
यशोधर्मपराश्चैव मध्यस्थवयसान्विताः // ना. शा_२७.५० //
षडङ्गनाट्यकुशलाः प्रबुद्धाः शुचयः समाः /
चतुरातोद्यकुशलाः वृत्तज्ञास्तत्त्वदर्शिनः // ना. शा_२७.५१ //
देशभाषाविधानज्ञाः कलाशिल्पप्रयोजकाः /
चतुर्थाभिनयोपेता रसभावविकल्पकाः // ना. शा_२७.५२ //
शब्दच्चन्दोविधानज्ञा नानाशास्त्रविचक्षणाः /
एवं विधास्तु कर्तव्याः प्राश्निका दशरूपके // ना. शा_२७.५३ //
अव्यग्रैरिन्द्रियैः शुद्ध ऊहापोहविशारदः /
त्यक्तदोषोनुअरागी च स नाट्ये प्रेक्षकः स्मृतः // ना. शा_२७.५४ //
न चैवेते गुणाः सम्यक् सर्वस्मिन् प्रेक्षके स्मृताः /
विज्ञेयस्याप्रमेयत्वात्संकीर्णानां च पार्षदि // ना. शा_२७.५५ //
यद्यस्य शिल्पं नेपथ्यं कर्मचेष्टितमेव वा /
तत्तथा तेन कार्यं तु स्वकर्मविषयं प्रति // ना. शा_२७.५६ //
नानाशीलाः प्रकृतयः शीले नाट्यं विनिर्मितम् /
उत्तमाधममध्यानां वृद्धबालिशयोषिताम् // ना. शा_२७.५७ //
तुष्यन्ति तरुणाः कामे विदग्धाः समयात्विते /
अर्थेष्वर्थपराश्चैव मोक्षे चाथ विरागिणः // ना. शा_२७.५८ //
शूरास्तु वीररौद्रेषु नियुद्धेष्वाहवेषु च /
धर्माख्याने पुराणेषु वृद्धास्तुष्यन्ति नित्यशः // ना. शा_२७.५९ //
न शक्यमधमैर्ज्ञातुमुत्तमानां विचेष्टितम् /
तत्त्वभावेषु सर्वेषु तुष्यन्ति सततं बुधाः // ना. शा_२७.६० //
बाला मूर्खाः स्त्रियश्चैव हास्यनैपथ्ययोः सदा /
यस्तुष्टो तुष्टिमायाति शोके शोकमुपैति च // ना. शा_२७.६१ //
क्रुद्धः क्रोधे भये भीतः स श्रेष्ठः प्रेक्षकः स्मृतः /
एवं भावानुकरणे यो यस्मिन् प्रविशेन्नरः // ना. शा_२७.६२ //
स तत्र प्रेक्षको ज्ञेयो गुणैरेभिरलङ्कृतः /
एवं हि प्रेक्षका ज्ञेयाः प्रयोगे दशरूपतः // ना. शा_२७.६३ //
संघर्षे तु समुत्पन्ने प्राश्निकान् संनिबोधत /

यज्ञविन्नर्तकश्चैव चन्दोविच्चब्दवित्तथा // ना. शा_२७.६४ //
अस्त्रविच्चित्रकृद्वेश्या गन्धर्वो रजसेवकः /
यज्ञविद्यज्ञयोगे तु नर्तको ऽभिनये स्मृतः // ना. शा_२७.६५ //
चन्दोविद्वृत्तबन्धेषु शब्दवित्पाठ्यविस्तरे /
इष्वस्त्रवित्सौष्ठवे तु नेपथ्ये चैव चित्रकृत् // ना. शा_२७.६६ //
कामोपचारे वेश्या च गान्धर्वः स्वरकर्मणि /
सेवकस्तूपचारे स्यादेते वै प्राश्निकाः स्मृताः // ना. शा_२७.६७ //
एभिर्दृष्टान्तसंयुक्तैर्दोषा वाच्यास्तथा गुणाः /
अशास्त्रज्ञा विवादेषु यथा प्रकृतिकर्मतः // ना. शा_२७.६८ //
अथैते प्रश्निका ज्ञेयाः कथिता ये मयानघाः /
शास्त्रज्ञानाद्यदा तु स्यात्संघर्षः शास्त्रसंश्रयः // ना. शा_२७.६९ //
शास्त्रप्रामाणनिर्माणैर्व्यवहारो भवेत्तदा /
भर्तृनियोगादन्यो ऽन्यविग्रात्स्पर्धयापि भरतानाम् // ना. शा_२७.७० //
अर्थपताका हेतोस्संघर्षो नाम संभवति /
तेषां कार्यं व्यवहारदर्शनं पक्षपातविरहेण // ना. शा_२७.७१ //
कृत्वा पणं पताकां व्यवहारः स भवितव्यस्तु /
सर्वैरनन्यमतिभिः सुखोपविष्टैश्च शुद्धभावैश्च // ना. शा_२७.७२ //
यैर्लेखकगमकसहायास्सह सिद्धिभिर्घाताः /
नात्यासनैर्नदूरसंस्थितैः प्रेक्षकैस्तु भवितव्यम् // ना. शा_२७.७३ //
तेषामासनयोगो द्वादशहस्तस्थितः कार्यः /
यानि विहितानि पूर्वं सिद्धिस्थानानि तानि लक्ष्याणि // ना. शा_२७.७४ //
घाताश्च लक्षणीयाः प्रयोगतो नाट्ययोगे तु /
दैवाद्धातसमुत्थाः परोत्थिता वा बुधैर्नवैर्लेख्याः // ना. शा_२७.७५ //
घाता नाट्यसमुत्था ह्यात्मसमुत्थास्तु लेख्याः स्युः /
घाता यस्य त्वल्पाः संख्याताः सिद्धयश्च बहुलाः स्युः // ना. शा_२७.७६ //
विदितं कृत्वा राज्ञस्तस्मै देया पताका हि /
सिध्यतिशयात्पताका समसिद्धौ पार्थिवाज्ञया देया // ना. शा_२७.७७ //
अथ नरपतिः समः स्यादुभयोरपि सा तदा देया /
एवं विधिज्ञैर्यष्टव्यो व्यवहारः समञ्जसाम् // ना. शा_२७.७८ //
स्वस्थचित्तसुखासिनैः सुविशिष्टैर्गुणार्थिभिः /
विमृश्य प्रेक्षकैर्ग्राह्यं सर्वरागपराङ्गमुखैः // ना. शा_२७.७९ //
साधन दूषणाभासः प्रयोगसमयाश्रितैः /
समत्वमङ्गमाधुर्यं पाठ्यं प्रकृतयो रसाः // ना. शा_२७.८० //
वाद्यं गानं सनेपथ्यमेतज्ज्ञेयं प्रयत्नतः /
गीतवादित्रतालेन कलान्तरकलासु च // ना. शा_२७.८१ //
उअदङ्गं क्रियते नाट्यं समन्तात् सममुच्यते /
अङ्गोपाङ्गसमायुक्तं गीततालयान्वितम् // ना. शा_२७.८२ //
गानवाद्यसमत्वं च तद्बुधैः सममुच्यते /
सनिर्भुग्नमुरः कृत्वा चतुरश्रकृतौ करौ // ना. शा_२७.८३ //

ग्रीवाञ्चिता तथा कर्या त्वङ्गमाधुर्यमेव च /
पूर्वोक्तानीह शेषाणि यानि द्रव्याणि साधकैः // ना. शा_२७.८४ //
वद्यादीनां पुनर्वुप्रा लक्षणं सन्निबोधत /
वाद्यप्रभृतयो गानं वाद्यमाणानि निर्दिशेत् // ना. शा_२७.८५ //
यानि स्थानानि सिद्धीनां तैः सिद्धिं तु प्रकाशयेत् /
हर्षादङ्गसमुद्भूतां नानारससमुत्थिताम् // ना. शा_२७.८६ //
वारकालास्तु विज्ञेया नाट्यज्ञैर्विविधाश्रयाः /
दिवसैश्चैव रात्रिश्च तयोर्वारान् निबोधत // ना. शा_२७.८७ //
पूर्वाह्णस्त्वथ मध्याह्नस्त्वपराह्णस्तथैव च /
दिवा समुत्था विज्ञेया नाट्यवाराः प्रयोगतः // ना. शा_२७.८८ //
प्रादोषिकार्धरात्रिश्च तथा प्राभातिको ऽपरः /
नाट्यवारा भवन्त्येते रात्रावित्यनुपूर्वशः // ना. शा_२७.८९ //
एतेषां अत्र यद्योज्यं नाट्यकार्यं रसाश्रयम् /
तदहं संप्रवक्ष्यामि वारकालसमाश्रयम् // ना. शा_२७.९० //
यच्च्रोत्ररमणीयं स्याद्धर्मोत्थनकृतं च यत् /
पूर्वाह्णे तत्प्रयोक्तव्यं शुद्धं वा विकृतं तथा // ना. शा_२७.९१ //
सत्त्वोत्थानगुणैर्युक्तं वाद्यभूयिष्ठमेव च /
पुष्कलं सत्त्वयुक्तं च अपराह्णे प्रयोजयेत् // ना. शा_२७.९२ //
कैशिकीवृत्तिसंयुक्तं शृङ्गाररससंश्रयम् /
नृत्यवादित्रगीताढ्यं प्रदोषे नाट्यमिष्यते // ना. शा_२७.९३ //
यन्नर्महास्यबहुलं करुणप्रायमेव च /
प्रभातकाले तत्कार्यं नाट्यं निद्राविनाशनम् // ना. शा_२७.९४ //
अर्धरात्रे नियुञ्जीत समध्याह्णे तथैव च /
सन्ध्याभोजनकाले च नाट्यं नैव प्रयोजयेत् // ना. शा_२७.९५ //
एवं कालं च देशं च समीक्ष्य च बलाबलम् /
नित्यं नाट्यं प्रयुञ्जीत यथाभावं यथारसम् // ना. शा_२७.९६ //
अथव देशकालौ च न परीक्ष्यौ प्रयोक्तृभिः
यथैवाज्ञापयेद्भर्ता तदा योज्यमसंशयम्. // ना. शा_२७.९७ //
तथा समुदिआताश्चैव विज्ञेया नाटकाश्रिताः /
पात्रं प्रयोगमृद्धिश्च विज्ञेयास्तु त्रयो गुणाः // ना. शा_२७.९८ //
बुद्धिमत्वं सुरूपत्वं लयतालज्ञता तथा /
रसभावज्ञता चैव वयस्स्थत्वं कुतूहलम् // ना. शा_२७.९९ //
ग्रहणं धारणं चैव गात्रावैकल्यमेव च /
निजसाध्वसतोत्साह इति पात्रगतो विधिः // ना. शा_२७.१०० //
सुवाद्यता सुगानत्वं सुपाठ्यत्वं तथैव च /
शास्त्रकर्मसमायोगः प्रयोग इति संज्ञितः // ना. शा_२७.१०१ //
शुचिभूषणतायां तु माल्याभरणवाससाम् /
विचित्ररचना चैव समृद्धिरिति संज्ञिता // ना. शा_२७.१०२ //
यदा समुदिताः सर्वे एकीभूता भवन्ति हि /

अलङ्काराः सकुतपा मन्तव्यो नाटकाश्रयाः // ना. शा_२७.१०३ //
एतदुक्तं द्विजश्रेष्ठाः सिद्धीनां लक्षणं मया /
अत ऊर्ध्वं प्रवक्ष्याम्यातोद्यानां विकल्पनम् // ना. शा_२७.१०४ //

इति भारतीये नाट्यशास्त्रे सिद्धिव्यञ्जको नाम सप्तविंशो ऽध्यायः

---

अथ अष्टाविंशो ऽध्यायः

आतोद्यविधिमिदानीं वक्ष्यामः
ततं चैवावनद्धं च घनं सुषिरमेव च /
चतुर्विधं तु विज्ञेयमातोद्यं लक्षणान्वितम् // ना. शा_२८.१ //
ततं तन्त्रीकृतं ज्ञेयमवनद्धं तु पौष्करम् /
घनं तालस्तु विज्ञेयः सुषिरो वंश उच्यते // ना. शा_२८.२ //
प्रयोगस्त्रिविधो ह्येषां विज्ञेयो नाटकाश्रयः /
ततं चैवावनद्धं च तथा नाट्यकृतो ऽपरः // ना. शा_२८.३ //
ततः कुतपविन्यासो गायनः सपरिग्रहः /
वैपञ्चिको वैणिकश्च वंशवादस्तथैव च // ना. शा_२८.४ //
मार्दङ्गिकः पाणविकस्तथा दार्दुरिको बुधैः /
अवनद्धविधावेष कुतपः समुदाहृतः // ना. शा_२८.५ //

उत्तमाधममध्याभिस्तथा प्रकृतिभिर्युतः /
कुतपो नाट्ययोगे तु नानादेशसमाश्रयः // ना. शा_२८.६ //
एवं गानं च वाद्यं च नाट्यं च विविधाश्रयम् /
अलातचक्रप्रतिमं कर्तव्यं नाट्ययोक्तृभिः // ना. शा_२८.७ //
यत्तु तन्त्रीकृतं प्रोक्तं नानातोद्यसमाश्रयम् /
गान्धर्वमिति तज्ज्ञेयं स्वरतालपदात्मकम् // ना. शा_२८.८ //
अत्यर्थमिष्टं देवानां तथा प्रीतिकरं पुनः /
गन्धर्वाणां च यस्माद्धि तस्माद्गन्धर्वमुच्यते // ना. शा_२८.९ //
अस्य योनिर्भवेद्गानं वीणा वंशस्तथैव च /
एतेषां चैव वक्ष्यामि विधिं स्वरसमुत्थितम् // ना. शा_२८.१० //
गान्धर्वं त्रिविधं विद्यात्स्वरतालपदात्मकम् /
त्रिविधस्यापि वक्ष्यामि लक्षणं कर्म चैव हि // ना. शा_२८.११ //
द्व्यधिष्ठानाः स्वरा वैणाः शारीराश्च प्रकीर्तिताः /
एतेषां संप्रवक्ष्यामि विधानं लक्षणान्वितम् // ना. शा_२८.१२ //
स्वरा ग्रामौ मूर्च्छनाश्च तानाः स्थानानि वृत्तयः /
शुष्कं साधारणे वर्णा ह्यलङ्काराश्च धातवः // ना. शा_२८.१३ //
श्रुतयो यतयश्चैव नित्यं स्वरगतात्मकाः /
दारव्यां समवायस्तु वीणायां समुदाहृतः // ना. शा_२८.१४ //

स्वरा ग्रामावलङ्कारा वर्णाः स्थानानि जातयः /
साधारणे च शरीर्यां वीणायामेष संग्रहः // ना. शा_२८.१५ //
व्यञ्जनानि स्वरा वर्णाः सन्धयो ऽथ विभक्तयः /
नामाख्यातोपसर्गाश्च निपातास्तद्धिताः कृतः // ना. शा_२८.१६ //
चन्दोविधिरलङ्कारा ज्ञेयः पदगतो विधिः /
निबद्धं चानिबद्धं च द्विविधं तत्पदं स्मृतम् // ना. शा_२८.१७ //
ध्रुवस्त्वावापनिष्कामौ विक्षेपो ऽथ प्रवेशनम् /
शम्या तालः सन्निपातः परिवर्तः सवस्तुकः // ना. शा_२८.१८ //
मात्रा प्रकरणाङ्गानि विवारी यतयो लयाः /
गीतयो ऽवयवा मार्गाः पादमार्गाः सपाणयः // ना. शा_२८.१९ //
इत्येकविंशतिविधं ज्ञेयं तालगतं बुधैः /
गान्धर्वसंग्रहो ह्येष विस्तरं तु निबोधत // ना. शा_२८.२० //
तत्र स्वराः:
षड्जश्च ऋषभश्चैव गान्धारो मध्यमस्तथा /
पञ्चमो धैवतश्चैव सप्तमो ऽथ निषादवान् // ना. शा_२८.२१ //
चतुर्विधत्वमेतेषां विज्ञेयं गानयोक्तृभिः /
वादी चैवाथ संवादी विवादी चानुवाद्यपि // ना. शा_२८.२२ //
संवादो मध्यमग्रामे पञ्चमस्यर्षभस्य च /
षड्जग्रामे तु षड्जस्य संवादः पञ्चमस्य च // ना. शा_२८.२३ //
तिस्रो द्वे च चतस्रश्च चतस्रस्तिस्र एव च /
द्वे चैवाद्य चतस्रश्च षड्जग्रामे भवेद्विधिः // ना. शा_२८.२४ //
चतुःश्रुतिर्भवेत् षड्ज ऋषभस्त्रिश्रुतिः स्मृतः /
द्विश्रुतिश्चैव गान्धारो मध्यमश्च चतुःश्रुतिः // ना. शा_२८.२५ //
पञ्चमस्तद्वदेव स्यात् त्रिश्रुतिर्धैवतो मतः /
द्विश्रुतिश्च निषादः स्यात् षड्जग्रामे विधिर्भवेत् // ना. शा_२८.२६ //
अथ मूर्च्छनाः द्वैग्रामिक्यश्चतुर्दशः
आदावुत्तरमन्द्रा स्याद्रजनी चोत्तरायता /
चतुर्थी शुद्धषड्जा तु पञ्चमी मत्सरीकृता // ना. शा_२८.२७ //
अश्वक्रान्ता तथा षष्ठी सप्तमी चाभिरुद्गता /
षड्जग्रामाश्रिता ह्येता विज्ञेयाः सप्तमूर्च्छनाः // ना. शा_२८.२८ //
षड्जे चोत्तरमन्द्रा स्यादृषभे चाभिरुद्गता /
अश्वक्रान्ता तु गान्धारे मध्यमे मत्सरीकृता // ना. शा_२८.२९ //
पञ्चमे शुद्धषड्जा स्याद्धैवते चोत्तरायता /
निषादे रजनी च स्यादित्येताः षड्जमूर्च्छनाः // ना. शा_२८.३० //
अथ मध्यमग्रामे:
सौवीरी हरिणाश्वा च स्यात्कलोपनता तथा /
शुद्धमध्या तथा मार्गी पौरवी हृष्यका तथा /
मध्यमग्रामजा ह्येता विज्ञेयाः सप्तमूर्च्छनाः // ना. शा_२८.३१ //
अपि च:

क्रमयुक्ताः स्वराः सप्त मूर्च्छनेत्यभिसंज्ञिताः /
षट्पञ्चस्वरकास्तानाः षाडवौडुविताश्रयाः // ना. शा_२८.३२ //
साधारणकृताश्चैव काकलीसमलङ्कृताः /
अन्तरस्वरसंयुक्ता मूर्च्छना ग्रामयोर्द्वयोः // ना. शा_२८.३३ //
यथाः
चायासु भवति शीतं प्रस्वेदो भवति चातपस्थस्य /
न च नागतो वसन्तो न च निःशेषः शिशिरकालः // ना. शा_२८.३४ //
भवतश्चात्रः
अन्तरस्वरसंयोगो नित्यमारोहिसंश्रयः /
कार्यो ह्यल्पो विशेषेण नावरोही कदाचन // ना. शा_२८.३५ //
क्रियमाणो ऽवरोही स्यादल्पो वा यदि वा बहुः /
जातिरागं श्रुतिं चैव नयन्ते त्वन्तरस्वराः // ना. शा_२८.३६ //
इति

जातीरिदानीं वक्ष्यामः

स्वरसाधारणगतास्तिस्रो ज्ञेयास्तु जातयः /
मध्यमा पञ्चमी चैव षड्जमध्या तथैव च // ना. शा_२८.३७ //
आसामंशास्तु विज्ञेयाः षड्जमध्यमपञ्चमाः /
यथा स्वं दुर्बलतरा व्यक्ता सा पञ्चमी तथा // ना. शा_२८.३८ //
जातयो ऽष्टादशेत्येवं ब्रह्मणाभिहितं पुरा /
तास्त्वहं वर्तयिष्यामि ग्रहांशादिविभागतः // ना. शा_२८.३९ //
षाड्जी चैवार्षभी चैव धैवत्यथ निषादिनी /
षड्जोदीच्यवती चैव तथा वै षड्जकैशिकी // ना. शा_२८.४० //
षड्जमध्या तथा चैव षड्जग्रामसमाश्रयाः /
अत ऊर्ध्वं प्रवक्ष्यामि मध्यमग्रामसंश्रिताः // ना. शा_२८.४१ //
गान्धारी मध्यमा चैव गान्धारोदीच्यवा तथा /
पञ्चमी रक्तगान्धारी तथा गान्धारपञ्चमी // ना. शा_२८.४२ //
मध्यमोदीच्यवा चैव नन्दयन्ति तथैव च /
कर्मारवी च विज्ञेया तथान्ध्री कैशिकी मता // ना. शा_२८.४३ //
स्वरसाधारणगतास्तिस्रो ज्ञेयास्तु जातयः /
मध्यमा षड्जमध्या च पञ्चमी चैव सूरिभिः // ना. शा_२८.४४ //
आसामंशास्तु विज्ञेयाः षड्जमध्यमपञ्चमाः /
यथास्वं दुर्बलतरं व्यत्यासात्वत्र पञ्चमी // ना. शा_२८.४५ //
शुद्धा विकृताश्चैव हि समवायाज्जातयस्तु जायन्ते /
पुनरेवाशुद्धकृता भवन्त्यथैकादशान्यास्तु // ना. शा_२८.४६ //
तासां यन्निर्वृत्ताः स्वरेष्वथांशेषु जातिषु च जातिः /
तद्वक्ष्यामि यथावत्संक्षेपेण क्रमेणेह // ना. शा_२८.४७ //
परस्परविनिष्पन्ना ज्ञेया ह्येवं तु जातयः /
पृथग्लक्षणसंयुक्ता द्वैग्रामिकाः स्वराश्रयाः // ना. शा_२८.४८ //

चतस्रो जातयो नित्यं ज्ञेयाः सप्तस्वरा बुधैः /
चतस्रः षट्स्वरा ज्ञेयाः स्मृताः पञ्चस्वरा दश // ना. शा_२८.४९ //
मध्यमोदीच्यवा चैव तथा वै षड्जकैशिकी /
कार्मारवी च संपूर्णा तथा गान्धारपञ्चमी // ना. शा_२८.५० //
षाड्ज्यान्ध्री नन्दयन्ती च गान्धारोदीच्यवा तथा /
चतस्रः षट्स्वरा ह्येताः ज्ञेयाः पञ्च स्वरा दश // ना. शा_२८.५१ //
नैषादी चार्षभी चैव धैवती षड्जमध्यमा /
षड्जोदीच्यवती चैव पञ्च षड्जाश्रिताः स्मृताः // ना. शा_२८.५२ //
गान्धारी रक्तगान्धारी मध्यमा पञ्चमी तथा /
कैशिकी चैव पञ्चैता मध्यमग्रामसंश्रयाः // ना. शा_२८.५३ //
यास्ताः सप्तस्वरा ज्ञेया याश्चैताः षट्स्वराः स्मृताः /
कदाचित् षाडवीभूताः कदाचिच्चौडुवे मताः // ना. शा_२८.५४ //
षड्जग्रामे तु सम्पूर्णा विज्ञेया षड्जकैशिकी /
षट्स्वरा चैव विज्ञेया षाड्जी गान्धारयोगतः // ना. शा_२८.५५ //
गान्धारपञ्चमी चैव मध्यमोदीच्यवा तथा /
पुनश्च षट्स्वरा ज्ञेया गान्धारोदीच्यवा बुधैः // ना. शा_२८.५६ //
आन्ध्री च नन्दयन्ती च मध्यमग्रामसंश्रयाः /
एवमेता बुधैर्ज्ञेया द्वैग्रामिक्यो ऽपि जातयः // ना. शा_२८.५७ //
अत ऊर्ध्वं प्रवक्ष्यामि तासामंशविकल्पनम् /
षट्स्वराः सप्तमे ह्यंशे नेष्यन्ते षड्जमध्यमाः // ना. शा_२८.५८ //
संवाद्यलोपाद्गान्धारे तद्वदेव हि नेष्यते /
गान्धारीरक्तगान्धारीकैशिकीनां तु पञ्चमः // ना. शा_२८.५९ //
षड्जायां चैव गान्धारमंशकं विद्धि षाडवम् /
षाडवं धैवते नास्ति षड्जोदीच्यामथांशके // ना. शा_२८.६० //
संवाद्यलोपात्सप्तैताः षाट्स्वर्येण विवर्जिताः /
गान्धारीरक्तगान्धार्योः षड्जमध्यमपञ्चमाः // ना. शा_२८.६१ //
सप्तमश्चैव विज्ञेयो येषु नौडुवितं भवेत् /
द्वौ षड्जमध्यमांशो तु गान्धारो ऽथ निषादवान् // ना. शा_२८.६२ //
ऋषभश्चैव पञ्चम्यां कैशिक्यां चैव धैवतः /
एवं तु द्वादशैवेह वर्ज्याः पञ्च स्वराः सदा // ना. शा_२८.६३ //
तास्त्वनौडुविता नित्यं कर्तव्या हि स्वराश्रयाः /
सर्वस्वराणां नाशस्तु विहितस्त्वथ जातिषु // ना. शा_२८.६४ //
न मध्यमस्य नाशस्तु कर्तव्यो हि कदाचन /
सर्वस्वराणां प्रवरो ह्यनाशी मध्यमः स्मृतः /
गान्धर्वकल्पे विहितः सामस्वपि च मध्यमः // ना. शा_२८.६५ //
दशकं जातिलक्षणम्:
ग्रहांशौ तारमन्द्रौ च न्यासो ऽपन्यास एव च /
अल्पत्वं च बहुत्वं च षाडवौडुविते तथा // ना. शा_२८.६६ //
अथ ग्रहाः:

ग्रहास्तु सर्वजातीनामंशवत्परिकीर्तिताः /
यत्प्रवृत्तं भवेद्गेयमंशो ग्रहविकल्पितः // ना. शा_२८.६७ //
तत्रांशो नाम:
यस्मिन् भवति रागश्च यस्माच्चैव प्रवर्तते /
मन्द्रश्च तारमन्द्रश्च यो ऽत्यर्थं चोपलभ्यते // ना. शा_२८.६८ //
ग्रहापन्यासविन्याससंन्यासन्यासगोचरः /
अनुवृत्तश्च यस्येह सोंऽशः स्याद्दशलक्षणः // ना. शा_२८.६९ //
पञ्चस्वरपरा तारगतिर्यथा
अंशात्तारगतिं विद्यादाचतुर्थस्वरादिह /
आ पञ्चमात्पञ्चमाद्वा नातःपरमिहेष्यते // ना. शा_२८.७० //

त्रिधा मन्द्रगतिः ।
अंशपरा न्यासपरा अपरन्यासपरा चेति ।

मन्द्रस्त्वंशपरो नास्ति न्यासौ तु द्वौ व्यवस्थितौ /
गान्धारन्यासलिङ्गे तु दृष्टमार्षभसेवनम् // ना. शा_२८.७१ //

अथ न्यास एकविंशतिसङ्ख्यः ।
अङ्गसमाप्तौ न्यासः ।
तद्वदपन्यासो ह्यङ्गमध्ये षट्पञ्चाशत्सङ्ख्यः ।

यथा:
न्यासो ऽङ्गसमाप्तौ स चैकविंशतिसङ्ख्यस्तथा /
अक्षराणि षट्पञ्चाशत्संख्यो ऽपन्यासो ऽङ्गमध्ये भवेत् // ना. शा_२८.७२ //
तत्र प्रथमं विदारीमध्ये न्यासस्वरप्रयुक्तस्तु /
विवदनशीलं मुक्त्वा संन्यासः सो ऽभिधातव्यः /
कृत्वा पदावसाने विन्यासात्क्वापि विन्यासः // ना. शा_२८.७३ //

तथा:
अल्पत्वे ऽथ बहुत्वे बलवदबलता विनिश्चयादेव /
जातिस्वरैस्तु नित्यं जात्यल्पत्वं द्विविधमेतत् // ना. शा_२८.७४ //
सञ्चारांशे बलस्थानामल्पत्वे दुर्बलासु च /
न्यासश्चान्तरमार्गस्तु जातीनां व्यक्तिकारकः // ना. शा_२८.७५ //
पञ्चस्वरमौडुवितं विज्ञेयं दशविधं प्रयोगज्ञैः /
त्रिंशत्प्रकारविहितं पूर्वोक्तं लक्षणं चास्य // ना. शा_२८.७६ //
षट्स्वरस्य प्रयोगो ऽस्ति तथा पञ्चस्वरस्य च /
चतुःस्वरप्रयोगो ऽपि ह्यवकृष्टध्रुवास्विह // ना. शा_२८.७७ //
द्वैग्रामिकीणां जातीनां सर्वासामपि नित्यशः /
अंशास्त्रिषष्टिर्विज्ञेयास्तेषां चैवांशवद् ग्रहाः // ना. शा_२८.७८ //

अंशग्रहमिदानीं वक्ष्यामः ।

तत्रः
मध्यमोदीच्यवायास्तु नन्दयन्त्यास्तथैव च /
तथा गान्धारपञ्चम्याः पञ्चमोंऽशो ग्रहस्तथा // ना. शा_२८.७९ //
धैवत्याश्च तथा ह्यंशौ विज्ञेयौ धैवतर्षभौ /
पञ्चम्याश्च तथा ज्ञेयौ ग्रहांशौ पञ्चमर्षभौ // ना. शा_२८.८० //
गान्धारोदीच्यवायास्तु ग्रहांशौ षड्जमध्यमौ /
आर्षभ्याश्च ग्रहा अंशा धैवतर्षभसप्तमाः // ना. शा_२८.८१ //
गान्धारश्च निषादश्च ह्यार्षभश्च तथापरः /
निषादिन्यास्त्रयो ह्येते ग्रहा अंशाश्च कीर्तिताः // ना. शा_२८.८२ //
षड्जपञ्चमगान्धारैस्त्रिभिरेव प्रकीर्तिताः /
अंशैर्ग्रहैस्तथा चैव विज्ञेया षड्जकैशिकी // ना. शा_२८.८३ //
षड्जश्च मध्यमश्चैव निषादो धैवतस्तथा /
षड्जोदीच्यवतीजातेर्ग्रहा अंशाश्च कीर्तिताः // ना. शा_२८.८४ //
पञ्चमश्चार्षभश्चैव निषादो धैवतस्तथा /
कार्मारव्या बुधैरंशा ग्रहाश्च परिकीर्तिताः // ना. शा_२८.८५ //
गान्धारश्चार्षभश्चैव पञ्चमो ऽथ निषादवान् /
चत्वरोंशा भवन्त्यान्ध्र्या ग्रहाश्चैव तथैव हि // ना. शा_२८.८६ //
षड्जश्चाथर्षभश्चैव मध्यमः पञ्चमस्तथा /
मध्यमाया ग्रहा ज्ञेया अंशाश्चैव सधैवताः // ना. शा_२८.८७ //
निषादषड्जगान्धारमध्यमाः पञ्चमस्तथा /
गान्धारीरक्तगान्धार्योर्ग्रहा अंशाः प्रकीर्तिताः // ना. शा_२८.८८ //
षड्जी धैवतगान्धारषड्जमध्यमपञ्चमैः /
ग्रहैरंशैश्च विज्ञेया विकृता स्वरयोगतः // ना. शा_२८.८९ //
कैशिक्याश्चार्षभं हित्वा ग्रहांशाः षट् स्वराः स्मृताः /
सप्तस्वरग्रहांशा तु विज्ञेया षड्जमध्यमा // ना. शा_२८.९० //
एते त्रिषष्टिर्विज्ञेयाः सर्वास्वंशास्तु जातिषु /
अंशवच्च ग्रहास्तासां सर्वासामेव नित्यशः // ना. शा_२८.९१ //
सर्वासामेव जातीनां त्रिजातिस्तु गणः स्मृतः /
ते च सप्त गणा ज्ञेया वर्धमानस्वरा बुधैः // ना. शा_२८.९२ //
एकस्वरो द्विस्वरश्च त्रिस्वरो ऽथ चतुःस्वरः /
पञ्चस्वरश्चतुर्था स्यादेकधा सप्तषट्स्वरौ // ना. शा_२८.९३ //
एतदुक्तं मया त्वासां ग्रहांशपरिकल्पनम् /
पुनश्चैव प्रवक्ष्यामि न्यासापन्यासयोगतः // ना. शा_२८.९४ //
पञ्चांशा तु भवेत् षाड्जी निषादर्षभवर्जिता /
अपन्यासो भवेदत्र गान्धारः पञ्चमस्तथा // ना. शा_२८.९५ //
न्यासश्चात्र भवेत् षड्जो लोप्यः सप्तम एव च /
षड्जगान्धारसञ्चारः षड्जधैवतयोस्तथा // ना. शा_२८.९६ //
षाडवं सप्तमोपेतमल्पौ वै सप्तमर्षभौ /
गान्धारस्य च बाहुल्यं त्वत्र कार्यं प्रयोक्तुभिः // ना. शा_२८.९७ //

आर्षभ्यामृषभस्त्वंशो निषादो धैवतस्तथा /
एत एव ह्यपन्यासा न्यासश्चाप्यृषभः स्मृतः /
षट्पञ्चस्वरता चात्र षड्जपञ्चमयोर्विना // ना. शा_२८.९८ //
धैवत्यां धैवतो न्यासस्त्वंशावृषभधैवतो /
अपन्यासा भवन्त्यत्र धैवतार्षभमध्यमाः // ना. शा_२८.९९ //
षड्जपञ्चमहीनं तु पाञ्चस्वर्यं विधीयते /
पञ्चमेन विना चैव षाडवं परिकीर्तितम् // ना. शा_२८.१०० //
आरोहिणौ च तौ कार्यौ लङ्घनीयौ तथैव च /
निषादश्चर्षभश्चैव गान्धारो बलवांस्तथा // ना. शा_२८.१०१ //
निषादिन्यां निषादोंऽशो सगान्धारर्षभस्तथा /
एत एव ह्यपन्यासा न्यासश्चैवात्र सप्तमः // ना. शा_२८.१०२ //
धैवत्या इव कर्तव्ये षाडवौडुविते तथा /
तद्वच्च लङ्घनीयौ तु बलवन्तौ तथैव च // ना. शा_२८.१०३ //
अंशास्तु षड्जकैशिक्याः षड्जगान्धारपञ्चमाः /
अपन्यासा भवन्त्यत्र षड्जपञ्चमसप्तमाः // ना. शा_२८.१०४ //
गान्धारश्च भवेन्न्यासो हैनस्वर्यं न चात्र तु /
दौर्बल्यं चात्र कर्तव्यं धैवतस्यार्षभस्य च // ना. शा_२८.१०५ //
(मध्यम)
षड्जश्च मध्यमश्चैव निषादो धैवतस्तथा /
स्युः षड्जोदीच्यवांशास्तु न्यासश्चैव तु मध्यमः // ना. शा_२८.१०६ //
अपन्यासो भवत्यस्य धैवतः षड्ज एव च /
परस्परांशगमनमिष्टतश्च विधीयते // ना. शा_२८.१०७ //
षाट्स्वर्यमृषभापेतं कार्यं गान्धर्ववेदिभिः /
पञ्चमार्षभहीनं तु पाञ्चस्वर्यं तु तत्र वै // ना. शा_२८.१०८ //
षड्जश्चाप्यृषभश्चैव गान्धारश्च बली भवेत् /
गान्धारस्य च बाहुल्यं मन्द्रस्थाने विधीयते // ना. शा_२८.१०९ //
सर्वेशाः षड्जमध्यायामपन्यासास्तथैव च /
षड्जश्च मध्यमश्चापि न्यासौ नार्यौ प्रयोक्तृभिः // ना. शा_२८.११० //
गान्धारसप्तमापेतं पाञ्चस्वर्यं विधीयते /
षाडवं सप्तमापेतं कार्यं चात्र प्रयोगतः // ना. शा_२८.१११ //
सर्वस्वराणां सञ्चार इष्टतस्तु विधीयते /
षड्जग्रामाश्रिता ह्येता विज्ञेयाः सप्त जातयः // ना. शा_२८.११२ //
अतः परं प्रवक्ष्यामि मध्यमग्रामसंश्रयाः /
गान्धार्याः पञ्च एवांशा धैवतर्षभवर्जिताः // ना. शा_२८.११३ //
षड्जश्च पञ्चमश्चैव ह्यपन्यासौ प्रकीर्तितौ /
गान्धारश्च भवेन्न्यासः षाडवं चर्षभं विना // ना. शा_२८.११४ //
धैवतर्षभयोर्हीनं तथा चौडुवितं भवेत् /
लङ्घनीयौ च तौ नित्यमार्षभाद्धैवतं व्रजेत् /
विहितस्त्विति गान्धार्याः स्वरन्यासांशगोचरः // ना. शा_२८.११५ //

लक्षणं रक्तगान्धार्या गान्धार्या एव यत्स्मृतम् /
धैवतो बलवानत्र दौर्बल्यं तस्य लोपतः // ना. शा_२८.११६ //
गान्धारषड्जयोश्चात्र सञ्चारश्चार्षभाद्विना /
अपन्यासस्तथा चैव मध्यमस्तु विधीयते // ना. शा_२८.११७ //
गान्धारोदीच्यवांशौ तु विज्ञेयौ षड्जमध्यमौ /
पाञ्चस्वर्यं न चैवात्र षाट्स्वर्यमृषभं विना // ना. शा_२८.११८ //
कार्यश्चान्तरमार्गश्च न्यासोपन्यास एव च /
षड्जोदीच्यवतीवत्तु पाञ्चस्वर्येण जातुचित् // ना. शा_२८.११९ //
मध्यमाया भवन्त्यंशा विना गान्धारसप्तमौ /
एत एव ह्यपन्यासा न्यासश्चैव तु मध्यमः // ना. शा_२८.१२० //
गान्धारसप्तमापेतं पाञ्चस्वर्यं विधीयते /
षाडवं चाप्यगान्धारं कर्तव्यं तु प्रयोगतः // ना. शा_२८.१२१ //
षड्जमध्यमयोश्चात्र कार्यं बाहुल्यमेव हि /
गान्धारलङ्घनं चात्र कार्यं नित्यं प्रयोक्तृभिः // ना. शा_२८.१२२ //
मध्यमोदीच्यवा पूर्णा ह्यंश एकस्तु पञ्चमः /
शेषो विधिस्तु कर्तव्यो गान्धारोदीच्यवां गतः // ना. शा_२८.१२३ //
द्वावंशावथ पञ्चम्यामृषभः पञ्चमस्तथा /
स(ऋ)निषादावपन्यासौ न्यासश्चैव तु पञ्चमः // ना. शा_२८.१२४ //
मध्यमावत्तु कर्तव्ये षाडवौडुविते तथा /
दौर्बल्यं चात्र कर्तव्यं षड्जगान्धारमध्यमैः // ना. शा_२८.१२५ //
कुर्यादप्यत्र सञ्चारं पञ्चमस्यार्षभस्य च /
गान्धारगमनं चैव कार्यं त्वल्पश्च सप्तमः // ना. शा_२८.१२६ //
(ल्पं च सप्तमात्)
अथ गान्धारपञ्चम्याः पञ्चमोंऽशः प्रकीर्तितः /
तारगत्या तु षड्जो ऽपि कदाचिन्नातिवर्तते // ना. शा_२८.१२७ //
ऋषभः पञ्चमश्चैव ह्यपन्यासौ प्रकीर्तितौ /
न्यासश्चैव तु गान्धारो सा च पूर्णस्वरा सदा /
पञ्चम्या यश्च गान्धार्याः सञ्चारः स विधीयते // ना. शा_२८.१२८ //
पञ्चमश्चार्षभश्चैव गान्धारो ऽथ निषादवान् /
चत्वारोंऽशा भवन्त्यान्ध्यामपन्यासास्त एव हि // ना. शा_२८.१२९ //
गान्धारश्च भवेन्न्यासः षड्जापेतं तु षाडवम् /
गान्धारार्षभयोश्चापि सञ्चारस्तु परस्परम् // ना. शा_२८.१३० //
सप्तमस्य च षष्ठस्य न्यासो गत्यनुपूर्वशः /
षड्जस्य लङ्घनं चात्र नास्ति चौडुवितं सदा // ना. शा_२८.१३१ //
नन्दयन्त्याः क्रमान् न्यासापन्यासांशाः प्रकीर्तिताः /
गान्धारो मध्यमश्चैव पञ्चमश्चैव नित्यशः // ना. शा_२८.१३२ //
षड्जो लोप्यश्च लङ्घ्यश्च नान्ध्रीसञ्चरणं भवेत् /
लङ्घनं ह्यृषभस्यापि तच्च मन्द्रगतं स्मृतम् // ना. शा_२८.१३३ //
तारगत्या तु षड्जस्तु कदाचिन्नातिवर्तते /

गान्धारो वा ग्रहः कार्यस्तथा न्यासश्च नित्यशः // ना. शा_२८.१३४ //
कार्मारव्याः स्मृता ह्यंशा आर्षभः पञ्चमस्तथा /
धैवतश्च निषादश्चाप्यपन्यासास्त एव तु /
पञ्चमश्च भवेन्न्यासो हैनस्वर्यं न चात्र तु // ना. शा_२८.१३५ //
गान्धारस्य विशेषेण सर्वतो गमनं भवेत् // ना. शा_२८.१३६ //
कैशिक्यास्तु तथा ह्यंशाः सर्वे चैवार्षभं विना /
एत एव ह्यपन्यासा न्यासौ गान्धारसप्तमौ // ना. शा_२८.१३७ //
धैवतेंशे निषादे च न्यासः पञ्चम इष्यते /
अपन्यासः कदाचित्तु ऋषभो ऽपि विधीयते // ना. शा_२८.१३८ //
आर्षभे षाडवं चात्र धैवतर्षभवर्जितम् /
तथा चौडुवितं कुर्याद् बलिनौ चान्त्यपञ्चमौ // ना. शा_२८.१३९ //
दौर्बल्यमृषभस्यात्र लङ्घनं च विशेषतः /
अंशवत् कल्पितश्चान्यैः षाडवे तु विधीयते /
षड्जमध्यावदत्रापि सञ्चारस्तु भवेदिह // ना. शा_२८.१४० //
एवमेता बुधैर्ज्ञेया जातयो दशलक्षणाः /
यथा यस्मिन् रसे याश्च गदतो मे निबोधत // ना. शा_२८.१४१ //

इति जातिविकल्पाध्यायो ऽष्टाविंशः समाप्तः

---

अथ एकोनत्रिंशत्तमो ऽध्यायः

षड्जोदीच्यवती चैव षड्जमध्या तथैव च /
मध्यपञ्चमबाहुल्यात् कार्या शृङ्गारहास्ययोः // ना. शा_२९.१ //
षाड्जी त्वथार्षभी चैव स्वस्वरांशपरिग्रहात् /
वीररौद्राद्भुतेष्वेते प्रयोज्ये गानयोक्तृभिः // ना. शा_२९.२ //
निषादे ऽंशे तु नैषादी गान्धारे षड्जकैशिकी /
करुणे तु रसे कार्या जातिगानविशारदैः // ना. शा_२९.३ //
धैवती धैवतांशे तु बीभत्से सभयानके /
ध्रुवाविधाने कर्तव्या जातिर्गाने प्रयत्नतः /
रसं कार्यमवस्थां च ज्ञात्वा योज्या प्रयोक्तृभिः /
षड्जग्रामाश्रिता ह्येताः प्रयोज्या जातयो बुधैः // ना. शा_२९.४ //
अतः परं प्रवक्ष्यामि मध्यमग्रामसंश्रयाः /
गान्धारीरक्तगान्धार्यौ गान्धारांशोपपत्तितः /
करुणे तु रसे कार्ये निषादे ऽंशे तथैव च // ना. शा_२९.५ //
मध्यमा पञ्चमी चैव नन्दयन्ती तथैव च /
गान्धारपञ्चमी चैव मध्यमोदीच्यवा तथा /
मध्यमपञ्चमबाहुल्यात् कार्याः शृङ्गारहास्ययोः // ना. शा_२९.६ //
कार्मारवी तथा चान्ध्री गान्धारोदीच्यवा तथा /

वीरे रौद्रे ऽद्भुते कार्याः षड्जर्षभांशयोजिताः /
कैशिकी धैवतांशे तु बीभत्से सभयानके // ना. शा_२९.७ //
एकैव षड्जमध्या ज्ञेया सर्वरससंश्रया जातिः /
तस्यास्त्वंशाः सर्वे स्वरास्तु विहिताः प्रयोगविधौ // ना. शा_२९.८ //
यो यदा बलवान् यस्मिन् स्वरो जातिसमाश्रयात् /
तत्प्रवृत्तं रसे कार्यं गानं गेये प्रयोक्तृभिः // ना. शा_२९.९ //
मध्यपञ्चमभूयिष्ठं गानं शृङ्गारहास्ययोः /
षड्जर्षभप्रायकृतं वीररौद्राद्भुतेषु च // ना. शा_२९.१० //
गान्धारः सप्तमश्चायं करुणे गानमिष्यते /
तथा धैवतभूयिष्ठं बीभत्से सभयानके // ना. शा_२९.११ //
एकैव षड्जमध्या विज्ञेयाखिलरसाश्रया जातिः /
तस्यास्त्वंशाः सर्वे स्वराश्च विहिताः प्रयोगविधौ // ना. शा_२९.१२ //
सर्वेष्वंशेषु रसा नियमविधानेन संप्रयोक्तव्याः /
काकल्यन्तरविहिता विशेषयुक्तास्तु बलवन्तः /
एवमेता बुधैर्ज्ञेया जातयो नाट्यसंश्रयाः // ना. शा_२९.१३ //
पाठ्यप्रयोगविहितान् स्वरांश्चापि निबोधत /
हास्यशृङ्गारयोः कार्यौ स्वरौ मध्यमपञ्चमौ // ना. शा_२९.१३*१ //
षड्जर्षभौ च कर्तव्यौ वीररौद्राद्भुतेष्वथ /
गान्धारश्च निषादश्च कर्तव्यौ करुणे रसे // ना. शा_२९.१३*२ //
धैवतश्च प्रयोगज्ञैर्बीभत्से सभयानके /
अत ऊर्ध्वं प्रवक्ष्यामि वर्णालङ्कारलक्षणम् // ना. शा_२९.१३*३ //
आरोही चावरोही च स्थायिसञ्चारिणौ तथा /
वर्णाश्चत्वार एवैते ह्यलङ्कारास्तदाश्रयाः // ना. शा_२९.१४ //
आरोहन्ति स्वरा यत्रारोहीति स तु संज्ञितः /
यत्र चैवावरोहन्ति सो ऽवरोही प्रकीर्तितः // ना. शा_२९.१५ //
स्थिराः स्वराः समा यत्र स्थायी वर्णः स उच्यते /
सञ्चरन्ति स्वरा यत्र स सञ्चारीति कीर्तितः // ना. शा_२९.१६ //
शारीरस्वरसम्भूतास्त्रिस्थानगुणगोचराः /
चत्वारो लक्षणोपेता वर्णास्तत्र प्रकीर्तिताः // ना. शा_२९.१७ //
एवं लक्षणसंयुक्तं यदा वर्णो ऽनुकर्षति /
तदा वर्णस्य निष्पत्तिर्ज्ञेया स्वरसमुद्भवा // ना. शा_२९.१८ //
एते वर्णास्तु विज्ञेयाश्चत्वारो गीतयोजकाः /
एतान् समाश्रितान् सम्यगलङ्कारान् निबोधत // ना. शा_२९.१९ //
प्रसन्नादिः प्रसन्नान्तः प्रसन्नाद्यन्त एव च /
प्रसन्नमध्यश्च तथा क्रमरेचित एव च /
प्रस्तारश्च प्रसादश्च सप्तैते स्थायिवर्णगाः // ना. शा_२९.२० //
अथ सञ्चारिजान् भूयः कीर्त्यमानान्निबोधत /
मन्द्रस्तथा प्रसन्नादिः प्रेङ्खितो बिन्दुरेव च /
सन्निवृत्तः प्रवृत्तश्च रेचितः कम्पितः समः // ना. शा_२९.२१ //

कुहरश्चैव वेणुश्च रञ्चितो ह्यवलोकितः /
आवर्तकः परावृत्तः सञ्चारिण्यश्चतुर्दश // ना. शा_२९.२२ //
निष्कर्षोभ्युचयश्चैव हसितो बिन्दुरेव च /
प्रेङ्खोलितस्तथाक्षिप्तो विस्तीर्णोद्घटितस्तथा // ना. शा_२९.२३ //
ह्लादमानः सम्प्रदानः सन्धिः प्रच्चादनस्तथा /
प्रसन्नादिः प्रसन्नान्त इत्यारोहे त्रयोदश // ना. शा_२९.२४ //
विधूतश्च त्रिवर्णश्च तथोद्वाहित एव च /
उद्गीतश्च तथा वेणिर्विज्ञेया ह्यवरोहिणः // ना. शा_२९.२५ //
सप्तरूपगता ज्ञेया अलङ्कारा बुधैस्त्विमे /
नैते सर्वे ध्रुवास्विष्टाः श्रुतिवर्णप्रकर्षणात् // ना. शा_२९.२६ //
न हि वर्णप्रकर्षस्तु ध्रुवाणां सिद्धिरिष्यते /
श्येनो वाप्यथवा बिन्दुर्ये चान्येति प्रकर्षिणः // ना. शा_२९.२७ //
ते ध्रुवाणां प्रयोगेषु न कार्याः स्वप्रमाणतः /
तद्ध्रुवाणां प्रयोगे तु कार्या ह्यारोहिणः स्वराः // ना. शा_२९.२८ //
यस्मादर्थानुरूपा हि ध्रुवा कार्यार्थदर्शिका /
वर्णानां तु पुनः कार्यं कृशत्वं पदसंश्रयम् // ना. शा_२९.२९ //
ये ऽत्र प्रयोगे गच्चन्ति तांश्च वर्णान् निबोधत /
प्रसन्नादिः प्रसन्नान्तः प्रसन्नाद्यन्त एव च // ना. शा_२९.३० //
प्रसन्नमध्यमश्चैव बिन्दुः कम्पितरेचितौ /
तारश्चैव हि मन्द्रश्च तथा तारतरः पुनः /
प्रेङ्खोलितस्तारमन्द्रो मन्द्रतारः समस्तथा // ना. शा_२९.३१ //
सन्निवृत्तः प्रवृत्तश्च प्रसादो ऽपाङ्ग एव च /
ऊर्मिः प्रेङ्खो ऽवलोकश्च इत्येते सर्ववर्णगाः // ना. शा_२९.३२ //
स्थायिवर्णादृते चैषां संप्रवक्ष्यामि लक्षणम् /
क्रमशो दीपितो यः स्यात् प्रसन्नादिः स कथ्यते // ना. शा_२९.३३ //
व्यस्तोच्चारित एवैष प्रसन्नान्तो विधीयते /
आद्यन्तयोः प्रसन्नत्वात् प्रसन्नाद्यन्त इष्यते // ना. शा_२९.३४ //
प्रसन्नमध्यो मध्ये तु प्रसन्नत्वादुदाहृतः /
सर्वसाम्यात् समो ज्ञेयः स्थितस्त्वेकस्वरो ऽपि यः // ना. शा_२९.३५ //
आदिमध्यलयो यत्र स चोर्मिरिति संज्ञितः /
श्रुतयो ऽन्त्याद् द्वितीयस्य मृदुमध्यायताः स्वराः // ना. शा_२९.३६ //
आयतत्वं भवेन्नीचे मृदुत्वं तु विपर्यये /
स्वे स्वरे मध्यमत्वं च मृदुमध्यमयोस्तथा /
दीप्तायते करुणानां श्रुतीनामेष निश्चयः // ना. शा_२९.३७ //
बिन्दुरेककलो ज्ञेयः कम्पितश्च कलाद्वयम् /
गतागतप्रवृत्तो यः स प्रेङ्खोलित इष्यते // ना. शा_२९.३८ //
यस्तु कण्ठे स्वरो ऽधः स्यात् स तु तारः प्रकीर्तितः /
उरोगतस्तथा मन्द्रो मूर्ध्नि तारतरस्तथा // ना. शा_२९.३९ //
क्रमागतस्तु यस्तारः षष्ठः पञ्चम एव वा /

तारमन्द्रप्रसन्नस्तु ज्ञेयो मन्द्रगतः स च // ना. शा_२९.४० //
लङ्घयित्वा परान् मन्द्रात् परां तारगतिं गतः /
मन्द्रतारप्रसन्नस्तु विज्ञेयो ह्यवरोहणात् // ना. शा_२९.४१ //
प्रसन्नान्तः स्वरो यत्र प्रसादः स तु संज्ञितः /
अपाङ्गकिस्तु विज्ञेयः स्वराणामथ सञ्चरात् // ना. शा_२९.४२ //
रेचितः शिरसि ज्ञेयः कम्पितं तु कलात्रयम् /
कण्ठे निरुद्धपवनः कुहरो नाम जायते // ना. शा_२९.४३ //
एवमेते त्वलङ्कारा विज्ञेया वर्णसंश्रयाः /
अथ गीतीः प्रवक्ष्यामि चन्दो ऽक्षरसमन्विताः // ना. शा_२९.४४ //
शशिना रहितेव निशा विजलेव नदी लता विपुष्पेव /
अविभूषितेव च स्त्री गीतिरलङ्कारहीना स्यात् // ना. शा_२९.४५ //
प्रथमा मागधी ज्ञेया द्वितीया चार्धमागधी /
सम्भाविता तृतीया तु चतुर्थी पृथुला स्मृता // ना. शा_२९.४६ //
त्रिनिवृत्तप्रगीता या गीतिः सा मागधी स्मृता /
अर्धतः सन्निवृत्ता च विज्ञेया ह्यर्धमागधी // ना. शा_२९.४७ //
सम्भाविता च विज्ञेया गुर्वक्षरसमन्विता /
पृथुलाख्या च विज्ञेया नित्यं लघ्वक्षरान्विता // ना. शा_२९.४८ //
एतास्तु गीतयो ज्ञेया ध्रुवायोगं विनैव हि /
गान्धर्व एव योज्यास्तु नित्यं गानप्रयोक्तृभिः // ना. शा_२९.४९ //
गीतयो गदिताः सम्यग् धातूंश्चैव निबोधत /
विस्तारः करणश्च स्यादाविद्धो व्यञ्जनस्तथा /
चत्वारो धातवो ज्ञेया वादित्रकरणाश्रयाः // ना. शा_२९.५० //
सङ्घातजो ऽथ समवायजश्च विस्तारजो ऽनुबन्धकृतः /
ज्ञेतश्चतुष्प्रकारो धातुर्विस्तारसंज्ञश्च // ना. शा_२९.५१ //
विधयस्तु स्मृतास्तस्य पूर्वं विस्तार एव च /
सङ्घातसमवायौ तु विज्ञेयौ तौ द्विअत्रिकौ // ना. शा_२९.५२ //
पूर्वश्चतुर्विधस्तत्र पश्चिमो ऽष्टविधः स्मृतः /
करणानां विशेषेण विज्ञेयौ तौ पृथक् पृथक् // ना. शा_२९.५३ //
अधश्चोर्ध्वं च विज्ञेयावधरोत्तरजौ स्वरौ /
सङ्घातजो विधिस्त्वेष विज्ञेयो वादनं प्रति // ना. शा_२९.५४ //
द्विरुत्तरो द्विरधरस्त्वधरादिश्चोत्तरावसानश्च /
ज्ञेयस्तथोत्तरादिः पुनरप्यधरावसानश्च // ना. शा_२९.५५ //
समवायजस्तथा स्यात् त्रिरुत्तरस्त्रिरधरश्च विज्ञेयः /
द्विरधरोत्तराधरान्तो द्विरधरश्चोत्तरविरामश्च // ना. शा_२९.५६ //
उत्तरमुखो द्विरधरो द्विरुत्तरावसानश्च /
मध्योत्तरो द्विरधरो द्विरुत्तरो ऽप्यधरमध्यश्च // ना. शा_२९.५७ //
अनुबन्धस्तु ज्ञेयो व्याससमासाच्च नियतमेषां हि /
एवं चतुर्दशविधो विस्तारो धातुराख्यातः // ना. शा_२९.५८ //
रिभितोच्चयनीरिभितो ह्रादस्तु तथानुबन्धः स्यात् /

पञ्चविधो विज्ञेयो वीणावाद्ये करणधातुः // ना. शा_२९.५९ //
त्रिकपञ्चसप्तनवकैर्यथाक्रमं संयुतो भवेद्वाद्ये /
सर्वैरनुबन्धकृतैर्गुर्वन्तः स्यात् करणधातुः // ना. शा_२९.६० //
क्षेपः प्लुतो ऽतिपातो ऽतिकीर्णमनुबन्धसंज्ञितश्चैव /
आविद्धो विष्टो यो धातुर्वै पञ्चविध एव // ना. शा_२९.६१ //
द्वित्रिचतुष्कनवकैः प्रहारैः क्रमशः कृतैः /
आविद्धधातुर्विज्ञेयः सानुबन्धविभूषितः // ना. शा_२९.६२ //
व्यञ्जनधातोः पुष्पं कलतलनिष्कोटितं तथोद्घृष्टम् /
रेफो ऽनुबन्धसंज्ञो ऽनुस्वनितं बिन्दुरवमृष्टम् // ना. शा_२९.६३ //
कनिष्ठाङ्गुष्ठसंयुक्तं पुष्पमित्यभिसंज्ञितम् /
अङ्गुष्ठाभ्यां समं तन्त्र्योः स्पर्शनं यत् कलं तु तत् // ना. शा_२९.६४ //
वामेन पीडनं कृत्वा दक्षिणेनाहतिस्तले /
सव्याङ्गुष्ठप्रहारस्तु निष्कोटितमिहोच्यते // ना. शा_२९.६५ //
प्रहारो वामतर्जन्या उद्घृष्टमिति संज्ञितम् /
सर्वाङ्गुलिसमाक्षेपो रेफ इत्यभिसंज्ञितः // ना. शा_२९.६६ //
तलस्थाने ऽधस्तन्त्रीणामनुस्वनितमुच्यते /
गुर्वक्षरकृता तन्त्री बिन्दुरित्यभिसंज्ञितः // ना. शा_२९.६७ //
कनिष्ठाङ्गुष्ठकाभ्यां तु दक्षिणाभ्यामधोमुखम् /
तन्त्रीषु त्रिप्रहारं चाप्यवमृष्टं प्रकीर्तितम् // ना. शा_२९.६८ //
व्याससमासादेषामनुबन्धः सार्वधातुको ज्ञेयः /
इति दशविधः प्रयोज्यो वीणायां व्यञ्जनो धातुः // ना. शा_२९.६९ //
इत्येते धातवः प्रोक्ताश्चत्वारो लक्षणान्विताः /
तिसृणामपि वृत्तीनां येषु वाद्यं प्रतिष्ठितम् // ना. शा_२९.७० //
तिस्रस्तु वृत्तयश्चित्रादक्षिणावृत्तिसंज्ञिताः /
वाद्यगीतोभयगुणा निर्दिष्टान्ता यथाक्रमम् // ना. शा_२९.७१ //

तिस्रो गीतिवृत्तयः प्राधान्येन ग्राह्याः ।
चित्रा वृत्तिर्दक्षिणा चेति ।
तासां तालगीतिलययतिमार्गप्राधान्यानि यथास्वं व्यञ्जकानि भवन्ति ।
तत्र चित्रायां सङ्क्षिप्तवाद्यतालद्रुतलयसमायत्यनागतग्रहाणां प्राधान्यम् ।
तथा
वृत्तौ गीतवादित्रद्विकलातालमध्यलयस्रोतोगतायतिसमग्रहमार्गाणां प्राधान्यम्
।
दक्षिणायां गीतिचतुष्कलतालविलम्बितलयगोपुच्छायत्यतीतग्रहमार्गाणां
प्राधान्यम् ।

सर्वासामेव वृत्तीनां ललिताद्यास्तु जातयः /
धातुभिः सह संयुक्ता भवन्ति गुणवत्तराः // ना. शा_२९.७२ //
एतेषां धातूनां समवायाज्जातयस्तु जायन्ते /
स्यादुदात्तललितरिभितघनसंज्ञाश्चतस्रस्तु // ना. शा_२९.७३ //

तत्रोदाता विस्तारधातुविषया ह्युदात्तत्वात् /
ललिता व्यञ्जनधातोर्ललितत्वादेव संप्रयोक्तव्या // ना. शा_२९.७४ //
आविद्धधातुविषया रिभिता लघुसञ्चयाद् विनिर्दिष्टा /
करणविषया च घनसंज्ञा गुरुलघुसञ्चयात्तु स्यात् // ना. शा_२९.७५ //
त्रिविधं गीते कार्यं वाद्यं वीणासमुद्भवं तज्ज्ञैः /
तत्त्वं ह्यनुगतमोघः स्थानैककरणसमायुक्ताः // ना. शा_२९.७६ //
लयतालवर्णपदयतिगीत्यक्षरभावकं भवेत् तत्त्वम् /
गीतं तु यदनुगच्चत्यनुगतमिति तद्भवेद्वाद्यम् // ना. शा_२९.७७ //
आविद्धकरणबहुलं ह्युपर्युपरिपाणिकं द्रुतलयं च /
अनपेक्षितगीतार्थं वाद्यं त्वोघे विधातव्यम् // ना. शा_२९.७८ //
एवं ज्ञेया वैणे वाद्यविधाने तु धातवस्तज्ज्ञैः /
लक्ष्याम्यतः परमहं निर्गीतविधानसमवायम् // ना. शा_२९.७९ //
आश्रावणा तथाऽरम्भो वक्त्रपाणिस्तथैव च /
सङ्खोटना तथा कार्यं पुनश्च परिघट्टना // ना. शा_२९.८० //
मार्गासारितमेतत् स्याल्लीलाकृतमथापि च /
आसारितानि च तथा त्रिप्रकारकृतानि तु // ना. शा_२९.८१ //
एतानि तु बहिर्गीतान्याहुर्वाद्यविदो जनाः /
सतालानि ह्यतालानि चित्तवृत्तौ कृतानि तु // ना. शा_२९.८२ //
प्रयोजनं च विज्ञेयं पूर्वरङ्गविधिं प्रति /
एतेषां संप्रवक्ष्यामि लक्षणं सनिदर्शनम् // ना. शा_२९.८३ //
आस्रावणा नाम
विस्तारधातुविहितैः करणैः प्रविभागशो द्विरभ्यस्तैः /
द्विश्चापि सन्निवृत्तैः करणोपचयैः क्रमेण स्यात् // ना. शा_२९.८४ //
गुरुणी त्वादावेकादशकं चतुर्दशं सपञ्चदशम् /
सचतुर्विंशकमेवं द्विगुणीकृतमेतदेव स्यात् // ना. शा_२९.८५ //
लघुनी गुरु चैव स्यादथाष्टमं गुरु भवेत्तथा च पुनः /
षट् च लघूनि ततो ऽन्त्ये गुर्वाद्याश्रावणायां तु // ना. शा_२९.८६ //
त्रिःशम्योपरिपाणौ तालावप्येवमेव चैकिकवान् /
समपाणौ द्वे शम्ये तालावप्येवमेवाथ // ना. शा_२९.८७ //
भूयः शम्यातालाववपाणावुत्तरस्था चैव /
चञ्चत्पुटस्तथा स्यादेवं ह्याश्रावणातालः // ना. शा_२९.८८ //
अत्रोदाहरणम् ।
झण्टुं जगति यवलितक जम्बुक झण्टुं तिति च लघु च झण्टुम् ।
दिङ्गले गणपतिपशुपतिजम्बुक दिङ्गले वरभुज दिगिनगि चा ।
तिति चादिनि निगिचा पशुपति नीतिचा ॥
अथारम्भः ।
दीर्घाण्यादावष्टौ द्वादश च लघूनि नैधनं चैव /
चत्वारि गुरूणि तथा ह्रस्वान्यष्टौ च दीर्घं च // ना. शा_२९.८९ //
लघुसंज्ञानि चतुर्धा निधनं द्विगुणीकृतानि दीर्घे द्वे /

अष्टौ लघूनि नैधनमित्यारम्भे ऽक्षरविधानम् // ना. शा_२९.९० //
अत्रोदाहरणम् ।
झ्हण्टुं झण्टुं झण्टुं झण्टुं जगति यवलितक दिगिनिगिचा ।
दिङ्ग्ले दिङ्ग्ले तिति झझलकुचझलजम्बुक तितिचा ।
गणपति सुरपति पशुपति चा ॥
अस्य तु वाद्यम् ।
कार्यं त्रिपर्वरहितैरुद्वहनैरप्यथ समवरोहैः /
तलरिभितह्मादयुतैः करणैर्विस्तारभूयिष्ठैः // ना. शा_२९.९०*१ //
अपचययुक्तैर्द्विस्त्रिस्तथा निवृत्तैर्द्विरभ्यस्तैः /
आरम्भो ऽप्यवतरणस्त्रिपर्वयुक्तैश्च कर्तव्यः // ना. शा_२९.९०*२ //
तालस्त्रिकलस्त्वादौ शम्यैककला कलाद्वये तालः /
द्विकला च पुनः शम्या तालो द्विकलश्च कर्तव्यः // ना. शा_२९.९१ //
त्रिकलश्च सन्निपातः पुनः पितापुत्रकश्च षट्पूर्वः /
चञ्चत्पुटस्तथा स्यादारम्भे तालयोगस्तु // ना. शा_२९.९२ //
अस्य तु वाद्यम्ः
कार्यं त्रिपर्वरहितैरुद्वहनैरप्यथ समवरोहैः /
तलरिभितह्मादयुतैः करणैर्विस्ताभूयिष्ठैः // ना. शा_२९.९३ //
अपचययुक्तैर्द्विस्त्रिस्तथा निवृत्तैर्द्विरभ्यस्तैः /
आरम्भो ऽप्यवतरणस्त्रिपर्वयुक्तैश्च कर्तव्यः // ना. शा_२९.९४ //
अथ वक्त्रपाणिः
गुरूणि पञ्च ह्रस्वानि षड्गुरुश्च चतुर्गुणः /
गुरुणी द्वे लघु त्वेकं चत्वार्यथ गुरूणि हि // ना. शा_२९.९५ //
चत्वार्यथ लघूनि स्युस्त्रीणि दीर्घाणि चैव हि /
लघून्यष्टौ च दीर्घं च वक्त्रपाणौ भवेद्विधिः // ना. शा_२९.९६ //
अत्रोदाहरणम् ।
दिङ्गले झण्टुं जम्बुक जगति य झण्टुं दिङ्गले ।
घेन्द्दं घेटो घाटो भट्टुनकिटि इनं दुङ् ॥
घदुगदुकिटमटनम् ।
अस्य वाद्यम् ।
आविद्धकरणयुक्तो द्व्यङ्गः स्यादेकप्रवृत्तौ वा /
अल्पव्यञ्जनधातुर्वाद्यविधिर्वक्त्रपाणौ तु // ना. शा_२९.९७ //
द्विकले मद्रके यत्तु शम्यातालादिपातम् /
तत्सर्वं वक्त्रपाणौ तु कार्यमष्टकलान्वितम् // ना. शा_२९.९८ //
तस्याधस्तात् पुनः कार्यं पञ्चपाणिचतुष्टयम् /
वक्त्रपाणेरयं तालो मुखप्रतिमुखाश्रयः // ना. शा_२९.९९ //
अथ सङ्खोटना
गुरुणी लघून्यथाष्टौ दीर्घं द्विगुणं तथा च कर्तव्यम् /
लघुदीर्घे लघु च पुनश्चतुर्गुणं संप्रकर्तव्यम् // ना. शा_२९.१०० //
पुनरष्टौ ह्रस्वानि स्युरिह तथा नैधनं च कर्तव्यम् /

सङ्खोटनवस्तुविधौ ह्रस्वगुरुविधिः समुद्दिष्टः // ना. शा_२९.१०१ //
सङ्खोटनाया उदाहरणं प्रकल्प्य कृतम् ।
दिङ्गले जगति य वलति कतेचातिचातिझ लघु चझल पशुपतिचा ।
अस्या वाद्यविधिः ।
अधिदण्डं हस्ताभ्यां वीणां विनिगृह्य दक्षिणाङ्गुल्या /
अङ्गुष्ठाभ्यां च तथा कार्यं सङ्खोटनावाद्यम् // ना. शा_२९.१०२ //
सङ्खोटयेत् स्वरं वादिना तु संवादिना तथाधिबलम् /
समवायिभिश्च शेषैरनुवादिभिरल्पकैश्चांशैः // ना. शा_२९.१०३ //
विस्तारचित्रकरणैर्द्विस्त्रिर्विनिवर्तितैर्द्विरभ्यस्तैः ।
उपचययुक्तैः क्रमशो वदन्ति सङ्खोटनावाद्यम् /
तालो ऽस्या गदितस्तज्ज्ञैः शीर्षवत् पञ्चपाणिना // ना. शा_२९.१०४ //
अथ परिघट्टना
दीर्घाण्यादावष्टौ लघूनि कुर्यात् पुनर्द्विगुणितानि /
ह्रस्वान्यपि चत्वारि द्विगुणानि स्युः सदीर्घाणि // ना. शा_२९.१०५ //
षोडश लघूनि च स्युः सह निधने चैव कार्याणि /
एष परिघट्टनायां गुरुलघुवस्तुक्रमः प्रोक्तः // ना. शा_२९.१०६ //

एतस्यामप्युदाहरणं प्रकल्प्य कृतम् ।
दिङ्गले दिङ्गले दिङ्गले दिङ्गले जगति य वलति क ।
तितिझलकुचझलदिगिनिगि गणपति चा ।
चलति क गणपति पशुपतिसुरपति चा ।

वाद्यं चास्यास्तज्ज्ञैः सोद्वहनं हस्तलाघवात् कार्यम् /
व्यञ्जनधातुसमुत्थं नानाकरणाश्रयोपेतम् // ना. शा_२९.१०७ //
सम्पिष्टकवच्चास्यास्तालः करणैस्तु धातुसंयुक्तैः /
गुरुलघुयोगादेवं विहितः कार्यो बुधैर्नित्यम् // ना. शा_२९.१०८ //
मार्गासारितवाद्यं विस्ताराविद्धकरणसंयुक्तम् /
सकलैः सतलैः करणैरथ गुरुलघुसञ्चयश्चायम् // ना. शा_२९.१०९ //
चत्वारि गुरूणि स्युर्लघूनि चत्वारि च द्विगुणितानि /
गुरुणी लघून्यथाष्टौ गुरुणी चेत्येतत् त्रिधा योज्यम् // ना. शा_२९.११० //
अथवा
चत्वारि तु गुरूणि स्युर्ह्रस्वान्यष्टौ भवन्ति हि /
गुरुणी नव ह्रस्वानि दीर्घमन्त्यमथापि च // ना. शा_२९.११०*१ //
अत्रोदाहरणम् ।
दिङ्गले झण्टुं जगति य ।
थलितक झण्टुं तिति ।
झलकुच झलतितिचा ।
बालासारितवच्चैव तालो ऽस्य परिकीर्तितः // ना. शा_२९.११०*२ //
श्रवणमधुराणि लीलाकृतान्यभिसृतपरिसृतान्तरकृतानि /
तान्यप्यर्थवशादिह कर्तव्यानि प्रयोगविधौ // ना. शा_२९.१११ //

यथासारितानि ज्येष्ठमध्यकनिष्ठानि तालप्रमाणनिर्दिष्टानि तानि तालविधाने वक्ष्यामः ।

एवमेतत् स्वरगतं ज्ञेयं वीणाशरीरजम् /
विपञ्चीवाद्ययुक्तानि करणानि निबोधत // ना. शा_२९.११२ //
रूपं कृतं प्रतिकृतं प्रतिभेदो रूपशेषमोघश्च /
षष्ठी वै प्रतिशुष्का त्वेवं ज्ञेयं करणजातम् // ना. शा_२९.११३ //
वीणावाद्यद्विगुणं गुरुलाघववादनं भवेद्रूपम् /
रूपं प्रतिभेदकृतं प्रतिकृतमित्युच्यते वाद्यम् // ना. शा_२९.११४ //
युगपत्कृते ऽन्यकरणं प्रतिभेदो दीर्घलाघवकृतः स्यात् /
कृतमेकस्यां तन्त्र्यां प्रतिशुष्का नाम विज्ञेया // ना. शा_२९.११५ //
वीणावाद्यविरामे ऽप्यविरतकरणं तु रूपशेषः स्यात् /
आविद्धकरणयुक्तो ह्युपर्युपरिपाणिकस्त्वोघः // ना. शा_२९.११६ //
कार्यं ध्रुवाविधाने प्रायेण हि कोणवादनं तज्ज्ञैः /
स्थानप्रास्त्यर्थं चेद्यत्र भवेदयं नियमः // ना. शा_२९.११७ //
तच्चौघतुल्यकरणं वाच्यं कार्यं विपञ्च्यास्तु /
सप्ततन्त्री भवेच्चित्रा विपञ्ची तु भवेन्नव /
कोणवादना विपञ्ची स्याच्चित्रा चाङ्गुलिवादना // ना. शा_२९.११८ //
ततवाद्यविधानमिदं सर्वं प्रोक्तं समासयोगेन /
वक्ष्याम्यतश्च भूयः सुषिरातोद्यप्रयोगं तु // ना. शा_२९.११९ //

इति भरतीये नाट्यशास्त्रे ततातोद्यविधानं नाम एकोनत्रिंशत्तमो ऽध्यायः

---

त्रिंशो ऽध्यायः
अतोद्यं सुषिरं नाम ज्ञेयं वंशगतं बुधैः /
वैण एव विधिस्तत्र स्वरग्रामसमाश्रयः // ना. शा_३०.१ //
द्विकत्रिकचतुष्कास्तु ज्ञेया वंशगताः स्वराः /
कम्प्यमानार्थमुक्ताश्च व्यक्तमुक्तास्तथैव च // ना. शा_३०.२ //
तत्रोपरि यथा ह्येकः स्वरो वैणस्वरान्तरे /
प्राप्नोत्यन्यत्वमेवेह तथा वंशगतो ऽपि हि // ना. शा_३०.३ //
द्विकस्त्रिकश्चतुष्को वा श्रुतिसङ्ख्यो भवेत् स्वरः /
अनीरणात्तु शेषाणां स्वराणामपि सम्भवः /
अङ्गुलीवादनकृतं तच्च मे सन्निबोधत // ना. शा_३०.४ //
व्यक्तमुक्{ताङ्गुलिस्तत्र स्वरो ज्ञेयश्चतुःश्रुतिः /
कम्प्यमानाङ्गुलिश्चैव त्रिश्रुतिः परिकीर्तितः /
द्विको ऽर्धाङ्गुलिमुक्तः स्यादिति श्रुत्याश्रिताः स्वराः // ना. शा_३०.५ //
एते स्युर्मध्यमग्रामे भूयः षड्जाश्रिताः पुनः /
व्यक्तमुक्{ताङ्गुलिकृताः षड्जमध्यमपञ्चमाः // ना. शा_३०.६ //

ऋषभो धैवतश्चापि कम्प्यमानाङ्गुलीकृतौ /
अर्धमुक्ताङ्गुलिश्चैव गान्धारो ऽथ निषादवान् // ना. शा_३०.७ //
स्वरसाधारणश्चापि काकल्यन्तरसंज्ञया /
निषादगान्धारकृतौ षड्जमध्यमयोरपि // ना. शा_३०.८ //
विपर्यया सन्निकर्षे श्रुतिलक्षणसिद्धितः /
वैणकण्ठप्रवेशेन सिद्धा एकाश्रिताः स्वराः // ना. शा_३०.९ //
यं यं गाता स्वरं गच्चेत् तं तं वंशेन वादयेत् /
शारीरवैणवंश्यानामेकीभावः प्रशस्यते // ना. शा_३०.१० //
अविचलितमविच्चिन्नं वर्णालङ्कारसंयुतं विधिवत् /
ललितं मधुरं स्निग्धं वेणोरेवं स्मृतं वाद्यम् // ना. शा_३०.११ //
एवमेतत् स्वरगतं विज्ञेयंगानयोक्तृभिः /
अतः परं प्रवक्ष्यामि धनातोद्यविकल्पनम् // ना. शा_३०.१२ //

इति भरतीये नाट्यशास्त्रे सुषिरातोद्यलक्षणं नामाध्यायस्त्रिंशः

---

अथ त्रयस्त्रिंशो ऽध्यायः

गुणात् प्रवर्तते गानं दोषं चैव निरस्यते /
तस्माद्यत्नेन विज्ञेयौ गुणदोषौ समासतः // ना. शा_३३.१ //
गाता प्रत्यग्रवयाः स्निग्धो मधुरस्वरोपचितकण्ठः /
लयतालकलापातप्रमाणयोगेषु तत्त्वज्ञः // ना. शा_३३.२ //
रूपगुणकान्तियुक्ता माधुर्योपेतसत्वसम्पन्नाः /
पेशलमधुरस्निग्धानुनादिसमरक्त गुरुकण्ठाः // ना. शा_३३.३ //
(शुभ)

सुविहितगमकविधायिन्यो ऽक्षोभ्यास् താललयकुशलाः /
आतोद्यार्पितकरणा विज्ञेया गायिकाः श्यामाः // ना. शा_३३.४ //
प्रायेण तु स्वभावात् स्त्रीणां गानं नृणां च पाठ्यविधिः /
स्त्रीणां स्वभावमधुरः कण्ठो नृणां बलित्वं च // ना. शा_३३.५ //
यत्र स्त्रीणां पाठ्यं गुणैर्नराणां च गानमधुरत्वम् /
ज्ञेयो ऽलङ्कारो ऽसौ न हि स्वभावो ह्ययं तेषाम् // ना. शा_३३.६ //
सुनिविष्टपाणिलययतियोगज्ञौसुमधुरलघुहस्तौ /
गातृगुणैश्चोपेताववहितमनसौ सुसङ्गीतौ // ना. शा_३३.७ //
स्फुटरचितचित्रकरणौ गीतश्रवणाचलौप्रवीणौ च /
चित्रादिवाद्यकुशलौवीणाभ्यां वादकौ भवतः // ना. शा_३३.८ //
बलवानवहितबुद्धिर्गीतलयज्ञस्तथासुसङ्गीतः /
श्रावकमधुरस्निग्धो दृढपाणिर्वंशवादको ज्ञेयः // ना. शा_३३.९ //
अविचलितमविच्चन्नं वर्णालङ्कारबोधकंमधुरम् /

स्निग्धं दोषविहीनं वेणोरेवं स्मृतं वाद्यम् // ना. शा_३३.१० //

ज्ञानविज्ञानकरणवचनप्रयोगसिद्धिनिष्पादनानि षडाचार्यगुणा इति ।
तत्र ज्ञानं शास्त्रावबोधः ।
यथा च क्रियासम्पादनं विज्ञानम् ।
कण्ठहस्तगौण्यं करणम् ।
जितग्रन्थता वचनम् ।
देशादिसम्पदाराधनं प्रयोगसिद्धिः ।
शिष्यस्वभावमविशेष्योपात्तय उपदेशाच्चिष्यनिष्पादनमिति // ना. शा_३३.११ //
श्रावणो ऽथ घनः स्निग्धो मधुरोह्यवधानवान् /
त्रिस्थानशोभीत्येवं तु षट् कण्ठस्य गुणा मताः // ना. शा_३३.१२ //
उदात्तं श्रूयते यस्मात्तस्माच्छ्रावण उच्यते /
श्रावणः सुस्वरो यस्मादच्चिन्नः स घनो मतः // ना. शा_३३.१३ //
अरूक्षध्वनिसंयुक्तः स्निग्धस्तज्ज्ञैः प्रकीर्तितः /
मनःप्रह्लादनकरः स वै मधुर उच्यते // ना. शा_३३.१४ //
स्वरे ऽधिके च हीने च ह्यविरक्तो विधानवान् /
शिरःकण्ठेष्वभिहितंत्रिस्थानमधुरस्वरः /
त्रिस्थानशोभीत्येवं तु स हि तज्ज्ञैरुदाहृतः // ना. शा_३३.१५ //
कपिलो ह्यवस्थितश्चैव तथा सन्दष्ट एव च /
काकी च तुम्बकी चैव पञ्च दोषा भवन्ति हि // ना. शा_३३.१६ //
वैस्वर्यं च भवेद्यत्र तथा स्याद् घर्घरायितम् /
कपिलः स तु विज्ञेयः श्लेष्मकण्ठस्तथैव च // ना. शा_३३.१७ //
ऊनताऽधिकता चापि स्वराणां यत्र दृश्यते /
रूक्षदोषहतश्चैव ज्ञेयः स त्वव्यवस्थितः // ना. शा_३३.१८ //
दण्डप्रयोगात् सन्दष्टस्त्वाचार्यैः परिकीर्तितः /
यो न विस्तरति स्थाने स्वरमुच्चारणागतम् // ना. शा_३३.१९ //
नासाग्रग्रस्तशब्दस्तुतुम्बकी सो ऽभिधीयते // ना. शा_३३.२० //
अन्ये तु
समप्रहरणे चैव जविनौ विशदौ तथा /
जितश्रमौ विकृष्टौ च मधुरौ स्वेदवर्जितौ /
तथा बृयन्नखौ चैव ज्ञेयौ हस्तस्य वै गुणाः // ना. शा_३३.२१ //
इति
एते गुणाश्च दोषाश्च तत्त्वतः कथितो मया /
अत ऊर्ध्वं प्रवक्ष्यामि ह्यवनद्धविधिं पुनः // ना. शा_३३.२२ //
पूर्वं यदुक्तं प्रपितामहेन कुर्यात् य एवं तु नरः प्रयोगे सम्मानमग्रयं
लभते स लोके // ना. शा_३३.२३ //

इति भरतीये नाट्यशास्त्रे गुणदोषविचारो नामाध्यायस्त्रयस्त्रिंशः

---

अथ पञ्चत्रिंशो ऽध्यायः

विन्यासं भूमिकानां च सम्प्रवक्ष्यामि नाटके /
यादृशो यस्य कर्तव्यो विन्यासो भूमिकास्वथ // ना. शा_३५.१ //
गतिवागङ्गचेष्टाभिः सत्त्वशीलस्वभावतः /
परीक्ष्य पात्रं तज्ज्ञस्तु युञ्ज्याद् भूमिनिवेशने // ना. शा_३५.२ //
तस्मिन्नन्विष्य हि गुणवान् कार्या पात्रसमाश्रया /
न खेदजननं बुद्धेराचार्यस्य भविष्यति // ना. शा_३५.३ //
आचार्यः पात्रजांश्चैव गुणाञ्ज्ञात्वा स्वभावजान् /
ततः कुर्याद् यथायोगं नृणां भूमिनिवेशनम् // ना. शा_३५.४ //
अङ्गप्रत्यङ्गसंयुक्तमहीनाङ्गं वयोन्वितम् /
न स्थूलं न कृशं चैव न दीर्घं न च मन्थरम् // ना. शा_३५.५ //
श्लिष्टाङ्गं द्युतिमन्तं च सुस्वरं प्रियदर्शनम् /
एतैर्गुणैश्च संयुक्तं देवभूमिषु योजयेत् // ना. शा_३५.६ //
स्थूलं प्रांशुं बृहद्देहं मेघगम्भीरनिस्वनम् /
रौद्रस्वभावनेत्रं च स्वभावभ्रुकुटीमुखम् // ना. शा_३५.७ //
रक्षोदानवदैत्यानां भूमिकासु प्रयोजयेत् /
पुरुषाणां प्रयोगस्तु तथाङ्गक्रिययान्वितः // ना. शा_३५.८ //
सुनेत्रसुभ्रुवः स्वङ्गाः सुललाटाः सुनासिकाः /
स्वोष्ठाः सुगण्डाः सुमुखाः सुकण्ठाः सुशिरोधराः // ना. शा_३५.९ //
स्वङ्गप्रत्यङ्गसंयुक्ता न दीर्घा न च मन्थराः /
न स्थूला न कृशाश्चैव स्वभावेन व्यवस्थिताः // ना. शा_३५.१० //
सुशीला ज्ञानवन्तश्च तथा च प्रियदर्शनाः /
कुमारराजभूमौ तु संयोज्याश्च नरोत्तमाः // ना. शा_३५.११ //
अङ्गैरविकलैर्धीरं स्फुटं वसनकर्मणि /
न दीर्घं नैव च स्थूलमूहापोहविचक्षणम् // ना. शा_३५.१२ //
अदीनं च प्रगल्भं च प्रत्युत्पन्नविनिश्चयम् /
सेनापतेरमात्यानां भूमिकासु प्रयोजयेत् // ना. शा_३५.१३ //
पिङ्गाक्षं घोणनासं च नेत्रमुच्चमथापि वा /
कञ्चुकिश्रोत्रियादीनां भूमिकासु नियोजयेत् // ना. शा_३५.१४ //
एवमन्येष्वपि तथा नाट्यधर्मविभागतः /
देशवेषानुरूपेण पात्रं योज्यं स्वभूमिषु // ना. शा_३५.१५ //
मन्थरं वामनं कुब्जं विकृतं विकृताननम् /
विष्टब्धनेत्रं काणाक्षं स्थूलं चिपिटनासिकम् // ना. शा_३५.१६ //
दुर्जनं दुस्वभावं च विकृताचारमेव च /
दासभूमौ प्रयुञ्जीत बुधो दासाङ्गसम्भवम् // ना. शा_३५.१७ //
प्रकृत्याऽतिकृशं क्षामं तपःश्रान्तेषु योजयेत् /
तथा च पुरुषं स्थूलमुपरोधेषु योजयेत् // ना. शा_३५.१८ //
यदि वा नेदृशाः सन्ति प्रकृत्या पुरुषा द्विजाः /

आचार्यबुद्ध्या योज्यास्तु भावचेष्टास्वभावतः // ना. शा_३५.१९ //
या यस्य सदृशी चेष्टा ह्युत्तमाधममध्यमा /
स तथाऽऽचार्ययोगेन नियम्या भावभाविनी // ना. शा_३५.२० //
अतः परं प्रवक्ष्यामि भरतानां विकल्पनम् /
भरताश्रयाश्च भरतो विदूषकः सौरिकस्तथा नान्दी /
नन्दी ससूत्रधारो नाट्यरसो नायकश्चैव // ना. शा_३५.२१ //
मुकुटाभरणविकल्पौ विज्ञेयो माल्यवस्तुविविधैश्च /
कारककुशीलवाद्या विज्ञेया नामतश्चैव // ना. शा_३५.२२ //
धुर्यवदेको यस्मादुद्धारो ऽनेकभूमिकायुक्तः /
भाण्डग्रहोपकरणैनाट्यं भरतो भवेत् तस्मात् // ना. शा_३५.२३ //
लोकाह्हदाश्रयकृता सर्वप्रकृतिप्रचारसंयुक्ता /
नानाश्रयां प्रकुरुते तथा च नारी तु सर्वत्र // ना. शा_३५.२४ //
प्रत्युत्पन्नप्रतिभो नर्मकृतो नर्मगर्भनिर्भेदः /
चेदविदूषितवचनो विदूषको नाम विज्ञेयः // ना. शा_३५.२५ //
तूर्यतिस्तु नरः सर्वातोद्यप्रवादने कुशलः /
तूरपरिग्रहयुक्तो विज्ञेयस्तौरिको नाम // ना. शा_३५.२६ //
नटनृति धात्वर्थो ऽयं भूतं नाटयति लोकवृत्तान्तम् /
रसभावसत्वयुक्तं यस्मात् तस्मान्नटो भवति // ना. शा_३५.२७ //
स्तुत्यभिवादनकृतैर्मधुरैर्वाक्यैः सुमङ्गलाचारैः /
सर्व स्तौति हि लोकं यस्मात् तस्माद्भवेद्वादी // ना. शा_३५.२८ //
भावेभ्यो बहुधाऽस्मिन् रसा वदति नाट्ययोगेषु /
प्राकृतसंस्कृतपाठ्यो नन्दी नामेति स ज्ञेयः // ना. शा_३५.२९ //
गीतस्य च वाद्यस्य च पाठ्यस्य च नैकभावविहितस्य /
शिष्टोपदेशयोगात् सूत्रज्ञः सूत्रधारस्तु // ना. शा_३५.३० //
यस्मात् यथोपदिष्टान् रसांश्च भावांश्च सत्वसंयुक्तान् /
भूमिविकल्पैर्नयति च नाट्यकरः कीर्तितस्तस्मात् // ना. शा_३५.३१ //
चतुरातोद्यविधानं सर्वस्य तु शास्त्रखे दविहितस्य /
नाट्यस्यान्तं गच्चति तस्माद्वै नायको ऽभिहितः // ना. शा_३५.३२ //
नानाप्रकृतिसमुत्थं करोति यः शीर्षकं मुकुटयोगे /
विविधैर्वेषविशेषैः स च कुटकारस्तु विज्ञेयः // ना. शा_३५.३३ //
भाण्डकवाद्यज्ञा या लयतालज्ञा रसानुविद्धा च /
सर्वाङ्गसुन्दरी वै कर्तव्या नाटकीया तु // ना. शा_३५.३४ //
यस्त्वाभरणं कुर्याद् बहुविधविहितं स चाभरणः /
यश्चोपकरणयोगात् स तेन नाम्नाऽभिधातव्यः // ना. शा_३५.३५ //
यो वै माल्यं कुरुते पञ्चविधं माल्याकृत् स विज्ञेयः /
यश्चापि वेषयोगं कुरुते स च वेषकारी तु // ना. शा_३५.३६ //
चित्रज्ञश्चित्रकरो वस्त्रस्य रञ्जानात्तथा रजकः /
जत्वश्मलोहकाष्ठैर्द्रव्यकरैः कारुकश्चैव // ना. शा_३५.३७ //
नानातोद्यविधाने प्रयोगयुक्तः प्रवादने कुशलः /

अतोद्ये ऽप्यतिकुशलो यस्मात् स कुशलवो ज्ञेयः // ना. शा_३५.३८ //
यद्यत् समाश्रयन्ते शिल्पं वा कर्म वा प्रयोगं वा /
तन्नैवोपगतगुणा विज्ञेया नामतः पुरुषाः // ना. शा_३५.३९ //
एवं तु नाटकविधौ जातिर्नटसंश्रया बुधैर्ज्ञेया /
नाट्योपकरणयुक्ता नानाशिल्पप्रसक्ता च // ना. शा_३५.४० //
उक्तो ऽत्र भूमिकान्यासः प्रयोक्तारश्च योगतः /
आदिष्टं नाट्यशास्त्रं च मुनयः किमिहोच्यताम् // ना. शा_३५.४१ //

इति भरतीये नाट्यशास्त्रे भूमिकाविकल्पाध्यायः पञ्चत्रिंशः

---

अथ षट्त्रिंशो ऽध्यायः
अथात्रेयो वसिष्ठश्च पुलस्त्यः पुलहः क्रतुः /
अङ्गिरा गौतमो ऽगस्त्यो मनुरायुस्तथात्मवान् // ना. शा_३६.१ //
विश्वामित्रः स्थूलशिराः संवर्तः प्रमतिर्दनुः /
उशना बृहस्पतिर्व्यासश्च्यवनः काश्यपो ध्रुवः // ना. शा_३६.२ //
दुर्वासा जामदग्न्यश्च मार्कण्डेयो ऽथ गालवः /
भरद्वाजश्च रैभ्यश्च यवक्रीतस्तथैव च // ना. शा_३६.३ //
स्थूलाक्षः शकलाक्षश्च काण्वो मेघातिथिः क्रतुः /
नारदः पर्वतश्चैव सुवर्माथैकजो द्विजः // ना. शा_३६.४ //
नितम्बुर्भुवनः सौम्यः शतानन्दः कृतव्रणः /
जामदग्न्यस्तथा रामः कचश्चेत्येवमादयः // ना. शा_३६.५ //
एवं ते मुनयः श्रुत्वा सर्वज्ञं भरतं ततः /
पुनरूचुरिदं वाक्यं कुतूहलपुरोगमम् // ना. शा_३६.६ //
यस्त्वया गदितो ह्येष नाट्यवेदः पुरातनः /
एकचित्तैः स चास्माभिः सम्यक् समुपधारितः // ना. शा_३६.७ //
एकश्च संशयो ऽस्माकं तं नो व्याख्यातुमर्हसि /
को वान्यो नाट्यवेदस्य निश्चयं वक्तुमर्हति // ना. शा_३६.८ //
न वयं परिहासेन न विरोधेन न चेर्ष्यया /
पृच्छामो भगवन् नाट्यमुपदेशार्थमेव तु // ना. शा_३६.९ //
अस्माभिश्च तदा नोक्तं कथाच्चेदो भवेदिति /
इदानीं तूपशिक्षार्थं नाट्यगुह्यं निदर्शय // ना. शा_३६.१० //
लोकस्य चरितं नाट्यमित्यवोचस्त्वमीदृशम् /
तेषां तु लोकं गुह्यानां निश्चयं वक्तुमर्हसि // ना. शा_३६.११ //
देवस्य कस्य चरितं पूर्वरङ्गे द्विजर्षभ /
किमर्थं भुज्यते ह्येष प्रयुक्तः किं करोति वा // ना. शा_३६.१२ //
कस्माच्चैव पुनः शौचं सम्यक् चरति सूत्रदृक् /
कथमुर्वीतले नाट्यं स्वर्गान्निपतितं विभो // ना. शा_३६.१३ //
कथं तवायं वंशश्च नटसंज्ञः प्रतिष्ठितः /

सर्वमेव यथातत्त्वं कथयस्व महामुने // ना. शा_३६.१४ //
तेषं तु वचनं श्रुत्वा मुनीनां भरतो मुनिः /
प्रत्युवाच पुनर्वाक्यं गुह्यार्थाभिनयं प्रति // ना. शा_३६.१५ //
ब्रवीमि वः कथां गुह्यां यन्मां पृच्चन् सुव्रताः /
पूर्वरङ्गविधानस्य तां च मे सन्निबोधत // ना. शा_३६.१६ //
प्रोक्तवानस्मि यत्पूर्वं शुभं विघ्ननिबर्हणम् /
तस्यानुबन्धेन मया पूर्वरङ्गः प्रकीर्तितः // ना. शा_३६.१७ //
शस्त्राणां प्रतिकारार्थं शरीरावरणं यथा /
क्रियते हि तथा पापं हुतेनैव प्रशाम्यति // ना. शा_३६.१८ //
एवं जप्यैश्च होमैश्च देवताभ्यर्चनेन च /
सर्वातोद्यविधानैश्च तथा गीतस्वनेन च // ना. शा_३६.१९ //
स्तुत्याशीर्वचनैः शान्तैः कर्मभावानुकीर्तनैः /
मया पापापहरणैः कृते विघ्ननिबर्हणे // ना. शा_३६.२० //
स्तुतिगीतादिसंसृष्टैर्देवैरभिहितो ऽस्म्यहम् /
नितरां परितुष्टाः स्मः प्रयोगेणामुना च ते // ना. शा_३६.२१ //
देवतासुरमानन्द्य यस्मांल्लोकश्च नन्दति /
तस्मादयं प्रयोगस्तु नान्दीनामा भविष्यति // ना. शा_३६.२२ //
गीतवाद्यानुनादो हि यत्र काकुस्वनः शुभः /
तस्मिन् देशे विपाप्मानो माङ्गल्यं च भविष्यति // ना. शा_३६.२३ //
यावत्तं पूरयेद्देशं ध्वनिर्नाट्यसमाश्रयः /
न स्थास्यन्ति हि रक्षांसि तं देशं न विनायकाः // ना. शा_३६.२४ //
आवाहे च विवाहे च यज्ञे नृपतिमङ्गले /
नान्दीशब्दमुपश्रुत्य हिंस्रा नश्यन्ति चैव हि // ना. शा_३६.२५ //
पाठ्यं नाट्यं तथा गेयं चित्रवादित्रमेव च /
वेदमन्त्रार्थवचनैः समं ह्येतद् भविष्यति // ना. शा_३६.२६ //
श्रुतं मया देवदेवात् तत्त्वतः शङ्कराद्धितम् /
स्नानजप्यसहस्रेभ्यः पवित्रं गीतवादितम् // ना. शा_३६.२७ //
यस्मिन्नातोद्यनाट्यस्य गीतपाठ्यध्वनिः शुभः /
भविष्यत्यशुभं देशे नैव तस्मिन् कदाचन // ना. शा_३६.२८ //
एवं पूजाधिकारार्थं पूर्वरङ्गः कृतो मया /
नानास्तुतिकृतैर्वाक्यैर्देवताभ्यर्चनेन च // ना. शा_३६.२९ //
यतो ऽभिवादनं क्लिष्टं शिष्टं तद्रङ्गमण्डले /
ततस्तस्य हि तच्चौचं विहितं तु द्विजोत्तमाः // ना. शा_३६.३० //
शौचं कृत्वा यतो मन्त्रं पूजनं जर्जरस्य तु /
उच्यते पूर्वरङ्गे ऽस्मिन् तस्माच्चौचं प्रकीर्तितम् // ना. शा_३६.३१ //
यथावतारितं चैव नाट्यमेतन्महीतले /
वक्तव्यं सर्वमेतद्धि न शक्यं हि निगूहितुम् // ना. शा_३६.३२ //
ममैते तनयाः सर्वे नाट्यवेदसमन्विताः /
सर्वलोकं प्रहसनैः बाधन्ते नाट्यसंश्रयैः // ना. शा_३६.३३ //

कस्यचित्त्वथ कालस्य शिल्पकं ग्राम्यधर्मकम् /
ऋषीणां व्यङ्ग्यकरणं कुर्वद्भिर्गुणसंश्रयम् // ना. शा_३६.३४ //
अश्राव्यं तद्दुराचारं ग्राम्यधर्मप्रवर्तितम् /
निष्ठुरं चाप्रस्तुतं च काव्यं संसदि योजितम् // ना. शा_३६.३५ //
तच्छ्रुत्वा मुनयः सर्वे भीमरोषप्रकम्पिताः /
ऊचुस्तान् भरतान् क्रुद्धा निर्दहन्त इवाग्नयः // ना. शा_३६.३६ //
मा तावद्भो द्विजा युक्तमिदमस्मद्विडम्बनम् /
को नामायं परिभवः किञ्च नास्मासु सम्मतम् // ना. शा_३६.३७ //
यस्माज्ज्ञानमदोन्मत्ता न वेत्थाविनयाश्रिताः /
तस्मादेतद्धि भवतां कुज्ञानं नाशमेष्यति // ना. शा_३६.३८ //
ऋषीणां ब्राह्मणानां च समवायसमागताः /
निराहुता विना होमैः शूद्राचारा भविष्यथ // ना. शा_३६.३९ //
अपाङ्क्तेयाः कुत्सिताश्चावमा एव भविष्यथ /
यश्च वो भविता वंशः सर्वाशौचो भविष्यति // ना. शा_३६.४० //
ये च वो वंशजास्ते ऽपि भविष्यन्त्यथ नर्तकाः /
परोपस्थानवन्तश्च शस्त्रपण्योपजीविनः // ना. शा_३६.४१ //
शापं दत्तं तथा ज्ञात्वा सुतेभ्यो मे तदा सुराः /
सर्वे विमनसो भूत्वा तानृषीन् समुपस्थिताः // ना. शा_३६.४२ //
याचमानैस्ततः प्रोक्तं देवैः शक्रपुरोगमैः /
इदानीं दुःखमुत्पन्नं नाट्यमेतद् विनङ्क्षति // ना. शा_३६.४३ //
ऋषिभिश्च ततः प्रोक्तं न चैतद्धि विनक्ष्यति /
शेषमन्यत्र यद् प्रोक्तं सर्वमेतद् भविष्यति // ना. शा_३६.४४ //
एतच्छ्रुत्वा तु वचनं मुनीनामुग्रतेजसाम् /
विषण्णास्ते ततः सर्वे श्रुत्वा मां समुपस्थिताः // ना. शा_३६.४५ //
प्रोक्तवन्तश्च मां पुत्रास्त्वयाहो नाशिता वयम् /
अनेन नाट्यदोषेण शूद्राचारा हि यत् कृताः // ना. शा_३६.४६ //
मयापि सान्त्वयित्वोक्ता मा क्रोधं व्रजतानघाः /
कृतान्तविहितो ऽस्माकं नूनमेष विधिः सुताः // ना. शा_३६.४७ //
मुनीनां हि मृषा वाक्यं भविष्यति कदाचन /
निधने च मनो मा भूद् युष्माकमिति सान्त्विताः // ना. शा_३६.४८ //
जानीध्वं तत्तथा नाट्यं ब्रह्मणा संप्रवर्तितम् /
शिष्येभ्यश्च तदन्येभ्यः प्रयच्चामः प्रयोगतः // ना. शा_३६.४९ //
मा वै प्रणश्यतामेतन्नाट्यं दुःखप्रवर्तितम् /
महाश्रयं महापुण्यं वेदाङ्गोपाङ्गसम्भवम् // ना. शा_३६.५० //
अप्सरोभ्य इदं चैव यथातत्त्वं यथाश्रुतम् /
नाट्यं दत्त्वा ततः सर्वे प्रायश्चित्तं चरिष्यथ // ना. शा_३६.५१ //

इति भरतीये नाट्यशास्त्रे नाट्यशापो नाम षट्त्रिंशो ऽध्यायः

---

अथ सप्तत्रिंशो ऽध्यायः

कस्यचित्त्वथ कालस्य नहुषो नाम पार्थिवः /
प्राप्तवान् देवराज्यं हि नयबुद्धिपराक्रमः // ना. शा_३७.१ //
प्रशशास तदा राज्यं देवैर्व्युष्टिमवाप्नुवन् /
गान्धर्वं चैअ नाट्यं च दृष्ट्वा चिन्तामुपागमत् // ना. शा_३७.२ //
स चिन्तयित्वा मनसा कथमेष गृहे मम /
नाट्यप्रयोगो हि भवेदिति सादर एव सन् // ना. शा_३७.३ //
कृताञ्जलिः प्रयोगार्थं प्रोक्तवांस्तु सुरान् नृपः /
अप्सरोभिरिदं सार्धं नाट्यं भवतु मे गृहे // ना. शा_३७.४ //
प्रत्युक्तश्च ततो देवैर्बृहस्पतिपुरोगमैः /
दिव्याङ्गनानां नैवेह मानुषैः सह सङ्गतिः // ना. शा_३७.५ //
हितं पथ्यं च वक्तव्यो भवान् स्वर्गाधिपो हि यत् /
आचार्यास्तत्र गच्चन्तु गत्वा कुर्वन्तु ते प्रियम् // ना. शा_३७.६ //
प्रोक्तवांस्तु ततो मां तु नृपतिः स कृताञ्जलिः /
इदमिच्चामि भगवन् नाट्यमुर्व्यां प्रतिष्ठितम् // ना. शा_३७.७ //
पूर्वमाचार्यकं चैव भवताऽभिहितं श्रुतम् /
व्यक्तभावात्विदं लब्धं त्वत्सकाशाद् द्विजोत्तम // ना. शा_३७.८ //
पितामहगृहे ऽस्माकं तदन्तःपुरे जने /
पितामहक्रियायुक्त मुर्वश्यां सम्प्रवर्तितम् // ना. शा_३७.९ //
तस्याः प्रणाशशोकेन उन्मादोपरते नृपे /
विपन्ने ऽन्तःपुरजने पुनर्नाशमुपागतम् // ना. शा_३७.१० //
प्रकाशमेतदिच्चामो भूयस्तत् संप्रयोजितम् /
तिथियज्ञक्रियास्वेतद् यथा स्यान् मङ्गलैः शुभैः // ना. शा_३७.११ //
तस्मिन् मम गृहे बद्धं नानाप्रकृतिसंश्रयम् /
स्त्रीणां ललितविन्यासैर्यतो नः प्रथयिष्यति // ना. शा_३७.१२ //
तथाऽस्त्विति मया प्रोक्तो नहुषः पार्थिवस्तदा /
सुताश्चाहूय सम्प्रोक्ता सामपूर्वं सुरैः सह // ना. शा_३७.१३ //
अयं हि नहुषो राजा याचते नः कृताञ्जलिः /
गम्यतां सहितैर्भूमिं प्रयोक्तुं नाट्यमेव च // ना. शा_३७.१४ //
करिष्यमश्च शापान्तमस्मिन् सम्यक् प्रयोजिते /
ब्राह्मणानां नृपाणां च भविष्यथ न कुत्सिताः // ना. शा_३७.१५ //
तत्र गत्वा प्रयुज्यन्तां प्रयोगान् वसुधातले /
न शक्यं चान्यथा कर्तुं वचनं पार्थिवस्य हि // ना. शा_३७.१६ //
अस्माकं चैव सर्वेषां नहुषस्य महात्मनः /
आत्मोपदेशसिद्धं हि नाट्यं प्रोक्तं स्वयंभुवा // ना. शा_३७.१७ //
शेषमुत्तरतन्त्रेण कोहलस्तु करिष्यति /
प्रयोगः कारिकाश्चैव निरुक्तानि तथैव च // ना. शा_३७.१८ //

अप्सरोभिरिदं सार्धं क्रीडनीयकहेतुकम् /
अधिष्ठितं मया स्वर्गे स्वातिना नारदेन च // ना. शा_३७.१९ //
ततश्च वसुधां गत्वा नहुषस्य गृहे द्विजाः /
स्त्रीणां प्रयोगं बहुधा बद्धवन्तो यथाक्रमम् // ना. शा_३७.२० //
अत्रोपभोगतस्ते तु मानुषीषु मामात्मजाः /
बद्धवन्तो ऽधिकस्नेहं तासु तद् द्विजसत्तमाः // ना. शा_३७.२१ //
पुत्रानुत्पाद्य वध्वा च प्रयोगं च यथाक्रमम् /
ब्रह्मणा समनुज्ञाताः प्राप्ताः स्वर्गं पुनः सुताः // ना. शा_३७.२२ //
एवमुर्वीतले नाट्यं शिष्यैः समवतारितम् /
भरतानां च वंशो ऽयं भविष्यं च प्रवर्तितः // ना. शा_३७.२३ //
कोहलादिभिरेवं तु वत्सशाण्डिल्यधूर्तितैः /
मत्यधर्मक्रियायुक्तैः कश्चित्कालमवस्थितैः // ना. शा_३७.२४ //
एतच्चात्रं प्रणीतं हि नाराणां बुद्धिवर्धनम् /
त्रैलोक्यस्य क्रियोपेतं सर्वशास्त्रनिदर्शनम् /
मङ्गल्यं ललितं चैव ब्रह्मणो वदनोद्भवम् // ना. शा_३७.२५ //
य इदं श्रुणुयान् नित्यं प्रोक्तं चेदं स्वयम्भुवा /
कुर्यात् प्रयोगं यश्चैवमथवाऽधीतवान् नरः // ना. शा_३७.२६ //
या गतिर्वेदविदुषां या गतिर्यज्ञकारिणाम् /
या गतिर्दानशीलानां तां गतिं प्राप्नुयाद्धि सः // ना. शा_३७.२७ //
दानधर्मेषु सर्वेषु कीर्त्यते तु महत् फलम् /
प्रेक्षणीयप्रदानं हि सर्वदानेषु शस्यते // ना. शा_३७.२८ //
न तथा गन्धमाल्येन देवास्तुष्यन्ति पूजिताः /
यथा नाट्यप्रयोगस्थैर्नित्यं तुष्यन्ति मङ्गलैः // ना. शा_३७.२९ //
गान्धर्वं चेह नाट्यं च यः सम्यक् परिपालयेत् /
स ईश्वरगणेशानां लभते सद्गतिं पराम् // ना. शा_३७.३० //
एवं नाट्यप्रयोगे बहुविधिविहितं कर्मशास्त्रं प्रणीतम् ।
नोक्तं यच्चात्र लोकादनुकृतिकरणात् ।
संविभाव्यं तु तज्ज्ञैः ॥

किं चान्यत् सम्प्रपूर्णा भवतु वसुमती नष्टदुर्भिक्षरोगा /
शान्तिर्गोब्राह्मणानां भवतु नरपतिः पातु पृथ्वीं समग्राम् // ना. शा_३७.३१ //

इति भरतीये नाट्यशास्त्रे गुह्यतत्त्वकथनाध्यायः सप्तत्रिंशः

नाट्यशास्त्रम् संपूर्णम्